श्रीमत्कविकुलतिलक-

श्रीमद्वादिराजतीर्थश्रीमत्पूज्यचरणविरचिता

# युक्तिमल्लिका

## गुणसौरभम्

श्रीसत्यप्रमोदतीर्थश्रीचरणविरचितया

विवृत्या

समलंकृतम्

सम्पादक :- केशव श्रीनिवासाचार्य कट्टि

प्रकाशक :- सत्यध्यान रामाचार्य कट्टि

सत्याभिज्ञविद्यापीठ, बेंगलूर-४.

१९८७

श्रीमत्कविकुलतिलक-

श्रीमद्वादिराजतीर्थश्रीमत्पूज्यचरणविरचिता

# युक्तिमल्लिका

## गुणसौरभम्

श्रीसत्यप्रमोदतीर्थश्रीचरणविरचितया

## विवृत्या

समलंकृतम्

सम्पादक :– केशव श्रीनिवासाचार्य कट्टि

प्रकाशक :– सत्यध्यान रामाचार्य कट्टि

सत्याभिज्ञविद्यापीठ, बेंगलूर–४.

१९८७

॥ श्रीदिग्विजयरामो विजयते ॥

# अनुग्रहाशंसनम्

अस्माकं प्रियशिष्येण कट्टीत्युपाह्वयेन श्रीनिवासाचार्यतनूजेन केशवेन, स्वकुमारस्य दिवङ्गतस्य रघूत्तमस्य स्मरणार्थं ग्रन्थोऽयं मुद्राप्य प्रकाशितः ।

तेन ग्रन्थस्यास्याध्येतारोऽध्यापकाश्च तं कुमारं सानुग्रहं स्मरिष्यन्ति इति नात्र वक्तव्यमस्ति ।

संप्रार्थयामहे अस्मदुपास्यं श्री भारतीरमणहन्मण्टपसमधिष्ठितं श्रीजानकीजानिं श्रीमूलरामचन्द्रं यत्कुमारमेनं तत्कुटुम्बं च ज्ञानभक्तिवैराग्यवितरणेन समनुगृह्णीयादिति ।

श्रीमदुत्तरादिमठाधीशाः

श्री १००८ श्रीसत्यप्रमोदतीर्थश्रीचरणाः ।

श्री १००८ श्रीमद्वादिराजतीर्थश्रीमत्पूज्यचरणाः




कामधेनुर्यथापूर्वं सर्वाभीष्टफलप्रदा ।
तथा कलौ वादिराजश्रीपादोऽभीष्टदः सताम् ॥

श्री १००८ श्री सत्याभिज्ञतीर्थश्रीपादाः



सत्प्रज्ञतीर्थोद्भवमच्युताङ्घ्रिश्रितं प्रपन्नालिभवार्तिशोषम् ।

शुद्धं विनिद्रं सदभिज्ञपादपद्मं भजे ज्ञानसुधासमृद्धम् ॥

श्री १००८ श्री सत्यप्रमोदतीर्थश्रीपादाः



श्रीसत्याभिज्ञतीर्थाङ्घ्रिसेवासम्प्राप्तवैभवान् ।
श्रीसत्यप्रमोदतीर्थार्यान्गुरून्वन्दे निरन्तरम् ॥

॥ श्रीदिग्विजयरामो विजयते ॥

# प्रास्ताविकं किञ्चित्

सुविदितमेवैतद्विदुषां यच्छ्रीवादिराजतीर्थश्रीचरणाः सतां समभीप्सितवितरणे दूरादधरीकृतसुरधेनवः समतिक्रान्तसुरतरवश्च सर्वशः संशोभन्त इति । तैरेतैर्महात्मभिर्विरचिताया गुरुभावप्रकाशिकाद्यनर्घप्रबन्धमणिमञ्जुमालायाः श्रीहयग्रीवचरणनलिनयुगलसमर्पिताया मध्यरत्नायितो विद्योतते युक्तिमल्लिकाख्योऽपूर्वो ग्रन्थवरः । अस्या युक्तिमल्लिकालतायाः प्राणपतिसिद्धान्तमहातरुसमाश्रिताया प्राणेश्वरप्रणयिनी भारतीदेव्येवाभिमानिनीति विज्ञायते । तथा हि, श्रीसुरोत्तमतीर्थाः सौरभसर्वस्वनिवेदनश्लोकव्याख्यानावसरे वर्णयन्ति । 'भारतीकृपयाऽस्य ग्रन्थस्य कृतत्वाद्ग्रन्थाभिमानिन्या तयैव तं परिच्छेदार्थं हरावर्पयति' इति ।

तत्र पञ्चसु सौरभेष्वाद्यं गुणसौरभं विष्णोः सर्वगुणोदीर्णतां सद्युक्तिभिः संस्थापयति । तदङ्गतया अद्वैत-चार्वाक-जैन-बौद्ध-तार्किक-प्राभाकरादिकुसमयान्निरस्यति । अनादिष्वपि वर्णेषु क्रमं व्युत्पाद्य प्रामाण्यस्वतस्त्वं च प्रतिपाद्य वेदानामपौरुषेयत्वं प्रामाण्यं चोपपादयति । वेदवाक्येषु मुखतः प्रतीयमानं विरोधं परिहृत्यैकवाक्यताऽऽपादनेन विष्णोर्गुणोत्कर्षे महातात्पर्यमवधारयति । न केवलमेतावत् । बुधजनमनोहरोऽयं ग्रन्थः सौरभान्तरप्रमेयजातमपि गन्धवहस्य वायोः प्रेरणानुग्रहेण तत्र तत्रासिन्नेव सौरभे संयोजयति । तदुक्तं ग्रन्थकारैरेव,

'अतो विचारवातोऽयं सौरभं सौरभान्तरे ।
संयोजयति तद्ग्रन्थः सोऽयं जनमनोहरः ॥' इति ।

मल्लिकाकुसुमं खलु सुरभिमकरन्देन भ्रमरानमरवरांश्च रञ्जयति । एवं शृङ्गारसाहित्यादिसौरभप्रवाहिणी सिद्धान्तमकरन्दसुधासंस्राविणी चैषा युक्तिमल्लिकावल्ली पामरानपि प्रमोदयति बुधान् प्रबोधयति विबुधांश्च प्रसादयति । एवमीदृश्या युक्तिमल्लिकायाः सुकृतमयः प्रवचनसन्दर्भः कर्मन्दीश्वराणां वन्द्यचरणानां श्रीवादिराजतीर्थश्रीचरणानां वृन्दावनसन्निधावेवास्माभिरलाभीति नूनं आनन्दतुन्दिला वयम् । यत्सत्यमत्रास्मासु तत्कारुण्यपरिपाक एव प्रविलसति ।

न खलु नाभिनन्दामः उडुपि श्रीसोदे मठाधिपतीन् श्रीविश्वोत्तमतीर्थश्रीपादान् येऽस्मानेतत्प्रवचनार्थं सोदेक्षेत्रे चातुर्मास्यव्रतस्वीकारायामन्त्रयामासुः प्रत्यहं समुपस्थाय प्रवचनं समशृण्वन्, तथा प्रवचनप्रतिपादितान्प्रमेयान्प्रबन्धरूपेण निबध्नातुं प्रैरयंश्च । अभिनन्दनीया एव च नूनं उडुपि श्रीशिरूरुमठाधीशाः श्रीलक्ष्मीवरतीर्थश्रीचरणा येऽप्यध्यैयत सादरं समुपस्थिता ग्रन्थवरमिमम् ।

ग्रन्थस्यास्यापूर्वं महिमातिशयं श्रीसुरोत्तमतीर्थास्तट्टीकाकारा एवं वर्णयन्ति—

'यत्राश्रुतचर्चा चर्चाऽस्ति युक्तयश्चाश्रुताः पुरा ।
तन्मूलं सा च टीकेऽयं किं मानुषकृतिर्भवेत्' ॥ इति ।

एवमीदृशस्य गभीरस्य ग्रन्थस्य विवृतिरस्माभिर्यद्व्यधायि तत्केवलं श्रद्धाजाड्याद्धीशुद्धये केवलं, न तु वैदुष्यभ्रान्त्यादिना कथं कथमपीत्यवश्यमत्रावेदयामः । तेन स्खलनेषु सत्स्वपि विदुषां न निन्द्याः स्मः ।

आशास्महे च सुदृढं विवृतिरियमस्मद्रचिता मन्दोपकृतिमावहेदेवेति ।

श्रीमदुत्तरादिमठाधीशाः
श्रीसत्यप्रमोदतीर्थश्रीचरणाः ।

॥ श्रीमद्धनुमद्भीमभध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
लक्ष्मीहयग्रीवाय नमः ॥

# अथ युक्तिमल्लिका

भक्त्या स्तुत्या विरक्त्या भजदमलजनौन्नत्यभूत्यर्पकाय
क्षित्यामत्यल्पभूत्येष्वपि कुजनकृतौद्धत्यभूत्याजकाय ।
कर्त्रे धर्त्रेऽथ हर्त्रे हयमुखहरयेऽमुत्र पात्रे नमस्ते
तस्मै कस्मैचिदस्मन्मनसि धृतकथाविस्मृतौ स्मारकाय ॥ १ ॥

॥ श्री दिग्विजयरामो विजयते ॥

श्रीमद्धनुमद्भीमभध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

राम रामेति रामेति रमे रामे मनोरमे ।
इत्युमायै शङ्करोक्तं मूलरामं सदा भजे ॥ १ ॥

शुद्धं प्रमाणमतुलं परतत्त्वविनिर्णये ।
आनन्दतीर्थो भगवान् प्रदिशेत्सुदृशं मुनिः ॥ २ ॥

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् ।
सुलभं तान्भजे भक्त्या जयतीर्थादिसद्गुरून् ॥ ३ ॥

कामधेनुरिव स्वानां सकलाभीष्टदायकः ।
करुणालुर्वादिराजश्रीपादो मम सुश्रिये ॥ ४ ॥

अस्मद्देशिकपादाब्जं संप्रणम्य यथामति ।
व्याकुर्वे सरसां युक्तिमल्लिकां धीविशुद्धये ॥ ५ ॥

प्राचीना विद्यते युक्तिमल्लिकाविवृतिः परा ।
तदुक्तार्थस्पष्टने मे यतोऽयं क्षम्यतां बुधैः ॥ ६ ॥

ग्रन्थादौ स्वेष्टदेवतास्तुतिनतिरूपं मङ्गलमाचरति भक्त्येति ।

भक्तिरिति लक्ष्म्या अभिधानम् । 'भक्त्यै नमोऽस्तु भवसागरतारकायै' इति प्रयोगात् । भक्त्या सहिताय हयमुखहरये नमः इत्यन्वयः । तेन लक्ष्म्या अपि विष्णुसाहित्येन वन्दनं कृतं भवति । ग्रन्थस्य श्रीकरत्वं च द्योत्यते । भक्त्येतिपदं आवर्तते । स्तुत्या, विरक्त्या, भजदमलेत्यादिना च प्रत्येकमन्वेति । भक्तिपूर्विके एव स्तुतिविरक्ती अभिमतं साधयतः । 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा' इत्युक्तेः । 'तत्पादसेवारतिरेष नैच्छत्तथाऽपि भोगान्ननु सा विरक्तिः' इति च । एवं भजदमलेत्युक्तं भजनमपि भक्तिसहितमेव सफलम् । 'ये भजन्ति तु मां भक्त्या' इति गीतोक्तेः । एतेन नैर्गुण्यभावनां निगूह्य मुखमात्रतः कृतं "भज गोविन्दं मूढमते" इत्यादिकं परेषां स्तुतिभजनादिकं, तथा जनो नमेन्नापरथेति मत्वा चतुर्थाश्रमस्वीकारेण प्रदर्शितं वैराग्यं च इत्येते अनर्थफलके एवेति ज्ञाप्यते । ते इति अपरोक्षतो निर्देशेन हयग्रीवस्य प्रत्यक्षत्वं, तस्मै इति परोक्षतो निर्देशेन च तस्य साकल्येन अज्ञेयत्वं च बोध्येते ।

अत्र, कर्त्रे धर्त्रेऽथ हर्त्रे इति विशिष्टत्वं, भूत्यर्पकाय औद्धत्यभूत्याजकायेति इष्टत्वं, कथाविस्मृतौ स्मारकाय इति स्वविषयग्रन्थप्रबोधादिसंपादकत्वलक्षणमधिकृतत्वं चेत्येवं हयग्रीवस्य हरेरेव नम्यत्वप्रयोजकधर्माश्च सूचिताः ।

तथा, ग्रन्थस्यास्यानुबन्धचतुष्टयमपि तत्स्मरणस्य महाफलहेतुत्वात् ज्ञाप्यते । हयमुखहरिरेव विषयः । औन्नत्यभूतिलक्षणमोक्ष एव प्रयोजनम् । भक्त्या भजन्तः अमलजनाः सात्विकप्रकृतयः अधिकारिणः । यथायथं संबन्ध इति ।

कर्त्रे धर्त्रेऽथ हर्त्रे इत्यादिना हरेर्जगज्जन्मादिकर्तृत्वं लक्षणं, कर्तृत्वाद्युक्त्या विमतं सकर्तृकं कार्यत्वादित्यादियुक्तयः प्रमाणानि चोपदर्शितानि । तेन तन्नमनोपपादकं तत्स्वरूपनिर्धारणं च कृतं द्रष्टव्यम् ।

गुणिनिष्ठगुणाभिधानार्थकस्तुत्येतिपदेन, भूत्यर्पकत्व-कुजननिरासकत्व-जन्मादिहेतुत्वप्रभृतिगुणानुवर्णनेन, आहरति सर्वान् गुणान् इति व्युत्पत्त्या गुणपूर्त्यभिधायिहरिपदेन च गुणसौरभप्रमेयं संग्रहेण निरूपितम् । हरौ दोषारोपं कुर्वद्भिः कुजनैः कृतानां कुसमयानां औद्धत्यनिमित्तयुक्त्याभास-त्याजनेन निरासकत्वोक्त्या शुद्धिसौरभार्थः सङ्क्षिप्याभिहितः । अमलजनाः कुजनाः, अत्यल्पभक्ताः इत्यादिवर्णनेन भेदसौरभसारः संदर्शितः । असतः शशविषाणादेः सृष्ट्याद्यनुपपत्तेः, जगत्स्रष्टृत्वाद्यभिधानेन विश्वसौरभप्रति-पाद्यार्थः सङ्क्षेपेण प्रतिपादितः । औन्नत्यभूत्यर्पकायेति मुक्तिप्रदत्वोक्त्या फलसौरभप्रमेयं संगृहीतम् ॥ एवं सङ्क्षिप्य सर्वशास्त्रार्थवर्णनेन तत्प्रपञ्च-जिज्ञासाऽध्येतॄणामुत्पादिता भवति ॥ १ ॥

**पारं भवाख्यजलधेर्भुवनैकसारं स्वैरं कृतोरुविधवेदपथप्रचारम् ।**
**आरंजितामरजनं सुखचिच्छरीरं धीरं स्मरामि हृदि सत्यवतीकुमारम् ॥२॥**

पारमिति । भवाख्यजलधेः अनाद्यज्ञानात् पारयति स्वभृत्यान् इति पारः तम् । तदुक्तं 'अनाद्यज्ञानपाराय नमो वरवराय ते' इति । यद्वा पारः मोक्षः, तं ददातीति पारः मोक्षदः तम् । यथोक्तं 'ज्ञानिनां मोक्षदश्च सः' इति । पारदे पारव्यपदेशः अन्नदेऽन्नव्यपदेशवत् । अथवा 'पार्यते सर्वमन्यैर्न यत्पार्यते' इत्युक्तदिशा इतरैः अशक्ये भवोत्तारणे समर्थतया पारः तम् । स्वैरं स्वरूपप्रज्ञया स्वेच्छया एव । न तु परोपदेशमपेक्ष्य वा परप्रेरणया वा । कृतः उरुविधानां वेदपथानां उरुविधः प्रचारः येन स तम् । चतुर्णां वेदानां विभागः तन्निर्णायकसूत्रप्रणयनं च । पञ्चमवेदानां इतिहास-पुराणानां निर्माणम् । सर्वेषां साक्षादुपदेशः संप्रदायप्रवर्तकत्वं च ।

सत्यवत्याः कुत्सितं संसारं मारयतीति कुमारः । तेन सुखचिच्छरीर-इत्येतेन न विरोधः ॥ २ ॥

भक्तिरिति लक्ष्म्या अभिधानम् । 'भक्त्यै नमोऽस्तु भवसागरतारकायै' इति प्रयोगात् । भक्त्या सहिताय हयमुखहरये नमः इत्यन्वयः । तेन लक्ष्म्या अपि विष्णुसाहित्येन वन्दनं कृतं भवति । ग्रन्थस्य श्रीकरत्वं च द्योत्यते । भक्त्येतिपदं आवर्तते । स्तुत्या, विरक्त्या, भजदमलेत्यादिना च प्रत्येकमन्वेति । भक्तिपूर्विके एव स्तुतिविरक्ती अभिमतं साधयतः । 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा' इत्युक्तेः । 'तत्पादसेवारतिरेष नैच्छत्तथाऽपि भोगान्ननु सा विरक्तिः' इति च । एवं भजदमलेत्युक्तं भजनमपि भक्तिसहितमेव सफलम् । 'ये भजन्ति तु मां भक्त्या' इति गीतोक्तेः । एतेन नैर्गुण्यभावनां निगूह्य मुखमात्रतः कृतं "भज गोविन्दं मूढमते" इत्यादिकं परेषां स्तुतिभजनादिकं, तथा जनो नमेन्नापरथेति मत्वा चतुर्थाश्रमस्वीकारेण प्रदर्शितं वैराग्यं च इत्येते अनर्थफलके एवेति ज्ञाप्यते । ते इति अपरोक्षतो निर्देशेन हयग्रीवस्य प्रत्यक्षत्वं, तस्मै इति परोक्षतो निर्देशेन च तस्य साकल्येन अज्ञेयत्वं च बोध्येते ।

अत्र, कर्त्रे धर्त्रेऽथ हर्त्रे इति विशिष्टत्वं, भूत्यर्पकाय औद्धत्यभूत्याजकायेति इष्टत्वं, कथाविस्मृतौ स्मारकाय इति स्वविषयग्रन्थप्रबोधादिसंपादकत्वलक्षणमधिकृतत्वं चेत्येवं हयग्रीवस्य हरेरेव नम्यत्वप्रयोजकधर्माश्च सूचिताः ।

तथा, ग्रन्थस्यास्यानुबन्धचतुष्टयमपि तत्स्मरणस्य महाफलहेतुत्वात् ज्ञाप्यते । हयमुखहरिरेव विषयः । औन्नत्यभूतिलक्षणमोक्ष एव प्रयोजनम् । भक्त्या भजन्तः अमलजनाः सात्विकप्रकृतयः अधिकारिणः । यथायथं संबन्ध इति ।

कर्त्रे धर्त्रेऽथ हर्त्रे इत्यादिना हरेर्जगज्जन्मादिकर्तृत्वं लक्षणं, कर्तृत्वाद्युक्त्या विमतं सकर्तृकं कार्यत्वादित्यादियुक्तयः प्रमाणानि चोपदर्शितानि । तेन तन्नमनोपपादकं तत्स्वरूपनिर्धारणं च कृतं द्रष्टव्यम् ।

गुणिनिष्ठगुणाभिधानार्थकस्तुत्येतिपदेन, भूत्यर्पकत्व-कुजननिरासकत्व-जन्मादिहेतुत्वप्रभृतिगुणानुवर्णनेन, आहरति सर्वान् गुणान् इति व्युत्पत्त्या गुणपूर्त्यभिधायिहरिपदेन च गुणसौरभप्रमेयं संग्रहेण निरूपितम् । हरौ दोषारोपं कुर्वद्भिः कुजनैः कृतानां कुसमयानां औद्धत्यनिमित्तयुक्त्याभासत्याजनेन निरासकत्वोक्त्या शुद्धिसौरभार्थः सङ्क्षिप्याभिहितः । अमलजनाः कुजनाः, अत्यल्पभक्ताः इत्यादिवर्णनेन भेदसौरभसारः संदर्शितः । असतः शशविषाणादेः सृष्ट्याद्यनुपपत्तेः, जगत्स्रष्टृत्वाद्यभिधानेन विश्वसौरभप्रतिपाद्यार्थः सङ्क्षेपेण प्रतिपादितः । औन्नत्यभूत्यर्पकायेति मुक्तिप्रदत्वोक्त्या फलसौरभप्रमेयं संगृहीतम् ॥ एवं सङ्क्षिप्य सर्वशास्त्रार्थवर्णनेन तत्प्रपञ्चजिज्ञासाऽध्येतॄणामुत्पादिता भवति ॥ १ ॥

**पारं भवाख्यजलधेर्भुवनैकसारं स्वैरं कृतोरुविधवेदपथप्रचारम् ।**
**आरंजितामरजनं सुखचिच्छरीरं धीरं स्मरामि हृदि सत्यवतीकुमारम् ॥२॥**

**पारमिति** । भवाख्यजलधेः अनाद्यज्ञानात् पारयति स्वभृत्यान् इति पारः तम् । तदुक्तं 'अनाद्यज्ञानपाराय नमो वरवराय ते' इति । यद्वा पारः मोक्षः, तं ददातीति पारः मोक्षदः तम् । यथोक्तं 'ज्ञानिनां मोक्षदश्च सः' इति । पारदे पारव्यपदेशः अन्नदेऽन्नव्यपदेशवत् । अथवा 'पार्यते सर्वमन्यैर्न यत्पार्यते' इत्युक्तदिशा इतरैः अशक्ये भवोत्तारणे समर्थतया पारः तम् । **स्वैरं** स्वरूपप्रज्ञया स्वेच्छया एव । न तु परोपदेशमपेक्ष्य वा परप्रेरणया वा । कृतः उरुविधानां वेदपथानां उरुविधः प्रचारः येन स तम् । चतुर्णां वेदानां विभागः तन्निर्णायकसूत्रप्रणयनं च । पञ्चमवेदानां इतिहासपुराणानां निर्माणम् । सर्वेषां साक्षादुपदेशः संप्रदायप्रवर्तकत्वं च ।

सत्यवत्याः कुत्सितं संसारं मारयतीति कुमारः । तेन सुखचिच्छरीर-इत्येतेन न विरोधः ॥ २ ॥

यत्पूर्वं त्वमपूर्वसिन्धुमतरस्सद्वन्द्य मध्वाचला-
दुद्यातश्शतयोजनं परमदश्शंसन्ति सन्तः क्षितौ ।
चित्रं जैत्र भवच्चरित्रमधुना यद्वेदवार्धिं तर-
न्नित्यं कोटिसहस्रयोजनमपि त्वं राजवद्राजसे ॥ ३ ॥

**यत्पूर्वमिति** । वायोः अवतारत्रयेऽपि सिन्धुतरणलक्षणं महिमानं, तत्रापि उत्तरोत्तरत्रातिशयेन चित्रचरित्रत्वं च वर्णयति । सद्भिः गरुडशेषादिभिः वन्द्यः इति वा, सन् स्वातन्त्र्यात्सच्छब्दवाच्यः श्रीपतिरेक एव वन्द्यो यस्येति वा सद्वन्द्यः । **पूर्वं** त्रेतायाम् । **अपूर्वसिन्धुं** दक्षिणसमुद्रम् । अचलात् ल्यब्लोपनिमित्ता पञ्चमी । अचलं रामं नत्वा । सीतान्वेषणे अचलां प्रतिज्ञामारुह्य । अचलं महेन्द्रपर्वतं निष्पीड्य । भीमावतारे । **पूर्वं** द्वापरे । **अपूर्वसिन्धुं** दुरत्ययं कौरवसैन्यसागरम् । शतशब्दो बहुत्ववचनः । 'शब्दो बहुत्ववचनः शतमिती'त्युक्तेः । योजनशब्दः शत्रुसैन्यस्य यथाभागमयनेष्ववस्थित्यात्मकव्यूहपरः । **शतयोजनं** बहुधा व्यूह्य प्रत्यवस्थितम् । **अचलात्** परैर्दुर्भेद्यात् अज्ञातवासात् उद्यातः उत्तीर्णः । मध्वावतारे । **वेदवार्धेः** अपूर्वत्वं इदंपूर्वताशून्यत्वं अनादित्वम् । **नित्यत्वं** वर्णक्रमस्वरैरेकप्रकारत्वम् । **अचलात्** । ल्यब्लोपः । अचलं भाष्यरचनाशपथं कृत्वा । अचलं, देवं वेदव्यासं अभिवन्द्य । अचलात् हैमवतात् बदरिकाश्रमात् उद्यातः । **शतयोजनम्** । शतानि अनन्तानि । योजनानि पदपदार्थयोः संबन्धरूपा योगाः । पदानां अन्विततया योजनानि च यस्य तम् । वेदवार्धेस्तरणं नाम सूत्रानुकूल्येनार्थवर्णनम् । इमं चरित्रमहिमानं न केवलं क्षितौ सन्तः शंसन्ति किं नाम मन्त्रवर्णोऽपि शंसति 'कश्छन्दसां योगमावेद धीरः को धिष्ण्यां प्रतिवाचं पपाद' इति । **कः** भाविचतुर्मुखो मध्व एव वेदानां अनन्तानि योजनानि आवेद इत्याशयः । अत्र राजवद्राजसे इत्यनेन मध्वस्य वेदान्तराज्यचक्रवर्तिनः तिस्रः शक्तयो ध्वन्यन्ते आह्लादनं, तापनं, प्रकाशनं चेति ।

तदुक्तं सुमध्वविजये 'उदयमहिमरोचिश्चक्रवर्ती त्रिशक्तिः' इत्यत्र । सकलसज्जननिकराणामाह्लादकत्वं, अशुभनिकराणां तापकत्वं परापरतत्त्वप्रकाशकत्वं चेति शक्तित्रयं बोध्यम् । यद्वा सर्वत्र हे अपूर्व इति पदच्छेदः । 'प्रापुर्द्विजेन्द्रास्तमपूर्वपूरुषं' इति सुमध्वविजयोक्तेः । सर्वेभ्यो जीवेभ्योऽग्रे जातः अग्र्यः श्रेष्ठश्च । न विद्यते पूर्वः अग्र्यो यस्मादिति विग्रहः । 'अग्रजं यः ससर्जाजमग्र्याकृतिं' इति वचनात् ॥ ३ ॥

**व्यासाय भवनाशाय श्रीशाय गुणराशये ।**
**हृद्याय शुद्धविद्याय मध्वाय च नमो नमः ॥ ४ ॥**

**व्यासायेति** । प्रणतयोः पुनः प्रणामः स्वचिकीर्षितग्रन्थोपजीव्ययोः सूत्रभाष्ययोः कर्तृत्वनिमित्तेन विशेषानुग्रहार्थश्च । **शुद्धविद्यायेति** । गुरुसंसेवनलब्धत्वेन शुद्धा नियतयथार्था प्रलयेऽपि तिरोभावविधुरा विद्या वृत्तिज्ञानमपि यस्य तस्मै । विद्याशब्दस्य यथार्थज्ञानतत्साधनयोर्योगरूढिभ्यां प्रवृत्तिः । शुद्धा अपव्याख्याननिराकरणेन शिष्यचेतसि स्थिरीकृता विद्या ब्रह्ममीमांसादिका येन स तस्मै इति वा । **हृद्याय** समग्रगुरुलक्षणोपेततया शिष्यचेतोनयनाभिनन्दनाय ॥ ४ ॥

**श्रीशस्ते सुश्रियं दद्यादायुर्वायुसुतप्रियः ।**
**भूमिं ते वामनो दद्यादरीन्हन्तु नृकेसरी ॥ ५ ॥**

एतद्ग्रन्थस्य श्रोतारं प्रवक्तारं च निर्विघ्नपरिसमाप्तेः फलप्राप्तेश्चानुकूलाभिराशीभिरनुगृह्णाति **श्रीश इति** ॥ **अरीन्** बाह्याभ्यन्तरान् । भूमिं इत्युपलक्षणं अन्नपाने च । **आयुः** 'श्रवणादि विना नैव क्षणं तिष्ठेत्कथञ्चन' इति वायुसुतोपदिष्टरीत्या निरन्तरं सच्छास्त्रविचारे परिनिष्ठितं मनः यावदायुरनिशं यत्र भवेत्तादृशं आयुः दद्यात् । ते ते इति वीप्सया आशिषां

फलाव्यभिचारमभिप्रैति । सुश्रियं शोभनां ज्ञानभक्तिवैराग्यलक्षणां सम्पदम् ॥ ५ ॥

**न वित्तैरुन्मत्ता न च कुहकदुर्मन्त्रबलिनो**
**न वा मिश्रैर्मिश्रा न च कुजनसाचिव्यसहिताः ।**
**न दुश्शास्त्रं शस्त्रं विरसमुपजीव्योद्धतधियो**
**हयग्रीवं देवं वयमिममुपास्येव कृतिनः ॥ ६ ॥**

स्वस्य कृतित्वप्रयोजकं हयग्रीवोपासनमेव नान्यदिति प्रतिजानीते **न वित्तैरिति ।**

**हयग्रीवस्य मध्वस्य (विद्यानिधिगुरोर्गुरोः) वाण्या विद्यागुरोर्गुरोः ।**
**कृपया वादिराजोऽहं रचये युक्तिमल्लिकाम् ॥ ७ ॥**

**वाण्याः** एतद्ग्रन्थाभिमानिन्याः । कृपया निमित्तेन, कृपातिशयोद्देशेन च । तेन रचये इति आत्मनेपदोपपत्तिः । वाण्या ग्रन्थाभिमानित्वं च विष्णौ सौरभसर्वस्वनिवेदयितृत्वेनाग्रे वक्ष्यते । युक्तयो मल्लिका इव बुधजन-मनो वासयन्त्यो यस्यां सा ताम् ॥ मध्वमतवल्ल्या नामेदम् ॥ ७ ॥

**बौद्धजैनागमौ पूर्वपक्षौ सर्वागमस्य हि ।**
**ततः परस्ताज्जातेषु मतेषु च यथाक्रमम् ।**
**पूर्वः पूर्वः पूर्वपक्षो यावन्मध्वमतोदयः ॥ ८ ॥**
**अन्ते सिद्धस्तु सिद्धान्तो मध्वस्यागम एव हि ।**
**निर्णेतुं शक्यते युक्तायुक्तपक्षविमर्शिभिः ॥ ९ ॥**
**अ(त)स्मादुत्तरपक्षोऽन्यो यस्मान्नाद्यापि दृश्यते ।**
**तस्मात्स एव सिद्धान्त इति निश्चित्य चेतसा ॥ १० ॥**
**अवलम्ब्य मतं सर्वोन्नतं श्रुतिपुरस्कृतम् ।**
**मयेत्थं युक्तिरुचिना क्रियते युक्तिमल्लिका ॥ ११ ॥**

मध्वस्यागमादितरे जैनाद्याः सर्वेऽपि प्रमाणबहिष्कृताः अत एव दूष्याः पूर्वपक्षाः । साधकप्रमाणत्रयसहिततया निष्पन्नत्वेन अन्ते सिद्ध एव योगरूढ्या सिद्धान्तपदवाच्यः । तादृशश्च मध्वागम एव । न हि प्रमितस्य कालत्रयेऽपि तस्य दूषणं संभवति । इतरेषु तु सिद्धान्तशब्दः पारिभाषिकः । तस्मात् मध्वागममवलम्ब्यैवैतद्ग्रन्थस्य प्रवृत्तिरित्याह चतुर्भिः बौद्धेत्यादिना ॥८–११॥

**त्वं चण्डालः पशुर्म्लेच्छश्चोरो जारः खरः कपिः ।**
**कुण्डो गोलक इत्याद्या या निन्दा लोकसंमताः ।**
**तास्सर्वास्सर्वजीवैक्यवादे स्युर्हि परात्मनि ॥ १२ ॥**

परप्रमेये मायावादस्य भगवन्निन्दात्मकत्वं द्योतयति **त्वं चण्डाल इति** ॥ "परदारेषु जायेते तौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डः स्यात् मृते भर्तरि गोलकः" ॥ मनु० ॥ १२ ॥

**ब्रह्मैव हीनयोनीस्ताः प्राप्य स्वेनैव पाप्मना ।**
**संसरेच्चेदियं सर्वा गाली कस्य गले वद ॥ १३ ॥**

ननु चिदैक्यवादे कथमिदं दूषणमित्यत आह **ब्रह्मैवेति** ॥ चिदैक्यस्य नित्यसिद्धत्वेन न तच्छास्त्रसिद्धान्तः संभवति । नापि निर्विशेषतया ज्ञातृज्ञेय-रहितस्य ब्रह्मणस्तन्मते ज्ञानरूपचिदात्मकता घटते । अतो जीवैक्यमेव ब्रह्मणः परेण शास्त्रार्थतया एष्टव्यम् । तेनोक्ता सर्वा गाली ब्रह्मणः स्यादेवेति भावः ॥ १३ ॥

**अन्धश्च बधिरो मूकः पंगुः पण्डो विनासिकः ।**
**इत्याद्या व्यङ्गताहेतोर्या निन्दा लोकसंमताः ।**
**तास्सर्वाश्च निराकारवादे किं न स्युरीश्वरे ॥ १४ ॥**
**विद्याविनयहीनस्त्वं निर्दयो निर्व्रतो शुचिः ।**
**औदार्यधैर्यशौर्याद्यैर्हीन इत्यादिकाश्च याः ॥ १५ ॥**

**सद्गुणाभावतो निन्दास्तास्तु नैर्गुण्यवादिनाम् ।**
**मते स्युर्ब्रह्मणि परे सर्वास्सर्वस्य संमताः ॥ १६ ॥**

परप्रमेयस्य निराकारत्वनिर्गुणत्वोक्त्या प्राप्तां भगवन्निन्दामाह त्रिभिः ॥ अन्धश्चेत्यादिना ॥ १४–१६ ॥

**या च ग्रामतटाकादेरारामादेः कृतस्य हि ।**
**मिथ्यात्वकथनान्निन्दा मत्सरग्रस्तचेतसाम् ।**
**सा सर्वा सर्वमिथ्यात्ववादे स्यादेव माधवे ॥ १७ ॥**

अपरप्रमेयेऽपि भगवन्निन्दाऽऽत्मकत्वं मायिमतस्य व्यनक्ति **या चेति** ॥ **मत्सरेति** । सत्यजगत्स्रष्टृत्वेन प्राप्तस्योत्कर्षस्यासहनेत्यर्थः । तथोक्तं संग्रहरामायणे 'न मद्वशोऽसाविति चित्ततोदं मात्सर्यमार्या समुदाहरन्ति' इति । एतेन मायावादे कृतघ्नताऽऽख्यो महादोषो व्युत्पादितो भवति ॥ १७ ॥

**अज्ञोऽसीति तु या निन्दा सा मायाश्रयतोक्तितः ।**
**भगवत्युच्यते कर्मबद्धत्वोक्त्या च पापिता ॥ १८ ॥**

एकजीववादे प्राप्तां भगवन्निन्दामाह **अज्ञोऽसीति** ॥ १८ ॥

**इत्थं विचार्यमाणेऽभूद्यस्मान्मायाविनां मतम् ।**
**सर्वं च लोकसंमत्या भगवन्निन्दनात्मकम् ॥ १९ ॥**

**लोकसंमत्येति** । लोके पामरः स्वयं गुणदरिद्रोऽपि केनचित् त्वं गुणहीन इत्युक्ते स्वस्य निन्दां कृतां मन्यते । एवं दुर्लक्षणाज्ञोऽपि सन् त्वं व्यज्ञ इति वचने ॥ एवंस्थिते, अनन्तकल्याणगुणाकरस्य भगवतो निर्गुणत्वोक्तिः, चिदानन्दात्मकमङ्गलविग्रहवतो निरवयवत्वोक्तिः इत्यादिकं कथमेव तन्निन्दा न स्यादिति भावः ॥ १९ ॥

**अतो मायावादमतान्नाम्नैवातिजुगुप्सितात् ।**
**भीतोऽहमभजं तत्ववादिनामेव पद्धतिम् ॥ २० ॥**

**अत इति ।** दुःशास्त्रश्रवणमात्रस्यापि पातित्यहेतुत्वात् सच्छास्त्राभ्यासस्य पुमर्थसाधनत्वाच्चेत्यर्थः । क्रमेण भीतः, अभजम् इत्युभयत्रान्वयः । तदुक्तं पद्मपुराणे, 'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते' । इति, 'शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् । येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपी'ति च । ज्ञानिनोऽपि मदादयः अशुभाद्बिभ्यति शुभं च कामयन्ते । तदुक्तं अनुव्याख्याने तृ. च. ६ अधिकरणे 'बिभ्यति स्माशुभान्नित्यं सकामाश्च शुभे सदा' इति । किमुत जिज्ञासवः इति भावः ॥ २० ॥

**परस्मात्पूर्वदौर्बल्ये निषेधाद्विधि(च्छ्रुति)बाधने ।**
**यतो महाऽऽग्रहस्तेषां सर्वेषां विदुषामपि ॥ २१ ॥**
**तत्पूर्वसर्वराद्धान्तसिद्धार्थानां निषेद्धरि ।**
**परे च तत्ववादेऽस्मिन्गरीयसि भरो मम ॥ २२ ॥**

**परस्मादिति ॥** 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इति सूत्रम् । अस्यार्थो भाट्टसंग्रहे-- निमित्तद्वयस्य पौर्वापर्ये पूर्वस्य दौर्बल्यमुत्तरेण बाधः । प्रकृतिवत् यथा प्रकृतावाम्नातानां कुशादीनां 'शरमयं बर्हिर्भवति' इति विशेषवचनैः शरादिभिर्बाधस्तथेति । अत्र परस्मात्पूर्वबाधो भाट्टादिभिरङ्गीकृतः । निर्गुणवाक्यात्सगुणश्रुतिबाधं वदता मायावादिना निषेधाद्विधिबाधोऽङ्गीकृतः । इमौ च न्यायौ परिरीत्यैव । एवमपि तत्त्ववादस्योत्तमत्वं सेत्स्यतीत्यभ्युपेत्योदाहृतौ । पूर्वन्यायस्य प्रमोत्तरभ्रमादौ, उत्तरस्य च वैधीहिंसादौ व्यभिचारः स्फुट एव । उक्तश्च न्यायामृते । वस्तुतस्तु, 'द्विविधं बलवत्त्वं चे'त्यादिब्रह्मतर्कोक्तरीत्या प्राबल्यं अवसेयम् ॥ २१ ॥ २२ ॥

**तत्परत्वान्निषेद्धृत्वादन्ते सिद्धेः प्रभुस्तुतेः ।**
**नाम्ना चात्युल्लसन्त्यासीद्वल्ली ते युक्तिमल्लिके ॥ २३ ॥**

तत्परत्वादित्यत्र तदितिभिन्नं पदम् । तस्मादित्यर्थः । पञ्चभिर्हेतुभिः सम्बध्यते ॥ २३ ॥

**न स्नेहान्न च विस्नेहाद्युक्त्याकृष्टेन केवलम् ।**
**यतः कृताऽसि तत्तर्करसिकानां मुदे भव ॥ २४ ॥**

**न स्नेहादिति ।** यद्यपि स्वमते स्नेहातिशयः परमतेषु च तद्विरुद्धः प्रद्वेषाख्यो विस्नेहश्च वर्तेते एव, तत्पूर्वकमेव च ग्रन्थप्रणयनं, तथापि ब्रह्ममीमांसोक्तयुक्त्यनुगृहीतत्वाननुगृहीतत्वनिमित्ताभ्यामेव तौ, न केवलं रागद्वेषप्रयुक्तौ । ग्रन्थकृतिश्च तद्युक्त्याकृष्टतयैवेत्याशयः ॥ २४ ॥

**हृद्यपद्यरसस्निग्धां सद्यो हृद्रोचनोद्यताम् ।**
**विद्यामद्यानवद्यां मे को द्वेष्टयुद्धतपद्धतिः ॥ २५ ॥**

को द्वेष्टीति प्रश्नः । उद्धतपद्धतिरित्युत्तरम् । द्वेष्ट्येव स केवलम् । कथमपि दूषणेऽसमर्थ एव । तदुक्तं 'कटाक्षेणापि वीक्षितुम् । न क्षमन्ते विमतयः' इति ॥ २५ ॥

**अधुना विधुना रुद्धं मधु नासीन्मधुव्रत ।**
**उदिते मुदितेऽब्जे स्याददितेर्विदिते सुते ॥ २६ ॥**

एतद्ग्रन्थनलिने निगूढं मकरन्दरसं पिपासूनां अपि अज्ञानावरुद्धतयाऽसमर्थानां मधुव्रतायितानां सतां उत्कण्ठां, सूर्यवदर्थप्रकाशनपरा ज्ञानिनः यथाकालं पूरयेयुरिति अर्थान्तरन्यासमुखेनाशास्ते **अधुनेति** ॥ २६ ॥

**तार्णे वौकसि पार्णे वा तापसो भूप सोऽवसत् ।**
**तिथौ ते तिथिरेतद्वद्विद्वान्क्वागण्यपुण्यदः ॥ २७ ॥**

विपक्षे बाधकोक्त्या श्रोतॄनुन्मुखीकरोति **तार्णे इति ॥ तापसः** प्रवचनाख्यतपोनिरतः । तार्णे पार्णे वा ओकसि अवसत् । स्वेन करिष्यमाणस्योपदेशस्य प्रतिफलं धनादिकं नापेक्षते इत्यर्थः । शुश्रूषूणामगण्यपुण्यदः एवंभूतो गुरुः स्वयं अतिथिवत् पूर्वपुण्यात् गृहद्वारमुपनतो यदा तदाऽपि चेद्राजवदैश्वर्यमदेन यः श्रवणविमुख उदास्ते स मन्दभाग्यः शोच्य इति भावः । तदुक्तं 'न चेदिहावेदीन्महती विनष्टिरि'ति ॥ २७ ॥

**तुलया मलयाद्र्युत्थचन्दनेनेन्धनं खलः ।**
**समं समन्तात्कुरुताद्ग्रन्थौ गन्धं करो(तु)ति कः ॥ २८ ॥**

**तुलयेति** । अत्र मलयाद्रिः सदागमाः । चन्दनं मध्वशास्त्रम् । ग्रन्थिः महातात्पर्यम् । गन्धः सर्वोत्तमो विष्णुः । सद्देहस्सुखगन्धश्चेत्युक्तेः । इन्धनं, सदागमबहिष्कृतं विष्णौ तात्पर्यशून्यं मायावादादिकम् । खलः कुसमयी । तथा च विष्णुपूजाङ्गं परमपुमर्थहेतुः चन्दनायितं मध्वशास्त्रम् । अतादृशं इन्धनायितं दुर्गन्धोपेतं समयान्तरम् । तयोः साम्यमाशासानः खल एवेति हृदयम् ॥ २८ ॥

**सूक्तिरत्नस्वभावाभा पूज्या त्याज्या न कोविदैः ।**
**गुणे मणेर्हि मात्सर्यं कार्यं नार्यैः कदाचन ॥ २९ ॥**

मणेः उत्तमस्य हरेः । 'मणिर्मुखं प्रधानं चेत्युत्तमस्य वचो भवेदि'त्यभिधानम् । गुणे मात्सर्यं मिथ्यात्वकथनेन अपलापः ॥ २९ ॥

**विदुषोऽविदुषोपीष्टा कं जनं रंजयेन्नगीः ।**
**भ्रमरैरमरैश्चार्थ्यं कुसुमं, (कः पु)कोऽसुमांस्त्यजेत् ॥ ३० ॥**

**गीः** मध्वशास्त्रम् । अविदुषोऽपि रञ्जयेत् बालसङ्घमपि बोधनेन आनन्दयेत् । कुसुमं अनुव्याख्यान-नलिनम् । भ्रमरैः चञ्चरीकचित्तैः । अमरैः जयतीर्थार्यैः । चः अप्यर्थः । अर्थ्यं प्रगुणभावनया सेवितम् । कोऽसुमान् त्यजेत् इत्याक्षेपः । यस्त्यजेत्स गतासुतुल्यः इति ध्वनिः । 'जीवञ्छवो यस्तु न वेद गन्धं' इति भागवतोक्तेः । इदं श्लोकत्रयं मध्वमतवल्ल्यां युक्तिमल्लिकायामपि यथायथमन्वेति ॥ ३० ॥

**विद्याऽविद्याविभागज्ञः किमज्ञः प्राज्ञवद्भवेत् ।**
**अंधस्येन्दूदयेप्यान्ध्यमन्धकारोदयेऽपि हि ॥ ३१ ॥**

**विद्येति** । **विद्या** परापरविषयिणी प्रमा । **अविद्या** भ्रमः । एतयोः **विभागं** विवेकम् । **प्राज्ञवत्** श्रीमध्ववत् । **अज्ञः** पञ्चाख्यातिवादिजनः । नैव जानातीति भावः । **अन्धस्य** एवंविधमिथ्याज्ञानिनः । तत एव **अन्धस्य** अन्धे तमसि निमग्नस्य । **इन्दूदये,** उपलक्षणम्, स्थितिकाले । **अन्धकारोदयेऽपि** महाप्रलये च । **आन्ध्यमेव** न कदाऽपि प्रकाशदर्शनम् । नित्यदुःखमेवेति हृदयम् । ज्ञानमात्रं प्रमैवेति वा भ्रम एवेति वा मन्वानानां तयोर्विभागमपलपतां तम एव परायणमिति ॥ ३१ ॥

**गृहीतमर्थं यः पश्चान्न जहाति स वै महान् ।**
**तृणग्राहीमणिर्मान्यः पौर्णमासीविधुश्शशी ॥ ३२ ॥**

**गृहीतं** वृषभरूपेणाधिगतं **अर्थं** सर्वमूलप्रमेयम् । **पश्चात्** जन्मान्तरेऽपि । **न जहाति** किन्तु टीकाप्रणयनेन बोधयति । **स** जयतीर्थार्यः महान्वै । तदुक्तं 'स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रही जनः' इति । यद्वा **गृहीतं** उपनतम् । **अर्थं** अप्रमेयमतेः मध्वस्य शास्त्रप्रमेयम् । **पश्चात् जहाति,** विफलधीः त्यजति, स न वै महान् नीच एव । तदुक्तं सुमध्वविजये 'चूर्णकृद्विविधेत्यादिना सदृशोऽस्ति नीचधीरि'त्यन्तेन ॥ अधिगतशास्त्रार्थविस्मरणं महादोष इति भावः ॥ ३२ ॥

**गृह्णीयात्तिन्त्रिणीशाखां शिग्रुशाखाग्रहेण किम् ।**
**जगृहुस्तद्विदो वेदं वादिवाक्यान्यकोविदाः ॥ ३३ ॥**

एवमुपयुक्तमुक्त्वा इदानीं गुणसौरभसर्वस्वं समर्थयितुमुपक्रमते । विष्णुस्तद्गुणाश्चातीन्द्रियाः । तत्सिद्धिश्च नित्यं वाक्यमन्तरेण न संभवति । तदुक्तं भगवत्पादैः 'न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचित्' इति । 'पुंवाक्यं ज्ञापकं न तत्' इति च । धर्मादिकं अपौरुषेयशब्दप्रमाणकं इन्द्रिय-लिङ्ग-पौरुषेयशब्दाप्रमाणकत्वे सति सप्रमाणकत्वात् इति

तदभिप्रेतानुमाने विशेषणासिद्धिं बाधकोक्त्या तावत्परिहरति**गृह्णीयादित्यादिना अतः पुंवाक्यतो धर्मः कथं निर्णीयते** इत्यन्तेन ॥ अयमाशयः ॥ स्वस्वाचार्येष्वाप्तत्वाभिमानेन तत्तद्वाक्यैः धर्मादिसिद्धिमभिलषन् प्रष्टव्यः तत्राप्तत्वं कुतो निश्चीयत इति । यतः विप्रतिपन्नः अनाप्तः पुरुषत्वात् संप्रतिपन्नवदिति तस्मिन्नपि अनाप्तत्वशङ्कयाऽश्वासासंभवात् । निर्दोषत्वेन निश्चितप्रामाण्ये वेदे तु युज्यते आश्वासः इति । तदिदमाह **गृह्णीयादिति** । दृढत्वात्तिन्त्रिणीशाखायास्तदवलम्बिनो यथा न भयं तथा सुस्थिरप्रामाण्यकवेदानुसारिणस्तत्त्ववादिनः । अदृढशिग्रुशाखाऽवलम्बिन इव तु सदोषवादिवाक्यानुसारिणोऽधःपातो नियत इति भावः ॥ ३३ ॥

**एकस्य वादिनो वाक्याद्धर्माधर्मव्यवस्थितौ ।**
**तद्व्यत्यासः कुतो न स्याद्वाक्यैस्तत्प्रतिवादिनाम् ।**
**बहुत्वेन बलीयांसि वचनानीति मे मतिः ॥ ३४ ॥**

'न चाप्तिनिश्चयस्तत्र शक्यते व्यभिचारतः' इति अनुव्याख्यानं विवृण्वान आह **एकस्येति** ॥ पुंवाक्यानि तावदन्योन्यं विरुद्धानि । न हि तेषां सर्वेषां प्रामाण्यं संभवति । वस्तुनो विरुद्धबहुरूपत्वापातात् । नापि यस्य कस्य चिदेकस्य । तद्विरुद्धैर्बहुभिरत एव प्रबलैः प्रतिवादिवाक्यैर्बाधापत्तेः । तथा च नैकस्यापि प्रामाण्यमिति न तेन धर्माधर्मव्यवस्थितिरिति ॥ ३४ ॥

**शुष्कतर्कशतो(द्रिक्ता)दर्कास्तैस्तैराप्ततयादृतान् ।**
**अनेकदर्शनाचार्यान् कथमेको निवारयेत् ॥ ३५ ॥**

ननु जिनदर्शनं तर्कसचिवं अनुयायिभिरादृतं च । अत उपपन्नस्तेन धर्माधर्मव्यवस्थितिरित्यत आह **शुष्केति** ॥ जिनोदाहृतास्तर्काः किं मूलप्रमाणाध्यवसितव्याप्तिपक्षधर्मतोपेता उतातथाभूताः । नाद्यः असिद्धेः ।

न द्वितीयः । शुष्कतर्कसाचिव्यस्य सर्वदर्शनसाधारण्यात् । अन्धपरम्परया तैस्तैरनुयायिभिरादृतत्वं तु अप्रयोजकम् । तदिदमाह **शुष्कतर्केति तैस्तैरिति** च ॥ ३५ ॥

**असर्वज्ञवचांस्येवं विरुद्धानि परस्परम् ।**
**न धर्मनिर्णयायालं तत्वज्ञानस्य शङ्कया ।**
**तेष्वेकस्य न सार्वज्ञमन्यस्येव प्रसिद्ध्यति ॥ ३६ ॥**

ननु धर्मोपदेष्टा जिनः सर्वज्ञोऽङ्गीक्रियते । अतो युज्यते तद्वचनेन निर्णय इति चेत् । किं धर्मोपदेष्टारो ये ते सर्वेऽपि सर्वज्ञा इत्यङ्गीकार उत जिन एक एवेति । नाद्यः परस्परं विरुद्धार्थोपदेष्टॄणां सर्वेषां सार्वज्ञासंभवा-दित्याह **असर्वज्ञेति** ॥ नापि जिनस्यैकस्य अदृष्टकल्पनाप्रसङ्गादित्याह **तेष्वेकस्येति** ॥ तदुक्तं तत्त्वनिर्णये 'न च तदर्थत्वेन सर्वज्ञः कल्प्यते' इति 'अन्यत्रादृष्टस्य सर्वज्ञत्वस्य कल्पनम्' इति च ॥ ३६ ॥

**क्षित्यादिकर्ता सर्वज्ञो न सर्वस्यापि सम्मतः ।**
**यस्यासौ सम्मतस्तं च बुद्धो युद्धे जिगीषति ॥ ३७ ॥**

वेदेन विना कार्यत्वादिहेतुना सर्वज्ञसिद्धिरेव दुर्घटा उपाधिप्रतिरोध-पराहतेः । किमुत तद्वाक्येन व्यवस्थितिरित्याह **क्षित्यादिकर्तेति** ॥ अस्तु वा सर्वज्ञत्वम् । न तावदेव आप्तिः । किं नाम अविप्रलम्भादिकमपि । न च सर्वज्ञत्वेनैव अविप्रलम्भानुमानम् । बुद्धे व्यभिचारादित्याह **बुद्ध इति** । **जिगीषति** व्यभिचारनिरूपको भूत्वाऽनुमानमाभासीकरोतीत्यर्थः ॥ ३७ ॥

**दैत्यान्सविप्रलिप्सुश्चेद्देवांश्चानुजिघृक्षति ।**
**अधर्ममपि तत्तृप्त्यै धर्मं वक्तीति संशयात् ॥ ३८ ॥**

ननु सर्वज्ञस्य बुद्धस्य कथं विप्रलम्भकत्वं तद्धेतुरागद्वेषयोरसंभवात् अतो न तत्र व्यभिचार इत्यतः ज्ञानाङ्कुरसंरक्षणाय योऽयेषु देवेषु रागः

तद्विपरीतेषु दैत्येषु च द्वेषः उपपन्नावेवेति सुस्थो व्यभिचार इत्याह **दैत्यानिति** ॥ ३८ ॥

**कथं तदुक्तिमात्राच्च क्रत्वादेस्स्यात्प्रवर्तनम् ।**
**अतः पुंवाक्यतो धर्मः कथं निर्णीयते वद ॥ ३९ ॥**

'न च पौरुषेयेण वाक्येन तत्सिद्धिरि'ति तत्वनिर्णयोक्तिसमर्थनमुपसंहरति **कथमिति** ॥ ३९ ॥

**यस्तु युक्त्यैव धर्मस्य निर्णयं वर्णयेद्बुधः ।**
**लाघवात्स सकृच्छुद्ध्यै पिबेदाचमनोदकम् ॥ ४० ॥**
**पुनरुक्तत्वयुक्त्या च मन्त्रावृत्तिं परित्यजेत् ।**
**परोपकारयुक्त्या च गच्छेत्कामातुराङ्गनाम् ॥ ४१ ॥**

एवं इन्द्रियलिङ्गपौरुषेयशब्दाप्रमाणकत्वे सतीति पूर्वोक्तहेतौ पौरुषेयशब्दाप्रमाणकत्वे सति इत्येतावदंशस्यासिद्धिं परिहृत्य इन्द्रियाप्रमाणकत्वं अतीन्द्रियस्य धर्मादेः स्फुटमेवेत्युपेक्ष्य लिङ्गाप्रमाणकत्वं विपक्षेऽनेकातिप्रसङ्गप्रदर्शनेन समर्थयति **यस्तु युक्त्यैवेति** ॥ ४० ॥ ४१ ॥

देहबन्धाद्बहिर्जीवान्कुर्यात्कारागृहादिव ।
अनादिनित्या वाग्वाच्या धर्मसिद्ध्यै ततोऽखिलैः ॥ ४२ ॥

एवं च इन्द्रियलिङ्गपौरुषेयशब्दाप्रमाणकत्वे सति सप्रमाणकत्वहेतुना धर्मादिकस्यापौरुषेयशब्दप्रमाणकत्वसिद्धिस्तर्कताण्डवोक्ता निष्प्रत्यूहेत्युपसंहरति **अनादिनित्येति** ॥ ४२ ॥

**अस्मदादिकृतं कार्यं व्यर्थं सार्थमनर्थकृत् ।**
**दृश्यते गेहकुड्यादि केनापि न कृता तु या ॥ ४३ ॥**
**अनादितः पूर्वपूर्वसंप्रदायबलागता ।**
**सा तु नार्थं व्यभिचरेत्कर्तृदोषविवर्जिता ।**
**किं क्वचिन्नावकाशोस्ति नित्याकाशे शरीरिणाम् ॥ ४४ ॥**

कार्ये दोषाः कर्तृदोषनिबन्धना इति सामान्यन्यायं व्युत्पादयति **अस्मदादीति** ॥ तस्य प्रकृतोपयोगमाह **केनापीति** । वेदः न अर्थव्यभिचारी अकार्यत्वाद्गगनवदिति अभिप्रेतानुमाने असिद्धिं परिहरति **अनादित इति** । दृष्टान्तो न साध्यविकल इत्याह **किं क्वचिदिति** ॥ ४३ ॥ ४४ ॥

**सा च श्रुतिर्भवेदेषा श्रौतवादिप्रवादतः ।**
**श्रुतिनाम्ना च सर्वैश्च श्रुता या सैव हि श्रुतिः ॥ ४५ ॥**

'अपौरुषेयत्वं च स्वत एव सिद्धं वेदकर्तुरप्रसिद्धेः' इति तत्त्वनिर्णयोक्तमाह **सा चेति** ॥ 'श्रुता एवाखिलैः श्रुतेः' इति तदुदाहृतप्रमाणानुरोधेनाह **श्रुतिनाम्नेति** ॥ ४५ ॥

**न षड्भिर्दर्शनाचार्यैः कृतो वेदो विचारणे ।**
**द्वयोरसंमतत्वेन चतुर्णामपि संमतेः ॥ ४६ ॥**

वेदोऽपौरुषेयः अप्रमितकर्तृकत्वात् गगनवत् इति तत्त्वनिर्णयोक्तां युक्तिं समर्थयितुं असिद्धिं परिहरति । तत्र शङ्क्यमानः कर्ता षट्सु दर्शनाचार्येष्वन्यतमो वा, तार्किकाभिमतेश्वरो वा इति विकल्प्य नाद्य इत्याह **न षड्भिरिति** ॥ ४६ ॥

**नापीश्वरकृतो वेदो भाट्टाद्यैस्त्रिभिरुच्यते ।**
**येनैकेनोच्यते तेन मुच्यते युक्तिमार्गतः ।**
**अशरीरस्तदीशस्तां नैव वक्ति कदाचन ॥ ४७ ॥**

द्वितीयं निराह **नापीति** ॥ तत्र हेतुमाह **अशरीर इति** ॥ ईश्वरः न वेदकर्ता अशरीरत्वात् इत्यनुमाने असिद्धिं परिहरति **तदीश इति** । तार्किकाभिमत ईश इत्यर्थः । तेन तस्य शरीराङ्गीकारेऽपसिद्धान्तं सूचयति । ॥ ४७ ॥

**तत्कर्तृता कथं तस्य नह्यणोश्चोदनादिना ॥**
**नभोगुणस्यास्य जन्म किं तूच्चारणतस्तव ॥ ४८ ॥**
**उत्पत्तये व्यक्तये वा शब्दानां सर्ववादिभिः ।**
**वाच्यैव किल ताल्वोष्ठपुटव्यापारमूलता ॥ ४९ ॥**

साध्ये कर्तृत्वं उत्पादकत्वं व्यञ्जकत्वं वा भवतु । पक्षद्वयेऽपि नाप्रयोजको हेतुः अकारणकार्योत्पत्तिरूप-विपक्षेबाधकसद्भावादिति ज्ञापयितुं वाक्यकर्तृत्वं प्रति सशरीरत्वस्य कारणतामाह **उत्पत्तये व्यक्तये वेति ॥** तथा च यदि वेदकर्तृत्वं स्यात् तर्हि सशरीरत्वं स्यादिति हेतूच्छित्तिरुक्ता भवति ॥ ४८ ॥ ४९ ॥

**सृष्ट्यादौ निगमस्रष्टुर्न हि देहोऽस्ति भौतिकः ।**
**किं चेशमूलतामादौ श्रुतीनां न ददर्श सः ॥ ५० ॥**

वेदस्रष्टृत्वमपि मूलरूपेश्वरेणैवेति तार्किकमतम् । तथा च लीलाविग्रहसद्भावादशरीरत्वमसिद्धमिति शङ्का गर्भस्रावेणैव निरस्तेत्याह **सृष्ट्यादाविति** ॥ ५० ॥

**संदिग्धा कार्यताऽनादौ ततोऽपीशकृता न सा ।**
**गुणत्वमिव वाक्यत्वं नानित्यत्वप्रयोजकम् ॥ ५१ ॥**

विमतं सकर्तृकं कार्यत्वादिति हेतुना सत्प्रतिपक्षं अप्रमितकर्तृकत्वानुमानं इति चेन्न । कार्यत्वसिद्धिः किं प्रत्यक्षतः उत वाक्यत्वानुमानात् अथ ऋचः सामानि जज्ञिरे इति श्रुत्या । नाद्यः सन्दिग्धासिद्धेरित्याह **सन्दिग्धेति** । आकाशगुणत्वाविशेषान्महत्त्वमिव वाक्यत्वं कार्यत्वे न प्रयोजकमिति द्वितीयं निराह **गुणत्वमिवेति** ॥ ५१ ॥

**सुष्टुतिं नित्यया वाचा चोदस्वेत्यृग्यतोऽब्रवीत् ।**
**प्रादुर्भावजनेस्तस्मादृचस्सामानि जज्ञिरे ॥ ५२ ॥**

न तृतीयः श्रुतेरन्यार्थपरत्वादित्याह **सुष्टुतिमिति** ॥ ५२ ॥

**ऋक्सामादेरभावे प्राग्यज्ञस्सोऽज्ञ कुतोऽभवत् ।**
**देवास्तेनायजन्तेति पूर्वां श्रुतिमनुस्मर ॥ ५३ ॥**

तदेव बाधकोक्त्योपपादयति **ऋक्सामादेरिति** ॥ यज्ञानुष्ठानं प्रति वेदाः कारणम् । अत्र च वेदानां जनेः प्रागेव देवानां यज्ञानुष्ठानं वर्णितम् । यदि जनिरुत्पत्त्यर्थका स्यात् तर्हि कारणस्य कार्यादनन्तर-मुत्पत्तिरुक्ता भवेत् । न च तत्संभवति । अतः प्रादुर्भावार्थकत्व-मेवेति । किं च नित्यया वाचेति स्वयं वेदस्य नित्यत्वं वर्णयन्ती श्रुतिः जनेरुत्पत्त्यर्थकत्वं निरुणद्धीति भावः ॥ ५३ ॥

**आदिसर्गेऽप्युपाध्यायः पुत्रेऽध्येतरि केशवः ।**
**न कर्तोक्तप्रकारेण यज्ञभोक्तृत्वविघ्नवित् ॥ ५४ ॥**

कथं तर्हि 'यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै' इति वचनमित्यतः उपाध्यायवत्पूर्वसिद्धवेदस्योपदेष्टृत्वमात्रेणेत्याह **आदि-सर्गेऽपीति** ॥ तदुक्तं तर्कताण्डवे 'ईश्वरोऽपि ह्यस्मन्मते महोपाध्याय एवे'ति । सकर्तृकत्वे बाधकान्तरं वक्ति **न कर्तेति** । न केवलं देवानां प्रागुक्तप्राथमिक-यज्ञमात्रानुपपत्तिः किं नाम पौरुषेयेष्विवानाश्वासशङ्कया यज्ञमात्राननुष्ठाने यज्ञभुगिति विष्णुसहस्रनामोक्तयज्ञभोक्तृत्वमहिम्नो भङ्गप्रसङ्ग इत्याह **यज्ञेति** । तदुक्तं तर्कताण्डवे 'एतदप्युक्तं **गौरवदोषेणेति** । बुद्धाद्यागमतुल्यत्वेन विपरीतलक्षणया लाघवदोषेणेत्यर्थः' इति ॥ ५४ ॥

**निद्राविद्रावणे यस्य छन्दांसि किल बन्दिनः ।**
**तं वेदं स कथं कुर्याद् दुर्गास्यात्प्राग्विनिर्गतम् ॥ ५५ ॥**

सृष्टेः प्रागेव विद्यमानत्वस्य प्रमितत्वान्न सृष्टिकर्मत्वमित्याह **निद्रेति** ॥ ५५ ॥

**यस्या(पश्या)स्ति पुस्तकं हस्ते हयास्यस्य विधेर्गुरोः ।**
**स च वक्ताऽनादिनित्यसिद्धबुद्धिक्रमाक्रमम् ।**
**वर्णानां क्रमशून्यानामपि पश्येद्धि सर्वदा ॥ ५६ ॥**

हस्ते पुस्तकधारित्वं हयग्रीवस्य पूर्वसिद्धसजातीयवर्णक्रमानुरोधेनैवोच्चारयितृत्वरूपे उपाध्यायत्वे लिङ्गमित्याह **यस्यास्तीति** । अत्र नित्येश्वरबुद्धौ क्रमस्तदचिन्त्यशक्त्या । वर्णेषु बुद्ध्युपाधिकः । नित्यसर्वगतेषु कालिकदैशिकक्रमयोरयोगात् । तदिदमाह **स च वक्तेत्यादिना** ॥ ५६ ॥

**नित्येशबुद्ध्युपाधेस्तद्वर्णेष्वौपाधिकः क्रमः ।**
**मठाकाशघटाकाशक्रमवत्स्यादनादितः ॥ ५७ ॥**

नित्यानामपि औपाधिकं क्रमं दृष्टान्तोक्त्या घटयति **घटाकाशेति** । मठाकाशः पूर्वः घटाकाशोऽपर इति तयोः पौर्वापर्यम् । तथा च आकाशस्य नित्यत्वेऽपि उपाध्यवच्छिन्नयोः तत्प्रदेशयोर्यथा क्रमः तथा नित्यानामपि वर्णानां औपाधिकः क्रमो घटते इति भावः ॥ ५७ ॥

**उपाधिनित्यतायां तु नित्यताप्यस्य शोभते ।**
**अनाद्यज्ञानतोऽनादि यथा संसारबन्धनम् ।**
**यथा वा प्रतिबिम्बात्मा जीवोनादिः श्रुतौ श्रुतः ॥ ५८ ॥**

**उपाधिनित्यतायां त्विति** । तुशब्दः अनित्यतापक्षं व्यावर्तयति । **नित्यता** कूटस्थनित्यता । तथा च नित्येशबुद्ध्युपाधिकः क्रमः कूटस्थनित्यः । अनित्यजीवबुद्ध्युपाधिकस्तु न तथेत्याशयः ॥ निमित्तस्यानादित्वे नैमित्तकस्यापि तथात्वमित्यत्र दृष्टान्तावाह **अनादीति** ॥ नात्र विवदितव्यं प्रमितत्वादित्याह **श्रुताविति** ॥ 'अनादिमायया सुप्तः' 'नित्यो नित्यानां' इत्यादिकायाम् । श्रुत इति लिङ्गव्यत्ययेन बन्धनमित्यनेनाप्यन्वेति ॥ ५८ ॥

**पूर्वं बुद्ध्या ग्रहणतः पूर्वत्वं वर्णगं हि तत् ।**
**पश्चाद्बुद्ध्या ग्रहणतः परत्वं तच्च वर्णगम्　　॥ ५९ ॥**
**पूर्वं बुद्ध्या पूर्वतैव काचिद्वर्णेस्त्युपाहिता ।**
**पश्चाद्बुद्ध्या परत्वं च वर्णेष्वस्ति न संशयः　॥ ६० ॥**

देशकालनिमित्तत्वाभावेऽपि बुद्ध्युपाधिकं वर्णेषु क्रमं तत्स्वरूपविवरणेन स्फोरयति द्वाभ्यां **पूर्वमित्यादिना** ॥ ५९ ॥ ६० ॥

**न चेन्नदीदीनशब्दौ भिन्नाभिन्नार्थकौ कथम् ।**
**कथं च स्यात्पूर्ववर्णात्पूर्व इत्यादिकं वचः　॥ ६१ ॥**

भवेदिदं सर्वं यदि वर्णेषु क्रमः प्रमितः स्यात् । तदेव कुत इति उत्तानदृशां चोद्यं प्रमाणोक्त्या परिहरति **न चेदिति** । अयमाशयः । पदं नाम तावत् वर्णसमुदाय एव । 'विभक्त्यन्ता वर्णाः पदं' इति पद्धत्युक्तेः । न तु घटादिवत्पदार्थान्तरम् । पदयोर्भिन्नभिन्नार्थकत्वं चानुभवसिद्धम् । नदीदीनादिशब्देषु दर्शनात् । अर्थभेदश्च वर्णभेदनिमित्तको वा क्रमभेदनिमित्तको वा वाच्यः । प्रकारान्तराभावात् । नाद्यः प्रकारः । नदीदीन-राजाजारादिपदेषु अभावात् । तयोः समानवर्णोपेतत्वात् । अतः क्रमभेदनिमित्तक एव आस्थेयः । तथा च प्रयोगः विमतः नदीदीनेत्यादिशब्दयोरर्थभेदः वर्णक्रमभेदनिमित्तकः वर्णभेदानिमित्तकत्वे सति सनिमित्तकत्वात् । विपक्षे कार्यस्य निर्निमित्तत्वापत्तिर्बाधिकेति ॥ प्राचां व्यवहारोऽपि क्रमसद्भावे प्रमाणमित्याह **कथं चेति** ॥ ६१ ॥

**यथैकस्यामीशबुद्धौ पौर्वापर्यं विशेषतः ।**
**वर्णेषु तद्वत्स्वीकार्यं पौर्वापर्यं सदोपधेः　॥ ६२ ॥**

अनादिनित्यानामपि क्रमिकत्वं सविस्तरमनेकदृष्टान्तोक्त्योपपादयति **यथैकस्यामित्यादिना, 'अतः क्रमिकयोश्चानादित्वं तत्त्वं रुणद्धि क'**

इत्यन्तेन । अनादित्वक्रमिकत्वयोरेकत्र समावेशमसहमानः प्रष्टव्यः । किं सर्वत्रायं नियमः वर्णेष्वेव वेति । नाद्यः ईश्वरज्ञानेच्छायत्नेषु अनादिष्वपि क्रमिकतया संप्रतिपन्नेषु व्यभिचारात् । न द्वितीयो निर्निबन्धनत्वात् । तत्र विशेषबलाद्घटत इति चेदत्रापि बुद्ध्युपाधिवशादुपपद्यत एवेत्याह **यथैक-स्यामिति** ॥ ६२ ॥

**त्वयाऽपि काले महति यामादीनामुपाधिजम् ।**
**पौर्वापर्यं कथं वार्यं कार्यं कुर्युर्यतोऽखिलम् ॥ ६३ ॥**

उदाहरणान्तरमाह **काले इति** । अनादित्वोपपादनाय **महतीति** । महाकालेऽनादित्वं परस्यापि संमतमित्याह **त्वयाऽपीति** । तत्रौपाधिकं क्रमं श‍ृङ्गिग्राहकतया दर्शयति **यामादीनामिति** । न च तस्य मिथ्यात्वशङ्का संभाविनी अर्थक्रियाकारित्वादित्याह **कार्यमिति** ॥ ६३ ॥

**तवापि ताल्वोष्ठपुटमध्यस्थाकाश एव हि ।**
**वर्णोत्पत्तिस्ततः को वा पूर्वः कश्चापरो वद ॥ ६४ ॥**

किञ्च वर्णानित्यवादिनामपि तत्पौर्वापर्यं तावत्संमतमेव । तत्कथमिति वक्तव्यम् । न हि तत्तद्वर्णोत्पत्तिस्थानभेदनिमित्तेन पूर्वत्वमपरत्वं चेति वक्तुं शक्यम् । सर्वेषामपि वर्णानां ताल्वोष्ठपुटमध्यस्थे एकस्मिन्नेवाकाश-प्रदेशे उत्पत्त्यङ्गीकारात् इत्याह **तवापीति** ॥ ६४ ॥

**न हि तत्राधरो वर्ण एक ऊर्ध्वश्च देशतः ।**
**पूर्वकालोत्पन्नतैव पूर्वता परता तथा ।**
**परकालोत्पन्नतैव वर्णे वाच्या न चापरा ॥ ६५ ॥**

नापि तत्रैव प्रदेशेऽपि ऊर्ध्वाधरभागोत्पन्नत्वनिमित्तेन । अनङ्गीकाराद-संभवात् च । नह्येकभागोत्पन्नस्यापि वर्णस्य सर्वत्र पूर्वत्वमेवापरत्वमेव वेति

नैयत्यमस्ति । य एव वर्णः एकस्मिन्पदे पूर्वः स एवापरस्मिन्पर इति वैपरीत्यदर्शनात् इत्याह **न हीति** ॥ तथा च तेनापि उत्पत्तिकालयोः पौर्वापर्यनिबन्धने एव वर्णगतपौर्वापर्ये वक्तव्ये गत्यन्तराभावादित्याह **पूर्वेति** । ॥ ६५ ॥

**एवं च पूर्वे व्यक्तत्वं पूर्वत्वं मे भविष्यति ।**
**परकालव्यक्ततायां परो वर्णो भविष्यति ।**
**अतस्समं समाधानं नित्यानित्यत्ववादिनोः ॥ ६६ ॥**

नित्यत्ववादेऽपि क्रमनिर्वाह एवं सुकर एव । इयांस्तु विशेषः । तेन उत्पत्तिक्रममपेक्ष्येत्युच्यते । मया तु व्यक्तिक्रममपेक्ष्येति । वर्णक्रमस्वरूपे एवाक्षेपस्तु निर्निबन्धन इत्याह **एवं चेति** ॥ ६६ ॥

**यथेशो नित्यया बुद्ध्या सकृत्सृष्टश्रुतेः क्रमम् ।**
**आकल्पान्तं तवेक्षेत तथेक्षेत सदा मम ॥ ६७ ॥**

**तवेति** ॥ वैदिकक्रमस्य सृष्टिमङ्गीकुर्वाणोऽपि ईश्वरेण कल्पादौ सकृदेव तत्सृष्टिमङ्गीकरोति । आकल्पान्तमन्येभ्य उपदिशन्नपि तेनैव पूर्वक्रमेणोपदिशति ईश्वरः इति च । तत्कुतो हेतोः । ईश्वरस्य सदा सर्वज्ञत्वेन पूर्वक्रमस्य विस्मरणाभावात्तस्यागे कारणाभावः, अन्यथा वृथैव मध्ये भिन्नक्रमाश्रयणे कल्पनागौरवप्रसङ्गादिति चेत् एवं तर्हि किं ईश्वरः कल्पान्तरीयं पूर्वं क्रमं व्यस्मार्षीत् येनैतत्कल्पादावपि तद्भिन्नक्रमानुसरणम् । तथाच पूर्वपूर्वकल्पक्रमानुसारेणैव उत्तरोत्तरत्रोपदेशोऽप्यङ्गीकार्य इत्यनादिनित्यत्वमेव सेत्स्यतीति भावः ॥ ६७ ॥

**प्रमाणदृष्टघटना कार्या सैव यथामति ।**
**न शक्यते चेत्सर्वेशाचिन्त्यशक्त्यैव सेत्स्यति ॥ ६८ ॥**

'शाश्वता विष्णुबुद्धिगाः' 'सर्गे सर्गेऽमुनैवैत उद्गीर्यन्ते तथैव च' इत्यादिप्रमाणसिद्धत्वाच्चैवमित्याह **प्रमाणदृष्टेति** ॥ ईश्वरशक्त्यैव च घटना सुकरेति भावः । तदुक्तं सुधायां 'यावत्प्रमाणसिद्धं तावतः सुघटस्य दुर्घटस्य वा घटनायां पटुरिति ब्रूमः' इति । प्रमाणदृष्टस्यापि दुर्घटत्वेनापलापे बाधकं स्वयमेवाग्रे वक्ष्यति 'न चेदीशप्लुतं त्याज्यं नारिकेलफले जलमि'ति ॥ ६८ ॥

**नेदंपूर्वा यदा बुद्धिराद्यानादिरधीशितुः ।**
**तत एव द्वितीयाऽपि नेदंपूर्वा बलाद्भवेत्** ॥ ६९ ॥

आद्यस्य वर्णस्यानादित्वमस्तु । द्वितीयस्य तु द्वितीयत्वादेवोत्पत्तिरेवोचितेति चोद्यस्य समाधिमाह **नेदमिति** । वर्णक्रमोपाध्योः ईश्वरबुद्ध्योराद्यद्वितीयत्वं तावदस्ति । तत्र द्वितीयाया ईश्वरबुद्धेरनादित्वं कथमिति विचारणीयम् । ईश्वरबुद्धित्वादेवाद्यबुद्धिवत् द्वितीयाया अप्यनादित्वमिति तत्र वक्तव्यम् । तर्हि ईश्वरबुद्धिविषयत्वादेव आद्यबुद्धिविषयवर्णवत् द्वितीयबुद्धिविषयस्याप्यनादित्वमेवेति संतोष्टव्यम् । द्वितीयाया बुद्धेरनादित्वे तद्विषयस्य द्वितीयवर्णस्य कथं नानादित्वमिति भावः ॥ ६९ ॥

**अनादेः पृष्ठलग्नस्याप्यनादित्वं हि युक्तिमत् ।**
**यावद्यावद्गजो गच्छेत्तावत्पुच्छं च गच्छति** ॥ ७० ॥

ईश्वरबुद्धेरपि द्वितीयायाः कथमनादित्वमिति तत्राह **अनादेरिति** ॥ इदमत्रानुमानमभिप्रेतम् । द्वितीयाबुद्धिः अनादिर्भवितुमर्हति । अनादेः आद्यायाः पृष्ठलग्नत्वात् इति । यस्य यावत्त्वं तत्पृष्ठलग्नस्यापि तावत्त्वं इति सामान्यव्याप्तौ गजपुच्छं लौकिकदृष्टान्तः । एवं तृतीयादिबुद्धीः तद्विषयवर्णांश्च पक्षीकृत्य प्रयोक्तव्यम् । तथा च सर्वेषां वर्णानामनादित्वं सेत्स्यति ॥ ७० ॥

**पूर्वेदं पूर्वताऽभावे तदव्यवहितोत्तरे ।**
**क्षण एव परं यत्स्यात्तस्येदंपूर्वता कथम् ।**
**मत्स्यस्यानादितायां न किं कूर्मस्याप्यनादिता ।। ७१ ।।**

अप्रयोजकत्वं विपक्षे बाधकोक्त्या परिहरति **पूर्वेदमिति** । अनादिना पूर्वेण संबद्धस्य पाश्चात्त्यस्याप्यनादित्वमित्यत्र वैदिकदृष्टान्तमप्याह **कूर्मस्येति** । अत्र कूर्मस्येत्युपलक्षणम् । सर्वेषां वराहादीनामित्यपि ध्येयम् ।। ७१ ।।

**अधोऽवधिविहीनेन विष्णोः पादेन सङ्गता ।**
**जङ्घाप्यधोवधेर्भङ्गं किं न कुर्याद्बृहत्तनोः ।**
**आद्यद्वितीयभावोऽपि तद्वत्स्यादप्यनादिषु ।। ७२ ।।**

अवधिशून्यस्य संबन्धिनोऽप्यवधिशून्यत्वं इति व्याप्तिः न केवलं कालावधिं संबध्नाति किं नाम देशतोऽवधिमपीत्याह **अधोवधीति** ।। ७२ ।।

**अनादिर्बीजसन्तानस्तथैवाङ्कुरसंततिः ।**
**अतः क्रमिकयोश्चानादित्वं तत्त्वं रुणद्धि कः ।। ७३ ।।**

क्रमिकयोरपि बीजाङ्कुरसन्तानयोरुभयोरप्यनादित्ववद्वर्णेष्वप्युपपत्तिरित्याह **अनादिरिति** ।। ७३ ।।

**अनादिवेदवादस्तन्मनोमोदाय धीमताम् ।**
**अचिन्त्यशक्तिं यो वक्ति प्रभोस्स्वार्थपरायणः ।। ७४ ।।**

'विचित्रशक्तिः पुरुषः पुराणः' 'सर्वैर्युक्ता शक्तिभिर्देवता सा' इति वेदः परमात्मनोऽचिन्त्यशक्तिं वक्ति । तत एव शक्तेर्वशादनादित्वमपि वेदस्य सुघटमित्याह **अनादीति** । महतां स्तुतिः स्वस्यैव सुस्थितिं घटयतीति हृदयम् ।। ७४ ।।

**तद्वेदपदराशिस्थवर्णमालास्वनादितः ।**
**पौर्वापर्यं केन वार्यमनादीशधियार्पितम् ।। ७५ ।।**

**अनादीशधिया** निर्दोषेश्वरज्ञानेन । **अर्पितं** उल्लिखितं प्रमाणदृष्टत्वा-त्क्रमानादित्वं दुर्वारमिति भावः । एवं साक्षादनन्तक्रमविशिष्टवेदमेव ईश्वरः स्वबुद्धयोल्लिखतीत्येकः पक्षः प्रदर्शितः । समूहालम्बनप्रकारेणोल्लिखतीति पक्षान्तरमग्रे 'एवं पौर्वापर्यवन्त' इति (७५) श्लोकेनाग्रे वक्ष्यतीति विभाव-नीयम् ॥ ७५ ॥

**वर्णानामप्यनादित्वं बुद्धेश्चानादिता यदा ।**
**कथं तदा बुद्धिसिद्धपौर्वापर्यस्य सादिता ।**
**नहीदंपूर्वतां बुद्धेरनादेर्बुद्धिमान्वदेत् ॥ ७६ ॥**

ईश्वरबुद्ध्युपाधिकक्रमस्य कूटस्थनित्यतां स्फोरयति **वर्णानामिति** । ॥ ७६ ॥

**ज्ञानसाध्या हरेरिच्छा यदाऽनादिर्निगद्यते ।**
**ज्ञानज्ञेयत्वरूपस्य सादितास्य कथं वद ॥ ७७ ॥**

प्रयोजकमीश्वरज्ञानं पूर्वम् । तत्प्रयोज्या तदिच्छाऽपरा । एवमप्यु-भयोरनादित्वमक्षतम् । व्यञ्जकमीश्वरज्ञानम् । व्यङ्ग्यः क्रमः । एवं समसमयवर्तिनोरेतयोरुभयोरनादित्वं किमु वाच्यमिति भावेनाह **ज्ञानेति** । ॥ ७७ ॥

**अगत्या पञ्चरात्रादौ प्रमाणाभावतो हरिः ।**
**न व्यक्तीकुरुते बुद्धिं शक्तामपि स कार्यवित् ॥ ७८ ॥**

सर्वज्ञेश्वरबुद्धौ कल्पादौ पूर्वकल्पीयवेदक्रमोऽपि गोचरः पञ्चरात्रा-दिस्मृतिक्रमोऽपि । स एव चोभयोरप्युपदेशकः । एवं स्थिते स वेदानां वक्तैव पञ्चरात्रादीनां तु कर्ता इत्यत्र विशेषे किं कारणमत्राह **अगत्येति** ॥ 'श्रुतिर्वाव नित्या अनित्या वाव स्मृतयः' इति श्रुतेर्नित्यत्वे स्मृतीनामनित्यत्वे च प्रमाणमस्ति । अतः **अगत्या** स्मृतिनित्यत्वे च प्रमाणाभावात् प्रत्युत

तदनित्यत्व एव प्रमाणसद्भावाच्च, **पञ्चरात्रादौ**, तदुपदेशकाले, **बुद्धिं पूर्वकल्पक्रमविषयिणीं न व्यक्तीकुरुते** तत्क्रमानुसारेणैव न स्मृतीरुपदिशतीति यावत्। वेदांस्तु तत्क्रमेणैव। कुत एवमित्यत आह **कार्यविदिति**। प्रमाणानुसारेणैव तत्तत्कार्यं कार्यमिति ज्ञानवान्यतः। तेन युज्यते कर्ता वक्तेति विभागेन व्यवहार इति भावः॥ ७८॥

**अतस्तत्कृतशास्त्रस्य सादित्वेऽस्त्यतिसङ्कटम्।**
**अनादित्वे (च नाया)त्वनायास इति मन्यामहे वयम्॥ ७९॥**

**सादित्वे** तत्कृतत्वे। **अतिसङ्कटम्** व्यत्यासेनोपदेशकथनद्वारा कृतत्वोपपादनक्लेशः। वेदानामनादित्वे निरूपणीये तु **अनायासः** नैवैवंरूपः क्लेशप्रसङ्गः॥ ७९॥

**ईशेनोच्चारितं तच्च ब्रह्मादीनां परम्परा।**
**अनुभूतं स्मरेन्नित्यं न करोति स्वयं पुनः॥ ८०॥**
**उच्चारयन्त्युपाध्यायास्स्मृत्वा स्मृत्वा तदेव हि।**
**तदेवं प्रचरेद्वेदः कर्तारोऽस्य न कुत्रचित्॥ ८१॥**

**अनुभूतं स्मरेत्।** प्राक्तनमेवेदमधीमहे अध्यापयामश्चेति प्रतिपद्यते॥ ८०॥ ८१॥

**निमित्तबुद्धेरज्ञानेऽप्यस्य ज्ञानं च शोभते।**
**तिरोहितजपापुष्पसन्निधानोत्थरक्तिमा।**
**स्फटिकादौ न किं सर्वैस्स्फुटमेवानुभूयते॥ ८२॥**

क्रमस्य बुद्ध्युपाधिकत्वे तज्ज्ञानानुपपत्तिरूपबाधकमाशङ्क्य निराह **निमित्तेति**। उपाधीत्यर्थः। यत्र औपाधिकज्ञानं तत्रोपाधिज्ञानं इति नियमः। अत्र व्यापकं ईश्वरबुद्धिज्ञानं अस्मदादीनां नास्ति। अतो व्याप्यं क्रमज्ञानं न संभवतीत्यतो नायमस्ति नियमः। स्फटिकादौ व्याप्तिभङ्गस्य सर्वानुभवसिद्धत्वादित्याह **स्फटिकादाविति**॥ ८२॥

**न चेत्काव्यस्य कर्तारस्सर्वेऽपि स्युर्गृहे गृहे ॥ ८३ ॥**

तदुच्चारणमात्रेण तत्कर्तृत्वोक्तौ अतिप्रसङ्गमाह **न चेदिति** ॥ ८३ ॥

**द्विकर्तृकत्वात्काव्यस्याप्यस्तीश्वरमतौ स्थितिः ।**
**यावत्प्रचारं पश्चात्स बुद्धिं तत्र व्यनक्ति न ।**
**तदुत्पन्नमनित्यं च पौरुषेयं वचोऽखिलम् ॥ ८४ ॥**

उत्पत्तिमतामपि पौरुषेयवचसां नाशाभावं हेतूक्त्या व्यनक्ति **द्विकर्तृकत्वादिति** । अनेकबुद्ध्युपाधिकक्रमवद्वर्णोपेतत्वादित्यर्थः । अयमाशयः । वाक्यस्य नाशो नाम विवक्षितवर्णविषयकक्रमोपाधिभूतसर्वबुद्ध्युपरम एव न तु मुद्गरप्रहारादिना घटादेरिवापरः । तत्रेतरेषामिवेश्वरबुद्धिरप्युपाधिरेव । तस्य सदा सर्वज्ञत्वेन तद्बुद्धेर्नैव कदाऽप्युपरमः । अतः पुरुषप्रणीतानां काव्यादीनामपि नैव विनाश इति । तदिदमुक्तं **अस्तीश्वरमतौ स्थितिरिति** । कथं तर्हि कस्यचित्काव्यस्य प्रचार इदानीं नष्ट इति व्यवहार इत्यत आह **पश्चादिति** । बुद्धेर्व्यक्तीकरणाभावनिमित्तक एव नाशव्यवहारो न तूपरमनिमित्तकः । व्यवहारमात्रं न तु वस्तुतो विनाश इति तत्वम् ॥ ८४ ॥

**पुराणाद्या त्वनित्या वाग्यदुत्पत्तेरनन्तरम् ।**
**व्यक्त्यैव तत्र तद्बुद्धिर्यतो मानानुसारतः ॥ ८५ ॥**

पुराणाद्येष्वपीयमेव स्थितिरित्याह **पुराणेति** । तदुक्तं तत्वनिर्णये 'पुराणादीनामप्यन्यथा रचनमेवानित्यत्वमि'ति । एवकारेण नाशो व्यावर्त्यते । **मानेति** । 'अनित्या वाव स्मृतयः' इति श्रुतिः । 'पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु । क्रियन्तेऽतस्त्वनित्यानि' इति स्मृतिः । इत्यादि**मानेत्यर्थः** ॥ ८५ ॥

**स्वतन्त्रेच्छोऽपि भगवान्मानेऽसौ मानवान्किल ।**
**उक्तव्यवस्था तत्सुस्था कर्ता वक्ता ततः पृथक् ॥ ८६ ॥**

स्वतन्त्रस्यापि मानानुसारेणैव प्रवृत्तिः सत्यसङ्कल्पत इति न पर्यनुयोगमर्हति । 'सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति' इति भगवत्पादोक्तेः । तदिदमाह **स्वतन्त्रेति** ॥ ८६ ॥

**तदेवेदं वाक्यमिति प्रत्यभिज्ञां प्रमाणयन् ।**
**आचार्योऽपीममेवार्थमभिप्रैति न संशयः ॥ ८७ ॥**

उक्तं सर्वं मूलारूढं करोति **तदेवेति** ॥ अत्र तत्वसंख्यानटीकाया विष्णुतत्वनिर्णयटीकायाश्च पातनिकविरोधपरिहारः तैस्तैष्टिप्पण्याचार्यैः बहुधा कृतः । विस्तरस्तत्तद्ग्रन्थेष्वेव द्रष्टव्यः । सङ्क्षेपस्तु नित्यत्वं द्विविधम् । अत्र श्लोके सावधारणप्रत्यभिज्ञयोक्तं कूटस्थत्वम् । अपरं 'क्रमस्य कृतकत्वेऽपि' इति तत्वनिर्णयटीकोक्तं नियतैकप्रकारत्वम् । तदुक्तं 'नियतैकप्रकारत्वं नित्यत्वं तच्च नेति न' (श्लो१०९) इति ॥ ८७ ॥

**तस्मादनादिसिद्धान्तशुद्धबुद्धिमतां सताम् ।**
**प्रमाणे सत्यनादित्वं विनोदेनैव सिद्ध्यति ॥ ८८ ॥**

**सतां** प्रमाणसिद्धसम्प्रत्यायिनाम् । तदुक्तं कथालक्षणटीकायां 'अदुष्टमनसः सन्तः । ते च प्रमाणसिद्धसम्प्रत्यायिनः' इत्यादि ॥ ८८ ॥

**प्रमाणे सति शक्त्येत्थं घटयेन्नित्यतां हरिः ।**
**यत्रकुत्रापि तां शक्तिं चित्रशक्तिर्युनक्ति न ।**
**गिर्युद्धरणशक्तिं स किं प्रयुंक्ते तृणोद्धृतौ ॥ ८९ ॥**

प्रमितस्य घटनायामेवेश्वराचिन्त्यशक्तेरुपयोग इति प्रागुक्तं स्मारयति **प्रमाणे सतीति** ॥ ८९ ॥

**किं चान्त्यवर्णस्योत्पादे प्राङ्नष्टैर्वर्णराशिभिः ।**
**बुद्ध्यारूढैः पदत्वं स्यात्प्राक्सृष्टिस्तद्वथैव ते ॥ ९० ॥**
**वर्णानित्यत्ववादोपि वर्णनित्यत्ववादिनाम् ।**
**प्रक्रियां स्वक्रियासिद्ध्यै सत्करोतीति मे मतिः ॥ ९१ ॥**

वर्णानित्यत्ववादिनाऽपि पदभावनिर्वाहाय तेषां बुद्धिस्थत्वमेवाश्रयणीयम् । नित्यत्वेऽपि तत एव निर्वाहोपपत्तौ कृतमनित्यत्वाङ्गीकारदुर्व्यसनेनेत्याह **किं चेति** द्वाभ्याम् ॥ ९० ॥ ९१ ॥

**त्रिक्षणस्थायिवर्णात्मवेदेष्वाकल्पवर्तिता ।**
**त्वयापीश्वरबुद्ध्यैवमङ्गीकार्या मयैव न ॥ ९२ ॥**
**तवेश्वरोपि सर्गादौ सृजेद्वेदं न सर्वदा ।**
**पश्चात्स्वबुद्धिविषयैर्वर्णैस्सोपि पदावलिम् ।**
**वैदिकीमनुसंधत्ते त्वत्पक्षे सर्वदा मम ॥ ९३ ॥**

एवं वेदानामीश्वरेण सृष्टत्वाङ्गीकारिणाऽपि तेषामाकल्पवर्तित्वनिर्वाहायेश्वरबुद्धिविषयत्वमेव शरणीकरणीयम् । 'शाश्वता विष्णुबुद्धिगाः' इति प्रमाणानुसारेण तेनैव हेतुनाऽनादिनित्यत्वमेव सेत्स्यति । अतो दुराग्रहमूलमेव तत्सृष्टिकल्पनमित्याह द्वाभ्यां **त्रिक्षणावस्थायीति** ॥ ९२ ॥ ९३ ॥

**एवं पौर्वापर्यवन्त एते वर्णा इतीश्वरः ।**
**अनादिनित्यया बुद्ध्या सदोल्लिखति वैदिकीम् ॥ ९४ ॥**

ईश्वरबुद्ध्या क्रमोल्लेखे पूर्वोक्तप्रकारापेक्षया प्रकारान्तरमाह **एवमिति** । युगपत्सहस्रदीपविषयकसमूहालम्बनज्ञाने क्रमविशिष्टत्वेनैव इमे दीपा इति यथोल्लेख एवं वैदिकानन्तवर्णेष्वपि इमे वर्णा इति क्रमविशिष्टत्वेनैवेश्वरबुद्धिरुल्लिखति वर्णानिति भावः ॥ ९४ ॥

**अनन्तपदमर्यादां घटयेद्योतिदुर्घटम् ।**
**अनादिनित्यतैवं वा न कुचोद्येन बाध्यते　॥ ९५ ॥**

अतिदुर्घटस्याप्यस्य प्रकारान्तरस्य घटना ईश्वराचिन्त्यशक्त्या सुघटेत्याह **अनन्तेति** ॥ ९५ ॥

**उच्चारयन्त्युपाध्यायास्तेऽपि स्वाध्यापकानुगाः ॥ ९६ ॥**
**पुराणकृच्च वेदानां व्यासकृन्न तु कारकः ।**
**यो वेदव्यासनाम्नैव विख्यातो मुनिमण्डले　॥ ९७ ॥**

'अपौरुषेयत्वं च स्वत एव सिद्धं वेदकर्तुरप्रसिद्धेः' इति तत्त्वनिर्णयोक्तिमनुरुन्धान आह **उच्चारयन्तीति** ॥ कर्तारः किं अधुनातना अध्यापका उत ईश्वरावतारो व्यासः । नाद्य इत्याह **तेऽपीति** । पूर्वतनमेवेदमित्यनुसन्दधानाः कथं कर्तारो भवेयुः । न द्वितीयः विभागकर्तृत्वार्थकव्यासनाम्ना तस्याकर्तृत्वसिद्धेरिति ॥ ९६ ॥ ९७ ॥

**गूढकर्तृकवाक्यं च ध्रुवं कर्तृप्रसिद्धिमत् ।**
**अभूत्वाभाविकार्यत्वादपूर्वगृहकूपवत्　॥ ९८ ॥**

एवं, वेदः अपौरुषेयः अप्रमितकर्तृकत्वात् गगनवदिति तत्त्वनिर्णयोक्तानुमाने पूर्वश्लोकेन संभावितसर्वकर्तृनिरासेन स्वरूपासिद्धिं परिहृत्य, गूढकर्तृकवाक्ये व्यभिचारशङ्कां हेत्वभावोक्त्याऽत्र परिहरति **गूढेति** । इदमनुमानमत्राभिप्रेतम् । गूढकर्तृकं वाक्यं, सकर्तृकं कार्यत्वात् अपूर्वगृहकूपवत् । न चासिद्धिः । विमतं कार्यं परम्पराऽभावात् रघुवंशकाव्यवत् । परम्परा च प्राक्तनमेवेदमधीमहे अध्यापयामश्चेति प्रतिपत्तिविषयत्वम् । तथा च कार्यत्वानुमानेन कर्तुः प्रमितेः, अप्रमितकर्तृकत्वहेतोरभावेन न गूढकर्तृके व्यभिचार इति भावः ॥ ९८ ॥

**अनादित्वं हि गमयेद्यत्राध्येतृपरम्परा ।**
**अभूत्वाभाविनी सा न ततः कर्त्रनुमाऽपि न ।**
**अतोऽकर्तैव कोनन्तवाक्कर्तारं निगूहयेत् ॥ ९९ ॥**

वेदे तु निरूपितपरम्पराया एव सद्भावेन कार्यत्वमेव नानुमातुं शक्यं दूरे तेन हेतुना कर्त्रनुमानमित्याह **अनादित्वमिति** । अप्रमितोऽपि कश्चन गूढः कर्ता वेदस्य किं न स्यादिति शङ्क्यते इत्यतोऽसंभावनापराहतेनैवं शङ्कोदेतुमर्हतीत्याह **अनन्तेति** ॥ ९९ ॥

**कर्तृप्रसिद्ध्यभावेन तद्वेदोयमकर्तृकः ॥ १०० ॥**

अनुमानं निगमयति **कर्त्रिति** । तत् तस्मात् व्याप्तिपक्षधर्मतयोः सुदृढत्वात् ॥ १०० ॥

**कन्याकुमारी कन्यात्वं यथा भर्तुरभावतः ।**
**लेभे श्रुतिकुमारीयं तथा कर्तुरभावतः ।**
**अकृतत्वं ध्रुवं लेभे या नित्येतिश्रुतौ श्रुता ॥ १०१ ॥**

न केवलं कर्ता न प्रमित इत्येव, किं तु नित्यत्वमेव विशिष्य प्रमितमित्यपीत्याह **या नित्येति** ॥ १०१ ॥

**पिपीलिकालिपिश्चापि तैरङ्गैर्भ्रमतः कृता ।**
**बाधे व्यभिचरेदर्थे नत्वनादिरियं श्रुतिः ॥ १०२ ॥**

यदि वेदः अपौरुषेयः स्यात् बुद्धिपूर्वको न स्यादिति यावत् तर्हि अप्रमाणं स्यात् पिपीलिकालिपिवदिति तर्कपराहतं अपौरुषेयत्वसाधकमनुमानमिति चेन्न व्याप्तिविकलत्वात्तर्काभासोऽयं इत्याह **पिपीलिकालिपिश्चेति** ॥ अर्थबाध एवाप्रामाण्यं प्रयोजयति । यत्र बाधो नास्ति तत्र लिपिरपि प्रमाणमेवेति । तदुक्तं 'पिपीलिकालिपिश्चापि प्रमाणमविरोधतः' इति ॥ १०२ ॥

**किञ्च स्वव्याप्तवर्णानां लिपिरसाध्यनुमापिका ।**
**वाक्यं तैः कुरुते तज्ज्ञस्ततः पुंवाक्यमेव तत् ॥ १०३ ॥**

**लिपिकारकदोषेण दुर्लिप्या दुष्टवर्णधीः ।**
**तेनायोग्यार्थकं वाक्यं ततश्चामानता क्वचित् ॥ १०४ ॥**

**अनुमापिका** स्मारिका । तदुक्तं सुधायां नविलक्षणाधिकरणे 'तस्मात्पुरुषलिपिरपि पदमिव पदार्थस्य वर्णानां स्मरणहेतुरेष्टव्ये'ति । न्यायामृते च 'रेखास्मारितवर्णस्यैवार्थबोधकत्वात्' इति ॥ १०३ ॥ १०४ ॥

**अनादितस्तु यद्वाक्यं शृणोत्येवाखिलो जनः ।**
**स्वयं पुनर्न कुरुते श्रावकाश्च सुरर्षयः ॥ १०५ ॥**

श्रुतिशब्दोऽप्यपौरुषेयत्वं गमयतीत्याह **अनादितस्त्विति** ॥ तदुक्तं तत्त्वनिर्णये 'अतः श्रुतित्वमेतासां श्रुता एवाखिलैर्जनैः' इति । तट्टीकायां च 'अखिलः श्रुता एव न तु केनापि कृता इति श्रुतिशब्दवाच्यत्वेन लभ्यते' इति ॥ १०५ ॥

**यस्य स्वराश्च नियताः क्रमाश्च नियतास्सदा ।**
**फलं च दृश्यते यस्य तद्धि मानं महत्तरम् ॥ १०६ ॥**

**फलमिति** ॥ न अत्र फलदर्शनेन लिङ्गेन प्रामाण्यानुमाने तात्पर्यम् । प्रामाण्यस्य परतस्त्वापत्तेः । किं तु क्वचित्फलादर्शनेनाप्रामाण्यशङ्का न कार्येत्येव । तदुक्तं 'दृश्यते तु' इति सूत्रभाष्यटीकायां 'न फलादर्शनेन श्रुत्यादेरप्रामाण्यं वक्तव्यम्' इति ॥ १०६ ॥

**दोषाभावादमानत्वशङ्काऽस्यां किंकृता वद ॥ १०७ ॥**

पूर्वोक्तं एव विशदयति **दोषाभावादिति** ॥ १०७ ॥

**स्वोक्ताश्वासाय यां व्यासस्सूत्रे सूत्रे जगौ हरिः ।**
**तां श्रुतिं कोऽपरः कुर्यान्मानं वा किं ततोऽधिकम् ॥ १०८ ॥**

**सूत्र इति** ॥ 'आह हि' 'तथा हि दर्शयति' इत्यादिनेति बोध्यम् । ॥ १०८ ॥

अनाद्युपाध्यायपारम्पर्येणैव नि॰ोशितुः ।
नियतैकप्रकारत्वं नित्यत्वं तच्च नेति न ॥ १०९ ॥
सोऽनाथानां यतः पंथास्तस्माद् गतिका गतिः ।
सनाथास्तु वयं द्वेधाप्यनादित्वं प्रचक्ष्महे ॥ ११० ॥

मीमांसको जीवबुद्ध्युपाधिकं एकमेव क्रमं ततश्चैकमेव नित्यत्वं नियतैकप्रकारकत्वलक्षणमङ्गीकरोति । निरीश्वरत्वात्तस्य । तेन 'क्रमस्य कृतकत्वेऽपि इति वि.त.नि.टीकोक्तिः सङ्गच्छते । वयं तु नित्येश्वर-बुद्ध्युपाधिकमपि क्रमं ततश्च कूटस्थनित्यत्वमपीति 'नित्या वेदाः' इति तत्वसंख्यानं, वेदशब्दस्य वर्णोपलक्षणपरा तट्टीका चोपपद्येते इति द्वाभ्यामाह **अनादीत्यादिना** ॥ १०९ ॥ ११० ॥

एवं च विमतो वेदो मानमित्यनुमीयते ।
अवद्याऽमूलवाक्यत्वादाप्तवाक्यवदेव हि ।
अवद्याऽमूलता चास्य नित्यत्वाद्गगनादिवत् ॥ १११ ॥
कर्तृप्रमितिशून्यत्वान्नित्यत्वं चास्य सिद्ध्यति ।
तद्वदेव ततो वेदस्सिद्धो धर्मानुशासनम् ॥ ११२ ॥
अन्यथा धर्मसिद्धिर्नैत्यस्ति तर्कोऽतिकर्कशः ॥ ११३ ॥

तत्वनिर्णयटीकोक्तमार्गेण प्रामाण्यं साधयति । **एवं चेत्यादिना** ॥ अत्र शब्ददोषाः पुरुषदोषाधीना इत्येतदादावुपस्कर्तव्यम् । **मानमिति** । नाप्रमाणमित्यर्थः । **अवद्येति** । पुरुषदोषप्रयुक्तदोषाभावात् इत्यर्थः । न चासिद्धिः । **नित्यत्वात्** पुरुषाप्रणीतत्वादित्यर्थः । नित्यत्वं च अप्रमित-कर्तृकत्वात् । विपक्षे बाधकसूचनाय **धर्मेति** । तदेव व्यनक्ति **अन्यथेति** । ॥ १११ ॥ ११२ ॥ ११३ ॥

**कारीर्या वीक्ष्यते वृष्टिः पुत्रेष्ट्या पुत्रजन्म च ।**
**कृषाविवाङ्गवैकल्यात्क्वचिच्च विकलं फलम् ॥ ११४ ॥**

एवं अप्रामाण्याभावे निश्चिते परोक्ताः अनृतत्वादयो युक्तयो निश्चितासिद्धा एव भवन्तीत्याह **कारीर्येति** । फलवैकल्यस्याङ्गवैकल्येनैवोपपादनीयत्वादित्यर्थः । तदुक्तं तत्वनिर्णयटीकायां 'अनृतत्वादयः प्रागप्रामाण्याभावनिश्चयात्सन्दिग्धासिद्धाः । निश्चिते तु अप्रामाण्याभावे निश्चितासिद्धा एव भवन्ति' इति ॥ ११४ ॥

**अनृतत्वादयो दोषास्संदिग्धासिद्धमूर्तयः ।**
**नामानत्वं ततोमुष्य साधयेयुः परोदिताः ॥ ११५ ॥**

**सन्दिग्धेति** । प्रागप्रामाण्याभावनिश्चयादित्यर्थः ॥ ११५ ॥

**कलौ युगे कलहिनां षण्णां षण्मार्गवर्तिनाम् ।**
**तद्बलं द्वापराचार्यव्यासवाचां च यद्बलम् ॥ ११६ ॥**

व्यासादीनामाप्तत्वं तद्वचसां च प्रामाण्यं चान्ततो वेदवाक्येनैवावसेयमित्याह **तद्बलमिति** ॥ ११६ ॥

**अष्टादशपुराणानां कर्ता सत्यवतीसुतः ।**
**तदुक्तौ कस्य न श्रद्धा यदुच्छिष्टं जगत्त्रयम् ॥ ११७ ॥**

अष्टादशपुराणानामित्युपलक्षणम् । सूत्रभारतादीनां च । कर्ता निर्माता उपदेष्टा च । **तदुक्तौ** 'वेदशास्त्रात्परं नास्ति' 'ज्ञापिका परमा श्रुतिः' इत्यादौ । **यदुच्छिष्टं** यदुपजीव्यैव प्रवृत्तम् । **जगत्त्रयम्** मन्वादिस्मृतिजातम् । अनेन बादरायणस्य 'गुरुर्गुरूणां प्रभव' इत्यनुव्याख्यानोक्तं परमाप्तत्वं वर्णितं ध्येयम् ॥ ११७ ॥

**वेदो न मानमिति तु द्वौ चत्वारोऽस्य मानताम् ।**
**मन्वते तद्बहोरेव तन्वतेऽनुग्रहं बुधाः ॥ ११८ ॥**

**छन्दांस्यनन्तानि किल ग्रन्थस्तैस्तैः कृतोऽल्पकः ।**
**कोन्धोरन्धोनुसन्धत्ते सिन्धोरग्रे पराक्रमम् ॥ ११९ ॥**

**कलौ किल षडाचार्या वेदस्तु त्रियुगोत्सवः ।**
**राजसूयाश्वमेधाद्या यन्मूलाश्चक्रवर्तिनाम् ॥ १२० ॥**

**द्विपात्त्रिपाच्चतुष्पाच्च तत्र धर्मोऽत्र चैकपात् ।**
**धर्मानुशासनं तद्वा वादिवाग्वा विचार्यताम् ॥ १२१ ॥**

१) 'बहुदर्शनाचार्याङ्गीकृतप्रामाण्यकत्वात् २) बहुविस्तरत्वात् ३) बहुयुगानुवर्तित्वात् ४) बहुतरधर्मसञ्चारकालीनपुरुषाभ्युपगतप्रामाण्यकत्वात् इत्येवं बहुधा बहुत्वनिमित्तकप्राबल्यमपि वेदस्यास्ति इत्याह क्रमेण चतुर्भिः श्लोकैः **वेद इत्यादिना** ॥ ११८ – १२१ ॥

**धर्मप्रवृत्तिकालीनं वाक्यं न किल धर्मवाक् ।**
**कलावधर्मकलिले धर्मशास्त्रकृतः किल ॥ १२२ ॥**

अवैदिकैः कलौ धर्मशास्त्ररचनं, जात्यन्धैः आलोकशास्त्रनिर्माणमिवापहसनीयमित्याह **धर्मेति** ॥ १२२ ॥

**अद्यापि मध्यस्थगिरा पूर्वशासनतोऽपि वा ।**
**नृणां कलहशांतिस्स्यात्ताहग्वेदस्तु कस्य न ॥ १२३ ॥**

'अशेषसंशयच्छेत्ता निस्संशय उदारधीः ॥ एकश्चेत् प्राश्निको ज्ञेयः सर्वदोषविवर्जितः' ॥ इति कथालक्षणोक्तप्राश्निकलक्षणसंपन्नत्वेन कुसमयिनां विप्रतिपत्तिनिरासपूर्वकं तत्वावधारणाय, वयोऽधिक-विष्णुभक्त-मध्यस्थवचनमिव, वेदवाक्यमेवादरणीयमित्याह **अद्यापीति** ॥ १२३ ॥

**छन्दस्स्वयस्मयादीनीत्याद्यैश्शब्दानुशास्तिकृत् ।**
**अमानयद्धि यन्मार्गं मानं कस्य न सा श्रुतिः ॥ १२४ ॥**
**तस्माद्वेदार्थकुशलो वेद धर्मं कलावपि ।**
**न वेद यो वेदमार्गं न स वेद शुभाशुभे ॥ १२५ ॥**

अलौकिकोऽपि वैदिकप्रयोगः सर्वत्र साधुरेव मन्तव्यः इति व्याकरणाचार्यैः समर्थितत्वाच्च वेदः प्रमाणमित्याह **छन्दसीति** ॥ १२४ ॥ १२५ ॥

**वैदिकैः किल गायत्रीमन्त्राद्यैर्मन्त्रितेषवः ।**
**अस्त्रीभवन्ति स्म राज्ञां कस्तच्छास्त्रं न मानयेत् ॥ १२६ ॥**

फलोपलम्भरूपविजातीयसंवादेनापि वेदे अप्रामाण्यशङ्कानिरासः सुलभः इत्याह **वैदिकैरिति** ॥ १२६ ॥

**यत्स्वाध्यायैः किलाद्यापि व्याध्याद्यैर्नास्त्युपद्रवः ।**
**धर्मस्य वेदनादेव स वेदो नात्र संशयः ॥ १२७ ॥**

व्याध्यादिनिवृत्तिरूपं यद्दृष्टफलं तज्जनकादृष्टोत्पादकाऽऽनुपूर्व्युपेतत्वाच्च वेदो माननीय इत्याह **यदिति** । 'वेदास्ते नित्यविन्नत्वात्' 'वेदाह्येवैनं वेदयन्ति' इत्यादिप्रमाणैर्वेदशब्दस्यान्वर्थताख्यापनाच्च तत्प्रामाण्यमित्याह **वेदनादिति** ॥ १२७ ॥

**स्वबन्धुषु कृतः स्नेहस्स्याद्धि रागादिदोषतः ।**
**पान्थेषु तु कृतः स्नेहो धर्मं श्रुत्वैव तन्मुखात् ॥ १२८ ॥**
**तथा स्वस्वकृते शास्त्रे सर्वस्य स्याद्दुराग्रहः ।**
**सर्वैरकृतशास्त्रेऽस्मिन्धर्मसिद्ध्यै परं रतिः ॥ १२९ ॥**
**सुवित्तस्यैव चोरोऽस्ति दुर्वित्तस्य न तस्करः ।**
**अमानं चेत्स्वतोजीर्णं कुतो वेदमचूचुरत् ॥ १३० ॥**

धर्मविद्वेषिणां दैत्यानां द्वेषविषयत्वात् देवमान्येयं वेदसंपदित्याह **सुवित्तस्येति** ॥ १२८ – १३० ॥

**हयग्रीवमुखोद्गीर्णा सा वाणी धर्मशासनम् ।**
**अतस्तदुदितो धर्मो ह्यधर्मस्तद्विपर्ययः       ॥ १३१ ॥**

**हयग्रीवमुखोद्गीर्णेति** ॥ हेतुगर्भं विशेषणम् । उद्गीर्णमात्रं उपदिष्टमात्रम् न तु कृतम् । अतः अपौरुषेयत्वेन निर्दोषत्वात् ॥ धर्म इति चार्वाकमतनिरासोपक्षेपार्थम् ॥ १३१ ॥

**चार्वाकस्य न वाक्चार्वी कुर्वीतात्मवधं यतः ।**
**अक्षैकमानतावाकिं रक्षेदात्मप्रमाणताम्       ॥ १३२ ॥**

एवं वेदस्य प्रामाण्यं समर्थ्य तत्स्थेम्ने तदपलापिनः कुसमयान्निराकरोति 'तस्मादाचार्यतरणिसरणिः शोभतेतराम्' (श्लो. ५१२) इत्यन्तेन ग्रन्थेन । तत्र चार्वाकः शब्दस्यैव प्रामाण्यं नाङ्गीकरोति । तत एव धर्मादिकमपि । बौद्धा जैनाश्च स्वस्वाचार्यवचनैरेव धर्मादिसिद्धिं सङ्गिरन्ते । प्रामाण्यस्य परतस्त्वं मन्वानो हैतुकस्तार्किको वेदस्यापौरुषेयत्वं तदुक्त ईश्वरस्यानन्तगुणवत्वं च न सहते । निरीश्वरः प्राभाकरः केवलसिद्धेऽर्थे वाक्यस्य व्युत्पत्त्यभावं मनुते । तानेतान्कुवादान्निराचिकीर्षुः आदौ चार्वाकमतं प्रतिक्षिपति **चार्वाकेति** । मुखतो वेदस्य प्रामाण्यमुररीकृत्य तस्यातत्वावेदकत्वोक्त्या ईश्वरस्य नैर्गुण्यं वर्णयन्तं मायावादिनं सविस्तरमुत्तरत्र दूषयिष्यतीति ग्रन्थप्रवृत्तिक्रमोऽत्रानुसन्धेयः । अनेन सौत्रातःशब्दोक्तहेतुपञ्चकविवरणं कृतं बोध्यम् । **आत्मवधमिति** । वाक्यमात्रमप्रमाणमिति ब्रुवाणः स्ववाक्यस्याप्यप्रामाण्यं स्वयमेवाङ्गीकरोतीति भावः ॥ १३२ ॥

**शिष्यप्रमायै वाग्वाच्या सा शोच्या मानता न चेत् ।**
**न प्रयोज्या न तैः पूज्या मूको लोकायतो भवेत् ॥ १३३ ॥**

'अन्यथा सर्ववाचनिकव्यवहारासिद्धेः' इति गीताभाष्योक्तं दोषमाह **शिष्यप्रमाया इति** ॥ १३३ ॥

किं च प्रत्यक्षमेवैकं मानमित्यादिरूपिणी ।
वाक् च प्रमापिका चेत्स्याद्वाक्यार्थप्रच्युतिस्तदा ॥ १३४ ॥

यद्यप्रमापिका सा स्याद्वाक्यार्थप्रच्युतिस्तदा ।
अर्थयाथार्थ्यतः प्राहुरमानत्वं यतो बुधाः ॥ १३५ ॥

अतस्त्वच्छास्त्रमानत्वे जितं त्वत्प्रतिवादिभिः ।
त्वच्छास्त्रामानतायां च जितं त्वत्प्रतिवादिभिः ॥ १३६ ॥

त्वद्वाक्यार्थोऽस्ति चेन्मानमागमोऽपि बलाद्भवेत् ।
त्वद्वाक्यार्थो न चेन्मानमागमोऽपि बलाद्भवेत् ॥ १३७ ॥

चित्रं पक्षद्वयेप्येकं पतितं दूषणं तव ।
तं त्वां पतितपङ्क्तिस्थं संतो हन्त हसन्ति ते ।
अखर्वगर्वचार्वाकदुर्वाक्यं नोर्वकुर्वत ॥ १३८ ॥

'स्वसमयस्यानर्थक्यमङ्गीकृतमेवेति नासौ समयी' इति तत्वनिर्णयोक्तिमनुरुन्धानः उभयतः पाशारज्जुभिः चार्वाकं निबध्नाति किञ्चेत्यादिभिः । ॥ १३४ ॥ १३५ ॥ १३६ ॥ १३७ ॥ १३८ ॥

कथा वृथैव जल्पादौ तव कैतवशील तत् ।
यन्नास्ति युक्तिरुक्तिस्तेगर्जत्सु प्रतिवादिषु ॥ १३९ ॥
अक्षैकमानतावादी को वा दीनो न वादकृत् ॥ १४० ॥

युक्तिशब्दयोः प्रामाण्यमनङ्गीकुर्वाणस्य कथायामधिकार एव न संभवतीत्याह **कथेत्यादिना द्वाभ्याम्** ॥ १३९ ॥ १४० ॥

तेक्ष्णस्तीक्ष्णकटाक्षस्तान्प्रतिवक्ष्यति कां कथाम् ।
अतस्त्वत्क्रियया सर्वा विरुद्धा प्रक्रिया तव ॥ १४१ ॥

एवमपि कथाप्रवेशमभिलषतः स्वक्रियाविरोधमाह **तेऽक्ष्ण इति** । ॥ १४१ ॥

**अथ प्रत्यक्षदृष्टेऽर्थे यदा वाक्यं प्रयुज्यते ।**
**तेन बोधोऽपि न स्याच्चेद्धीनास्याद्वक्तृतैव ते ॥ १४२ ॥**
**स्याच्चेत्प्रमात्वं चावश्यं तस्येत्यासीद्धि मानता ।**
**तत्र प्रयुक्तयुक्तेश्च तद्वदेव प्रमाणता ॥ १४३ ॥**

अथ, शब्दस्य बोधकत्वमुपेत्य प्रत्यक्षसंवादित्वमात्रमङ्गीक्रियते न तु प्रामाण्यमिति इति मतम् तर्हि वाचोभङ्ग्या प्रामाण्यमेवाङ्गीकृतमिति शब्दोऽप्रमाणमिति रिक्तं वच इत्याह **अथेत्यादिना** ॥ तदुक्तं तत्वनिर्णयटीकायाम् 'एवं तर्हि आगमादिकं ज्ञानमुत्पादयति तच्च संवादीत्यङ्गीकृतम् । किमतोऽधिकं प्रामाण्यं नाम यन्नाङ्गीक्रियते' इति । आदिशब्देन अत्र अनुमानं ग्राह्यम् ॥ १४२ ॥ १४३ ॥

**प्रत्यक्षस्यैव मानत्वे युक्तिश्चेत्कथ्यते त्वया ।**
**अनुमानं तदा मानं यदि युक्तिर्न कथ्यते ।**
**अनुमानं तदा मानं राजाज्ञा न हि ते वचः ॥ १४४ ॥**

समानन्यायेन युक्तेरपि प्रामाण्यं सिद्धमित्याह **प्रत्यक्षस्यैवेति** । ॥ १४४ ॥

**नापि हार्दगुहाबोधः प्रत्यक्षेणैव जायते ।**
**तद्बोक्तॄणां च पातॄणामनुमानं परायणम् ॥ १४५ ॥**

प्रत्यक्षायोग्याया हार्दगुहाया युक्तिबलेन बोधानङ्गीकारे पानभोजनविलोपमतिप्रसङ्गमाह **न चेति** ॥ १४५ ॥

**तस्मात्प्रत्यक्षानुमानागमानां मानता ध्रुवा ॥ १४६ ॥**

'रेतो धातुर्वटकणिका' इति भाष्योदाहृतमोक्षधर्मवचनानुसारेण अतीन्द्रियादृष्टादिकं तत एव च प्रमाणत्रित्वं साधयति **तस्मादित्यादिना** । ॥ १४६ ॥

**यद्यदृष्टं न तर्ह्येकः पोष्योन्यः पोषकः कुतः ।**
**धनभावाभावतश्चेत्तयोरपि नियामकम् ।**
**किं दृष्टमेव यत्किञ्चिदुतादृष्टं विचारय ॥ १४७ ॥**
**दृष्टदेहेन्द्रियादीनामिच्छायत्नादिकस्य च ।**
**उभयत्रापि साम्येन स्यादृदृष्टं नियामकम् ॥ १४८ ॥**
**अतो यत्सदसत्त्वाभ्यां धन्येकोऽन्यस्तु निर्धनः ।**
**अदृष्टं च तदेष्टव्यं दृष्टवत्कार्यगौरवात् ॥ १४९ ॥**

लोके तावत्पोष्यपोषकभावादिकार्यवैचित्र्यं दृश्यते । न च कारणेन विना कार्योत्पत्तिः संभवति । तथा सति भोजनादीनि विनाऽपि तृप्त्याद्युत्पत्तिसंभवाद्भोजनादौ प्रवृत्त्युच्छेदप्रसङ्गात् । न दृष्टकारणवैचित्र्या-दुपपत्तिः । तत्साम्येऽपि कार्यवैचित्र्योपलम्भस्य प्रत्यक्षत्वात् ॥ अतोऽदृष्टमेव तत्र कारणमेष्टव्यम् इत्याह पञ्चभिः श्लोकैः **यद्यदृष्टमित्यादिना** ॥ १४७ ॥ ॥ १४८ ॥ १४९ ॥

**तद्धेतुशुभकर्मादेरत्रादृष्टस्य सर्वथा ।**
**करणायान्यदेहेषु नित्योऽन्योप्यस्ति देहभृत् ॥ १५० ॥**

**तद्धेत्विति** । धनिकत्वादिहेत्वित्यर्थः । अयं भावः । धनिकत्वा-रोग्यादिकं पुण्यलभ्यमिति तावदविवादम् ॥ तत्र केचिदस्मिञ्जन्मनि अकृत-सुकृता अपि धनिनः आरोग्यशालिनश्च दृश्यन्ते । जन्मान्तरानुष्ठितसुकृतमेव तत्रागत्या कारणं वक्तव्यम् । तथा चैकस्यैव जीवस्यानेकदेहसंबन्धनिर्वाहार्थं देहातिरिक्तजीवसिद्धिरिति ॥ १५० ॥

**कार्यस्य निर्निमित्तत्वमुन्मत्तो वक्तुमर्हति ।**
**तृप्त्यर्थं को न भुञ्जीत सुखार्थं न यतेत कः ॥ १५१ ॥**
**अपि चाव्यङ्गकुणपे मरणं नाम किं तव ।**
**पूर्वदृष्टाङ्गनेत्रादेः पश्चादपि च दर्शनात् ॥ १५२ ॥**

'मरणेन चेष्टानिवृत्तिर्भवति न पुरा न स्वेच्छया' इति शास्त्रयोन्यधिकरणभाष्यटीकोक्तरीत्या देहान्यजीवं साधयति **अपि चेत्यादिना ।** विमतं अव्यङ्गं मृतशरीरं, जीवयोगनिवृत्तिमत्, निवृत्तचेष्टाकत्वात् व्यतिरेकेण जीवच्छरीरवत् इति युक्तिरिहाभिप्रेता । अत्र चेष्टा हिताहितप्राप्तिपरिहारानुकूलो व्यापारः । न परिस्पन्दमात्रम् । न च शिलादौ व्यभिचारः । तत्र जीवयोगस्य कदाऽप्यभावेन तन्निवृत्तिरूपसाध्यस्याभावादिति वाच्यम् । तत्र निरुक्तचेष्टाया अत एव तन्निवृत्तेश्चाभावेन हेतोरेवाभावात् । न चानात्मन एव कस्यचिद्योगनिवृत्त्याऽप्युपपत्तिः । तत्किमनात्मभूतं इन्द्रियरूपाङ्गानि वा श्वासवायुर्वा भूतत्रययोगविशेषो वा । आद्येऽपि इन्द्रियशब्देनातीन्द्रियं किमपि विवक्षितम् । गोलकमेव वा । द्वितीयेऽपि बहिःश्वासो वाऽन्तःश्वासो वा । इति पञ्चधा विकल्प्य क्रमेण निराह **पूर्वेत्यादिना किञ्चित्रलिखितमित्यन्तेन** पञ्चदशभिः श्लोकैः ॥ तत्र न तावदाद्यः अतीन्द्रियेन्द्रियस्य त्वयाऽनभ्युपगमात् । न द्वितीयः अव्यङ्गकुणपे गोलकानां पूर्ववदेव विद्यमानत्वस्य प्रत्यक्षत्वादित्याह **पूर्वदृष्टेति** ॥ १५१ ॥ १५२ ॥

**स्पर्शानुमेयनीरूपश्वासे नाश्वासवान्भवान् ।**
**मक्षिकामत्कुणादौ ते यस्य दृश्या स्थितिश्च न ॥ १५३ ॥**
**तस्माद्देहान्यजीवात्मा तत्र नास्तीति सा मृतिः ।**
**इत्येव सर्वथा वाच्यं न चेन्मृत्या मृतिस्तव ॥ १५४ ॥**

न तृतीयः अनुमानप्रामाण्यमनङ्गीकुर्वतः तव मते अनुमेयश्वासस्वरूपस्यैवासिद्धेः इत्याह **स्पर्शेति ।** किञ्च बहिःश्वासो वा तदभावो वा सूक्ष्मशरीरेषु निश्चेतुमशक्य इत्याह **मक्षिकेति ।** एतेनान्तःश्वासाभावरूपचतुर्थोऽपि प्रत्युक्तः । तस्य सर्वशरीरेषु दुरवधारणत्वात् । योगिशरीरेष्वपि श्वासाभावस्य विद्यमानत्वेन तस्य मरणानुपपादकत्वाच्चेति भावः ॥ १५३ ॥ ॥ १५४ ॥

**अतो योगविशेषेण यथा ताम्बूलरक्तिमा ।**
**तथा योगविशेषेण जडस्यैव प्रमातृता ।**
**इति यो वक्ति तस्यापि कुणपोऽभणदुत्तरम् ॥ १५५ ॥**
**पृथिव्यप्तेजसां योगो जीवद्देहेऽपि नापरः ।**
**स सर्वः कुणपेऽप्यस्ति वादी नः कुणपोऽभवत् ॥ १५६ ॥**

न पञ्चमः । स्यादेतदेवम् । यदि भूतत्रययोगविशेषस्य चेष्टां प्रति प्रयोजकत्वं स्यात् । चेष्टा खलु ज्ञानेच्छाप्रयत्नवतः प्रमातुर्दृष्टा । न च प्रमातृत्वं भूतत्रययोगविशेषेण संभवति । येन तन्निवृत्तिः, प्रमातृत्वं वा तत्प्रयोज्यचेष्टां वा निवर्तयेत् । त्रयाणां भूतानां योगः शरीरे प्रमातृत्वं तदा संपादयेद्यदा एकैकस्य पृथिव्याद्यन्यतमस्य प्रमातृत्वयोग्यता स्यात् । न च तदस्ति । न च समुदायिषु कुत्राप्यविद्यमानो धर्मः तत्समुदाये संजाघटीति । अथ मन्येत क्रमुकपर्णे चूर्णे च प्रत्येकमविद्यमानो रक्तिमा यथा तयोर्योगे सति ताम्बूले दृश्यते तथाऽत्रापि भवेदिति तन्न । वैषम्यात् । क्रमुकपर्णचूर्णे उभे रूपवद्वस्तुनी । तेन युज्यते ततोर्योगे रक्तवर्णोत्पत्तिः । न चैवं पृथिव्यादिकं प्रमातृत्वयोग्यतावत् इत्युक्तम् । येन तद्योगः शरीरे प्रमातृत्वं प्रयोजयेत् । किं चैवं पराभिमतो जीवार्हयोगो भूतानां कुणपेऽप्यस्ति । अतस्तन्निवृत्तिरेव तत्रासिद्धेत्याह **स सर्व इति । नः वादी** अस्मत्पक्षसमर्थनपरः ॥ १५५ ॥ १५६ ॥

**अतीन्द्रियेन्द्रियं नास्ति गोलकं तूभयत्र च ।**
**आत्माऽदृष्टेन कुत्रापि किं न्यूनं कुणपस्य तत् ॥ १५७ ॥**
**पूर्णो जीवार्हयोगोऽस्मिन्नानाकुम्यात्मके क्रमात् ।**
**तस्माद्देहस्वामिजीवस्याभावोऽत्र ध्रुवोऽभवत् ॥ १५८ ॥**

अपि चायं जीवार्हयोगो जीवच्छरीरादपि कुणप एव पूर्ण इत्याह **नानाकुम्यात्मक इति** ॥ १५७ ॥ १५८ ॥

**शवस्य नवरन्ध्रेषु वायोश्चास्ति गतागतम् ।**
**भस्त्रान्तरपि यो वाति तस्य यात्रा तु कुत्र न ॥१५९॥**

श्वासनिवृत्त्या चेष्टानिवृत्तिरिति द्वितीयं पक्षं कुणपेऽपि वायुसञ्चारमुपपादयन्नसिद्धिकथनेनाधिकदूषणेन परिहरति **शवस्येति** ॥ १५९ ॥

**पश्य निर्जीवदेहेन जीवसिद्धिरभूदहो ॥ १६० ॥**
**रक्तिमा रत्नधात्वादिपार्थिवेषु स्वभावतः ।**
**वर्तते स तु योगेन तज्जातीयेऽपि दृश्यताम् ॥ १६१ ॥**
**ज्ञानं तु पञ्चभूतात्मजडवर्गे न कुत्रचित् ।**
**अतो जडस्वभावो न तद्योगोऽपि जडे कथम् ॥ १६२ ॥**
**जपाकुसुमयोगेऽपि रूपवत्येव रक्तिमा ।**
**नीरूपवायौ किं रक्तशतयोगेऽपि रक्तिमा ॥ १६३ ॥**
**नान्धानां शतमप्यन्ध पश्यतीति न किं श्रुतम् ॥ १६४ ॥**
**चक्षुष्मता तु संयोगे तस्यापि स्याद्गतागतम् ।**
**एवं ज्ञानवता योगे देहे यात्रा न चेन्न च ॥ १६५ ॥**
**स च स्वभावतोऽज्ञानी स्यान्न कृत्रिमबोधवान् ।**
**किं चित्रलिखितं नेत्रं कश्चिदर्थं प्रपश्यति ॥ १६६ ॥**

तथा च प्रयोगः विमतो भूतत्रयसमुदायः न ज्ञानेच्छाप्रयत्नवान् तच्छून्यसमुदायिमेलनरूपत्वात् । सामान्यव्याप्तौ दर्शनाभावे अन्धानां शतम्, रूपाभावे वायुरक्तयोगः इत्यादिः अन्वयदृष्टान्तः, रक्तरूपे स्फटिकजपाकुसुमयोगः, क्रमुकपर्णचूर्णयोगश्च इत्यादिर्व्यतिरेकदृष्टान्त इत्याह **जपाकुसुमेत्यादिना** ॥ १६० – १६६ ॥

**अतो जडस्य जीवत्वं जडो वक्ति न पण्डितः ।**
**जीवस्तु जडदेहान्यो मान्यो यं देहिनं विदुः ॥१६७॥**

उपसंहरति **अत इति** ॥ १६७ ॥

**जातमात्रशिशोरम्बास्तनपानेष्टहेतुता ।**
**प्राग्भवेष्वनुभूतैतज्जातीयस्य निदर्शनात् ।**
**अनुमेया सा च देहजीवैक्ये शक्यते कथम् ॥ १६८ ॥**
**अन्यस्यैवानुभूतिस्स्यात्ततोऽन्यस्यानुमा भवेत् ।**
**नित्यदेहान्यजीवस्य पक्षे तु क्षेममेति सा ॥ १६९ ॥**

जन्मान्तरसद्भावे 'जातमात्रा मृगा गावः' इत्याद्यनुव्याख्यानतत्सुधोक्तयुक्तिं चाह **जातमात्रेत्यादिना** । अत्र विस्तरः भक्तिपादीयाद्याधिकरणसुधायां द्रष्टव्यः । कार्यकारणभावस्यातीन्द्रियत्वेन इष्टसाधनत्वज्ञानं न प्रत्यक्षगम्यम् । तदुक्तं **अनुमेयेति** । एतदुपलक्षणम् । उपदेशसाध्येत्यपि ग्राह्यम् । तदुक्तं सुधायां 'किंत्वनुमानोपदेशसाध्यमेव । न च मृगादीनामुपदेशः संभवति' इति । न चानुमानं अन्वयव्यतिरेकव्याप्त्यादिस्मरणेन विना संभवति । न चाननुभूते स्मृतिरुत्पद्यते । न चास्मिञ्जन्मन्यन्वयाद्यनुभवोऽस्ति । तदिदमुक्तं **जातमात्रेति** । प्राग्भवीयस्योपदेशस्यान्वयादेश्च स्मरणे पूर्वदेहस्मरणमपि अङ्गीकर्तव्यम् । यदैवमेतद्देहवर्तिनो मम न केवलमयमेव देहः किन्तु तत्प्रागन्योऽभूदिति देहान्तरस्मरणमापतितम् तदैतद्देहेन स्वस्यैक्याध्यवसायः कुतः स्यात् । किन्तु अनेकमणिष्वनुस्यूतं सूत्रमिवानेकदेहानुस्यूतमात्मानं पश्यतः स्वस्य ततोऽत्यन्तभेदावसितिरेव युक्ता । तदिदमाह **देहजीवैक्ये शक्यते कथमिति** ॥ १६८ ॥ १६९ ॥

**अतोऽम्बास्तनपानं तन्न शिशोरेव पुष्टये ।**
**जीवदेहान्यतायुक्तिमान्यतापुष्टयेऽप्यभूत् ॥ १७० ॥**

अत्र **अम्बा** इष्टसाधनत्वानुमा । **स्तनपानं**, पूर्वजन्म । **शिशुः** जीवदेहान्यतावादः । **पुष्टिः** देहान्यजीवस्य तन्नित्यत्वस्य च सिद्धिः इति हृदयम् ॥ १७० ॥

**भुक्तेः प्राग्भोक्ष्यमाणान्नव्यक्ताविष्टस्य हेतुता ।**
**अनुमेयाऽनुभूतान्नजातीयत्वेन केवलम्     ॥ १७१ ॥**
**अतोऽनुमानमानत्वमनङ्गीकुर्वतस्तव ।**
**नित्योपवासान्मृत्युस्स्यादित्युत्पश्यति यौक्तिकः ॥ १७२ ॥**

न केवलमनुमानप्रामाण्यानङ्गीकारे शिशोः स्तनपानानुपपत्तिः किन्तु प्राणिमात्रस्य सर्वस्य पानभोजनादिप्रवृत्तेरेवानुपपत्तिरित्याह **भुक्तेरित्यादिना** द्वाभ्याम् ॥ १७१ ॥ १७२ ॥

**जडदेहात्मता जीवे जडाकारेण चाकृतिः ।**
**यच्छेदभेदवेधाग्निदाहाद्यैस्स्ववधप्रदा ।**
**तद्बुधास्तां न मन्यन्ते मनःखेदाय यत्सदा ॥ १७३ ॥**

देहस्य भस्मीभावे जीवस्वरूपस्यैव नाश इति स्ववधपर्यवसन्नं वादं बुधा नैव स्वीकुर्युरित्याह **जडदेहेति** ॥ १७३ ॥

**सुखज्योतिस्स्वरूपात्मचितां साकारतां स्तुमः ।**
**या मौक्तनानाभोगानां भोक्तृत्वाय श्रुतौ श्रुता ।**
**सदा द्रष्टृत्ववक्तृत्वसौन्दर्यादिगुणाय च     ॥ १७४ ॥**

ननु देहस्य जीवस्वरूपत्वनिराकरणं स्वव्याहतम् । **स्वरूपेण** व्यवस्थितिरिति मुक्तौ स्वरूपदेहाङ्गीकारादित्यत आह **सुखेति** । अङ्गीकृतो देहः सुखज्ञानस्वरूपात्मकश्चिद्रूपः, निराकृतस्त्वतादृशो जडात्मक इति न विरोध इत्याशयः । क्वचिन्मौक्तभोगानुकूलाचेतनदेहानां स्वेच्छया स्वीकारोऽपि श्रुतिसिद्धत्वादनुमन्यते इत्याह **श्रुतौ श्रुता इति** । स्वरूपभूतेन चेतनात्मकेन, अस्वरूपेणाचेतनात्मकेन च भोगाङ्गीकारेऽपि चार्वाकाभ्युपगतजडदेहात्मता तु न सृतौ नापि मुक्तौ । चितः साकारत्वाङ्गीकारः मुक्तेः परमपुमर्थत्वोपपादकः भोगसाधनत्वादित्याह **मौक्तेति** ॥ १७४ ॥

**प्रमाणसत्त्वचिन्तां तु श्रुतिरेव निकृन्तति ।**
**युक्तिस्तु नित्यचैतन्याकारं सत्कुरुतेतराम् ॥ १७५ ॥**

जीवः करचरणाद्याकारोपेतस्वरूपः तथाविधेश्वरप्रतिबिम्बत्वात् प्रतिमुखवत् इति युक्तिसिद्धं च साकारत्वमित्याह **युक्तिस्त्विति** । न चासिद्धिः । 'रूपं रूपं प्रतिरूपो बभूवे'ति श्रुतिसिद्धत्वात् । मुखप्रतिमुखयोः समानाकारत्वं प्रत्यक्षसिद्धमिति नाप्रयोजकता । अतः सुदृढव्याप्तिपक्षधर्मतोपेततया युक्तिर्निरवकाशा । तदेतदाह **सत्कुरुतेतरामिति** ॥ १७५ ॥

**अणूनामणुराकारो यथा नित्योऽस्त्यनादितः ।**
**ज्योतिर्मयास्तथा जीवास्साकारास्सन्तु संततम् ॥ १७६ ॥**

आकारस्यानादिनित्यत्वमपि युक्तियुक्तमित्याह **अणूनामिति** । जीवः अनादिनित्याकारवान्, अणुत्वात् परमाणुवत् इति प्रयोगोऽभिप्रेतः ॥ १७६ ॥

**परितो मण्डलाकारात्पारिमाण्डिल्यसंज्ञिताम् ।**
**कथयन्ति महात्मानः परमाणुषु चाकृतिम् ॥ १७७ ॥**

दृष्टान्तो न साध्यविकलः प्रेक्षावदभ्युपगमादित्याह **परित इति** । ॥ १७७ ॥

**यथा जालमरीचिस्था वर्तुलास्त्रसरेणवः ।**
**ततोऽप्यत्यन्तसौक्ष्म्येण वर्तुलास्तेपि रेणवः ॥ १७८ ॥**
**हस्तादिः क्वचिदाकारः क्वचिदाकृतिरीदृशी ।**
**पृथुबुध्नोदराकारो घटस्येति न किं श्रुतम् ॥ १७९ ॥**
**अतो नित्यचिदाकारो युक्तिसिद्धो न वार्यते ॥ १८० ॥**

परमाणोर्वर्तुलत्वाकारः जीवस्य करचरणादिमत्त्वं इति तु वैषम्यमात्रम् । साकारत्वमुभयत्र सममित्याह **यथेत्यादिना** ॥ १७८ ॥ १७९ ॥ १८० ॥

**सर्वावकाशदात्री च व्याप्ता च विरलाऽऽकृतिः ।**
**नभ(सस्स्यान्न)स्यस्ति न चेदीशव्याप्तेः किं स्यान्निदर्शनम् ॥१८१॥**

ननु जीवः निराकारः नित्यत्वात् नभोवदिति सत्प्रतिपक्षतेत्यत आह **सर्वस्येति** ।नभसि व्याप्तविरलाकारसद्भावात्साध्यविकलो दृष्टान्त इति भावः ॥ अयमाशयः । ईशस्य व्याप्तविरलाकृतिः 'सर्वं व्याप्य नारायणः स्थितः' इति श्रुतिसिद्धा । तत्र 'आकाशवत्सर्वगतश्च नित्यः' 'यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते' इत्यादौ तत्र तत्राकाशो दृष्टान्तीक्रियते । अत आकाशेऽपि व्याप्तविरलाकारोऽवश्यमङ्गीकार्यः इति ॥ १८१ ॥

**दूरस्थैर्नीलिमा चास्य दृश्यते सर्वलौकिकैः ।**
**वायोश्च शीतस्पर्शस्याऽऽधाराकारोऽनुमीयते ॥ १८२ ॥**

प्रौढिवादेनाह **दूरस्थैरिति** । तथा च नीलरूपोपेताकारवत्त्वं आकाशस्याप्यस्तीति भावः । वस्तुतस्तु दूरस्थैर्नभोनीलिमप्रतीतिर्भ्रमरूपैव । तदुक्तं वादावल्यां 'नभोनीलिमप्रतीतिभ्रमताऽप्यागमाद्यवगम्यैवे'ति । नभोनैल्योपलम्भस्य प्रमात्ववादः न्यायामृते 'प्रत्यक्षस्य लिङ्गाद्यबाध्यत्वे बाधकोद्धारः' इति भङ्गे केचिदित्यादिनोपन्यस्तः । 'केचित्तु आकाशो नीलिमोदेतीति श्रुतेर्नभो नीलमेव समीपे तु भूसन्निकर्षस्य प्रतिबन्धकत्वान्नैल्यानुलम्भ इत्याहुः' इति । तट्टिप्पण्यां श्रीनिवासतीर्थाः । 'केचिदाहुरित्यस्वरसोद्भावनम् । तद्बीजं तु गुरुचरणा इत्थमुपदिशन्ति । तथा हि । सिद्धान्तेऽव्याकृतमेवाकाशं नीरूपं साक्षिवेद्यम् । 'आकाशो नीलिमोदेतीति श्रुतिर्भूताकाशविषयैव । नीलरूपोपेतमपि तद्भूताकाशमतीन्द्रियमेव । न सर्वजनप्रत्यक्षविषयः । 'भूतमप्यसितं दिव्यदृष्टिगोचर'मिति दिव्यदृष्टिगोचरत्वोक्तेः । नीलं नभ इति प्रत्यक्षं च सर्वजनसाधारणम् । अतो नायं पक्षः साधीयानिति इति । तथाऽपि प्रौढिवादेनापि आकाशस्य साकारत्वं सिद्ध्यति इत्यत्र तात्पर्यम् । यद्वा दृश्यते इत्यस्य पश्यार्थश्चानालोचने इत्यनुसारेण 'आकाशो नीलिमोदेति' इत्यागमेन ज्ञायते इत्यर्थः । दूरस्थैः इति उपलक्षणम् । सर्वैरपीत्यर्थः । तथाच श्रुतिसिद्धत्वादाकाशस्य यथा, तथा जीवस्यापि

प्रमितत्वात्करचरणाद्याकारोऽभ्युपगमनीय इति भावः । यद्वा दृश्यते इत्यनन्तरं योगिभिरिति शेषः । सर्वलौकिकैरित्यनन्तरं आगमतः इति च । तथा च योगिभिः प्रत्यक्षतो दृश्यते । तदितरैः आगमतः ज्ञायते इति हृदयम् ॥ स्पर्शः साकारद्रव्याश्रितः गुणत्वात् रूपवत् इति वायोरपि साकारत्वे युक्तिमाह **वायोरिति** ॥ १८२ ॥

**इतरेषां तु भूतानामाकारस्सर्वसाक्षिगः ।**
**पुंपशोस्तव यच्छृङ्गं निराकारं तदेव तत् ॥ १८३ ॥**

साक्षिगोचरः व्यवसायद्वारेति भावः । तथा च आकारस्य सत्त्वव्यापकत्वात् चेतनस्य सतो निराकारत्वं ब्रुवाणो व्याहतभाषी पुरुषपशुरित्याह **पुंपशोरिति** ॥ १८३ ॥

**ये जीवान्वैदिकं मन्या ज्योतीरूपान्वदन्ति ते ।**
**किं नोरीचक्रुरेतेषां सूक्ष्मदीपसमाकृतिम् ॥ १८४ ॥**

आकारे श्रुतिसिद्धस्य पारमार्थिकत्वस्य करचरणादिमत्त्वस्य चानङ्गीकारात् वैदिकंमन्या इत्युक्तम् । **दीपसमेति** । जडवर्तुलेत्यर्थः ॥ १८४ ॥

**वयं तु ज्योतिषस्तस्य ज्योतीरूपमुखं करौ ।**
**चरणावुदरादींश्च वदामोऽत्र किमद्भुतम् ॥ १८५ ॥**

त्वया सर्वथाऽनङ्गीकृतस्याकारस्य मयाऽभ्युपगमे स्यात्कथञ्चिदद्भुतम् । नैतदस्ति । आकारमात्रस्योभाभ्यामङ्गीकारात् । आकारे करचरणादिरूपवैलक्षण्यमात्रस्य मया स्वीकारे न किमपि तथाविधमपूर्वं इत्याह **किमद्भुतमिति** ॥ १८५ ॥

**त्वं तु ब्रूषे जडाकारं वयं त्वजडताश्रये ।**
**जडाद्विलक्षणाकारं ब्रूमो युक्तिः किमत्र न ॥ १८६ ॥**

अचेतनस्य स्वतःप्रवृत्तिविधुरस्य स्याद्वर्तुलत्वाद्याकारः । चेतनस्य तु स्वतःप्रवृत्तिमतो तन्निर्वाहककरादिमत्त्वाकार एव युक्तियुक्त इत्याह **त्वं त्विति** ॥ १८६ ॥

**पाञ्चभौतिकदेहेऽस्मिंस्तेजसोऽप्यस्ति रूपिता ।**
**सा शुद्धतेजोमात्रस्याप्यस्ति चेत्का क्षतिस्तव ॥ १८७ ॥**

देहस्तावत्सर्वांशेन पञ्चभूतात्मकः । स च करचरणादिमान् । तथा च देहगतस्य तेजोंशस्यापि तथाविधाकारः सिद्ध्यति । एवमेव तेजोमयस्यापि चेतनस्य तादृश आकारोऽस्ति चेत्किं तत्र दुर्घटमित्याह **भौतिक इति** । ॥ १८७ ॥

**आप्यतैजसवायव्यमात्रदेहाश्च किञ्चन ।**
**अतः पिण्डसमाकारं पिण्डभोक्तुर्न कल्पय ॥ १८८ ॥**

अथोच्येत पृथिव्यादिसहभूतस्य तेजोभूतस्य कराद्याकारसंभवेऽपि केवलस्य तस्य तथात्वं न दृष्टम् । कथं तद्दृष्टान्तेन केवलतेजोरूपस्य जीवस्य तन्निरूपणमिति । मैवम् । अग्निलोके तेजोमयशरीराणामपि तथाविधाकारदर्शनादित्याह **तैजसेति** । आप्यवायव्यानामुदाहरणं प्रसङ्गादिति ध्येयम् । गमनासनभोजनादिप्रवृत्तिनिर्वाहार्थमपि चेतनस्य करचरणादिकमेष्टव्यं इति प्रागुक्तं स्मारयन्नुपसंहरति **अत इति** ॥ १८८ ॥

**सुखरूपाश्च ते सर्वे ज्ञानरूपाश्च सर्वदा ।**
**अनादिनित्यास्सत्याश्च चिद्रूपावयवा यतः ॥ १८९ ॥**

जीवाः अनादिनित्यसत्यसुखज्ञानात्मकस्वरूपदेहोपेताः तादृशभगवद्रूपप्रतिबिम्बत्वात् । यो यत्प्रतिबिम्बः स तादृशाकारवान् यथा प्रतिमुख; इति युक्त्याऽपि जीवस्य जडविलक्षणाकारसिद्धिरप्रत्यूहेत्याह **सुखेत्यादिचतुर्भिः** । अत्र मुक्ता एव पक्षतया विवक्षिताः । इतरेषां तु अनादिनित्य-

सत्यस्वरूपदेहवत्त्वमात्रेण सादृश्यम् । प्रतिमुखेऽपि यथायथं किञ्चित्सादृश्यमेव न तु सर्वत्रैकविधमिति न दृष्टान्तानुपपत्तिः ॥ १८९ ॥

**न चेज्ज्योतिर्मयाकारसुभगस्य हरेरिमे ।**
**प्रतिरूपाः कथं जीवा भवेयुरिति चिन्त्यताम् ॥ १९० ॥**

अप्रयोजकतां निराह **न चेदिति** । हेतूच्छित्तिरेव विपक्षे बाधिकेति भावः ॥ १९० ॥

**पुरुरूपस्य जीवोऽयं रूपं रूपं प्रति प्रति ।**
**प्रतिरूपो बभूवेति श्रुतिर्गर्जति शाश्वती ॥ १९१ ॥**
**तच्छ्रुतिस्मृतिहर्षाय मनःकर्षाय पश्यताम् ।**
**भुक्त्यै च मौक्तभोगानां सत्यैवेयं व्यवस्थितिः ॥ १९२ ॥**

असिद्धिं निराह **श्रुतिरिति** ॥ १९१ ॥ १९२ ॥

**वृत्तता चतुरस्रत्वाद्याकारस्तदचेतने ।**
**चेतनेष्वेव हस्ताङ्घ्रिश्रोत्रनेत्रादिकाकृतिः ॥ १९३ ॥**

इदानीं लिङ्गशरीरगतेन औपाधिकेन पुमाकारेण जीवस्य स्वाभाविक पुमाकारं साधयति **वृत्ततेत्यादिना युक्तिश्चेत्यन्तैः** पञ्चदशभिः श्लोकैः । अयमिह प्रयोगोऽभिप्रेतः । जीवः स्वाभाविकहस्तपादाद्याकारवान्, स्वयोगेन लिङ्गशरीरे तथाविधाकाराधायकत्वात् । यत् स्वयोगेन अन्यत्र यद्धर्माधायकं तत् तथाविधस्वाभाविकतद्धर्मोपेतम् । यथा स्वसन्निधानेन स्फटिकमणौ लौहित्याधायकं जपाकुसुमं स्वाभाविकलौहित्योपेतं, यथा वा वेष्टनकञ्चुके वाससि तनुच्छायाऽऽधायकं यवनस्त्रीकलेवरं स्वतः तनुत्वोपेतम् इति ॥ तत्र जीवयोगरहितेषु घटपटाद्यचेतनेषु अदृष्टं विलक्षणं हस्तपादाद्याकारवत्त्वं लिङ्गशरीर एव तावदनुभवसिद्धमित्याह **वृत्ततेति** ॥ १९३ ॥

**इत्येव सर्वथा वाच्यं न चेल्लिङ्गकलेवरे ।**
**जडान्तरादृष्टरूपं कुतो जातं विचार्यताम् ॥ १९४ ॥**

लिङ्गदेहे अवयववस्त्वाकारः जीवयोगनिमित्तक एव कुतः । निमित्तान्तरात्कुतो न स्यात् । तथा च हेतोरसिद्धिरित्यतस्तन्निमित्तान्तरं विकल्पासहमित्याह **विचार्यतामिति** ॥ १९४ ॥

**प्रकृत्यंशा हि ते सर्वे सा च सूक्ष्माणुरूपिणी ।**
**न तस्याश्च तदाकारो विकृतौ स्थूलरेणुता ।**
**भवेत्परं पुमाकारे पुंरूपानुसृतिर्गतिः ॥ १९५ ॥**

तथाहि तन्निमित्तं प्रकृतिसंबन्धो वा तद्विकृतिर्वा ॥ नाद्य इत्याह **प्रकृत्यंशा इति** । तथा च तदंशानां सूक्ष्माणुरूपत्वमेव स्यात् न तु हस्तपादाद्याकारः । द्वितीयं निराह **विकृतौ इति** ॥ तृतीयः पक्षस्तु असंभावितः । अनादेरन्यस्याभावात् । सादेः स्वसंबन्धेन अनाद्याकारानाधायकत्वात् ॥ १९५ ॥

**साकारसर्वजीवाङ्गवेष्टनेनेष्टहेतुताम् ।**
**गतास्ते तत्समाकारास्तद्देहत्वं च लेभिरे ॥ १९६ ॥**

परिशेषतः सिद्धमाह **साकारेति** ॥ १९६ ॥

**तल्लिङ्गदेहता चैषां तत्तद्रूपानुमापनात् ॥ १९७ ॥**

लिङ्गदेह इति असाधारणव्यपदेशोऽपि तद्वेष्टितस्य जीवस्य चिद्देहरूपतां अनुमापयतीत्याह **तदिति** ॥ १९७ ॥

**अतादृशास्तादृशाश्च बाह्यदेहास्स्युरंहसा ।**
**अतो न लिङ्गतैतेषां सोऽनादिस्सादयस्त्विमे ॥ १९८ ॥**

बाह्यदेहानां कुतो न लिङ्गत्वं इत्यतः तत्र तच्छब्दप्रवृत्तिनिमित्ताभावादेवेत्याह **अतादृशा इति** । लीनं गमयतीति खलु लिङ्गशब्दनिरुक्तिः । तदुक्तं न स्थानतोऽपीति सूत्रभाष्यटीकायां 'लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव च' इति । लिङ्गदेहः स्वरूपदेहस्य साक्षाद्वेष्टनरूपोऽत एव तत्समानाकारः

अन्तर्लीनस्य स्वरूपदेहाकारस्य गमक इति युज्यते तस्य लिङ्गशब्द-वाच्यता। बाह्यदेहास्तु अंहसा दोषेण, कदाचित् साक्षाद्वेष्टनरूपत्वाभावात् अतादृशाकारा अप्युत्पद्यन्ते। ततो न तेषां स्वरूपदेहाकारानुमापकतेति न लिङ्गशब्दवाच्यत्वमित्याह **अतो न लिङ्गतेति**। तत्रैव हेत्वन्तरमाह **सादय इति**। कथं सादीनां सतां अनाद्याकारानुमापकत्वमिति भावः॥ १९८॥

**रेतसो बिन्दुमात्रेण बाह्यो देहश्च जायते।**
**न तस्यापि स्वतो रूपमजीवं चेद्रजो हि सत्॥ १९९॥**

जीवः स्वतः शरीरवान् स्वप्रवेशेन रेतसः शरीराकारपरिणाम-हेतुत्वात्। न चासिद्धिः। रेतसः शरीराकारः जीवप्रवेशनिमित्तकः तदन्वयव्यतिरेकानुविधायित्वात् इति युक्त्याऽपि जीवस्य शरीराकारवत्त्व-सिद्धिरित्याह **रेतस इति**॥ १९९॥

**साक्षीन्द्रियगणैर्योगे बाह्येन्द्रियगणोऽप्यसौ।**
**पृथक्पृथग्ज्ञानदस्स्यान्नो चेन्निर्हेतुको भवेत्॥ २००॥**

अनयैव दिशा जीवस्वरूपदेहस्य साक्षिणो इन्द्रियवत्त्वसाधनमपि सुलभमित्याह **साक्षीति**॥ जीवस्वरूपदेहः स्वतो ज्ञानसाधनेन्द्रियवान् स्वयोगे बाह्यदेहेन्द्रियेषु ज्ञानजननशक्त्याधायकत्वात्। विपक्षे अकारणकार्योत्पत्ति-र्बाधिका इत्याह **नो चेदिति**॥ २००॥

**अतस्स्वभावतस्सर्वे साकारा जीवराशयः।**
**तत्कञ्चुकोपमा तत्तल्लिङ्गमूर्तिश्च तादृशी॥ २०१॥**
**क्वचित्तु कर्मणा बाह्या भिन्नाकारा च जायते॥ २०२॥**
**जडान्तरादृष्टरूपं तनूनामेवमागतम्।**
**इति मन्ये न चेदन्ये, जडाश्च स्युश्शरीरवत्॥ २०३॥**
**अतस्स्वभावरूपस्याभावे रूपपरम्परा।**
**निर्निमित्ता भवेत्तस्मात्साकारा जीवराशयः॥ २०४॥**

**कञ्चुकेऽस्ति तनुच्छाया न त्वक्कञ्चुकवाससि ।**
**ततस्स्वाभाविकाभावे न स्युरौपाधिका अपि ।। २०५ ।।**
**स्याद्धि स्फटिकलौहित्यं स्वतो लोहितसन्निधौ ।**
**स्वेन रूपेण निष्पत्तिं मुक्तिमाह ततश्श्रुतिः ।। २०६ ।।**
**युक्तिश्चौपाधिकै रूपैस्स्वाभाविकमसाधयत् ।। २०७ ।।**

प्रागुक्तं प्रमेयजातं सङ्क्षेपेणानूद्योपसंहरति सप्तभिः श्लोकैः **अत इत्यादिना** ।। २०१ – २०७ ।।

**यस्तु वस्तु निराकारं वक्ति तत्वं न वेत्ति सः ।**
**चित्त्वाचित्त्वाश्रयं तत्वमित्थमित्यति(मङ्गलं)निर्मलम् ।। २०८ ।।**

किञ्च चित्त्वाचित्त्वान्यतराकारोपेतत्वं तत्त्वस्य लक्षणम् । आकारानङ्गीकारे तत्त्वस्वरूपसिद्धिरेव दुर्घटेत्याह **यस्त्विति** ।। २०८ ।।

**गुरुश्चार्वाकविद्याया गुरुर्मे नाकिनां गुरुः ।**
**अतस्तत्कृपया श्रौतमतस्थितिरपीरिता ।। २०९ ।।**

इदं चार्वाकमतनिराकरणकौशलं, मम हृदि स्थित्वा ज्ञानोपदेष्टुः मूलगुरोर्बार्योः कृपया तथा देवगुरोः चार्वाकमतप्रवर्तकस्य बृहस्पतेश्च कृपया प्राप्तमित्याह **गुरुरिति** ।। २०९ ।।

**क्षीरस्योत्सेचनं को वा निरुणद्ध्याज्ञया जनः ।**
**वस्त्रेणापि ग्रहः प्रोक्तो राजमन्दिरसर्पिषः ।। २१० ।।**

ननु चार्वाकमतनिराकरणे प्रस्तुते, मायावादनिराकरणं कुतोऽत्र विस्तृतमित्यत आह **क्षीरस्येति** । अग्नौ तापितस्येति शेषः । अयमाशयः । **चार्वाको** जीवस्य जडाकारमपि तावत्सत्यमङ्गीकुरुते । मायी तु आकारमात्रम**पारमार्थिकं ब्रूते** । तेन अयं तत्त्ववादस्य ततोऽप्यतिशयेन प्रतिपन्थी । प्रतिपन्थिनिराकृतिश्च वादिमात्रस्वभावः क्षीरस्योत्सेचनमिव । न हि स्वभावः

स्वकार्यकृतौ प्रस्तुतत्वमपेक्षते । अतः पर्यनुयोग एवायं अनवसरदुःस्थ इति ॥ किञ्च प्रसङ्गसङ्गतिरत्रास्त्येवेत्याह **वस्त्रेणेति** । स्वीकर्तुं पात्रं नास्तीत्येतावता राजमन्दिरसर्पिनोपेक्षार्हम् । तथा स्मृतं भगवन्निन्दकं मायिमतमपि नोपेक्षार्हं किन्तु दूष्यमेवेत्याशयः ॥ २१० ॥

**निरङ्कुशः कामभोगः फलं किल भवन्मते ।**
**तच्च तक्षकमौलिस्थरत्नाहरणयत्नवत्** ॥ २११ ॥

'वक्तृश्रोत्रोरभिमतमनन्यसाध्यं फलमधिकृत्य तद्धेतुभूतं प्रमाणान्तराप्राप्तं अर्थं प्रतिपादयतां वाक्यानां समूहो हि शास्त्रमित्युच्यते' इति तत्त्वनिर्णय-टीकोक्तिं हृदि कृत्वा, प्रयोजनाद्यभावेनापि चार्वाकशास्त्रस्य शास्त्रत्वमपाकरोति **निरङ्कुश इत्यादिना** । तथा हि । त्वदभिमतनिरङ्कुशकामोपभोगस्य शास्त्रफलत्वं न संभवति । तस्य लब्धुमेवाशक्यत्वादित्याह **तक्षकेति** । ॥ २११ ॥

**धर्माङ्कुशस्य छेदेऽपि धनाभावाङ्कुशस्य न ।**
**तस्य निर्मूलनायास्ति धर्मः कोपि न ते मते ॥ २१२ ॥**
**धनिनां परिचर्या वा चौर्यं वा कार्यते त्वया ॥ २१३ ॥**
**तच्च बन्धादिनिर्बन्धैर्मृतिभीतिगतागतैः ।**
**तेषां दुःखार्णवे मङ्क्तुमभूद्रन्तुं न कर्हिचित् ॥ २१४ ॥**
**अतस्ते नैव मज्जेरन्भवच्छास्त्रमहोदधौ** ॥ २१५ ॥

किञ्चेदं फलं गुरोर्वा शिष्याणां वा, तत्रापि प्रेक्षावतामज्ञानां वा, तेष्वपि धनिनां निर्धनानां वा इति विकल्पान् खण्डयति **धर्मेत्यादिना** । कामोपभोगा न शास्त्रलभ्याः किन्तु धनलभ्या इत्यविवादम् । धनप्राप्तिश्च चौर्येण वा धनिपरिचर्यया वा स्यात् । तदुभयमपि गुरोः शिष्याणां च दुःखार्णवे निपतनपर्यवसायि कथं फलं स्यादित्याह त्रिभिः **धर्मेत्यादिभिः** ॥ २१२ ॥ २१३ ॥ २१४ ॥ २१५ ॥

**धनिनस्तु मदेनान्धाः प्रवर्तन्ते न ते मते ।**
**तेषां च न फलायालं तत्र शास्त्रप्रचोदना ॥ २१६ ॥**

उन्मत्ताः प्रागेव रागेण भोगेषु लम्पटा धनिनो न त्वदुपदेशं प्रतीक्षन्त इत्याह **धनिनस्त्विति** ॥ २१६ ॥

**बहुभुक्तावजीर्तिस्स्याद्बहुपाने महोदरम् ।**
**बहुस्त्रीभोगतो रोगा यद्दृश्यन्ते पदे पदे ॥ २१७ ॥**
**किं न भाराय महते बहुदारपरिग्रहः ।**
**परस्परविरोधाद्यैः पत्युर्मृत्युप्रदा हि ते ॥ २१८ ॥**
**परस्त्रीभोगतः किं न शिरश्छेदादिकं भयम् ॥ २१९ ॥**
**दुःखोज्झितं सुखं प्रार्थ्यं न तु दुःखान्वितं सुखम् ।**
**दुःखोदर्कसुखेऽत्यल्पे को नून्मत्तः प्रवर्तते ॥ २२० ॥**
**तस्मान्महानर्थसार्थसंकुलास्सुखविप्लुषः ।**
**न प्रेक्षावत्प्रवृत्त्यै स्युर्निवृत्त्यै स्युः परं विदाम् ॥ २२१ ॥**

कथञ्चिल्लभ्योऽपि भोगो रोगमरणाद्यनर्थप्रापकत्वान्नैव प्रार्थनीयः इत्याह **बहुभुक्ताविति** ॥ २१७ – २२१ ॥

**अज्ञास्तु रागतो भोगे प्रवृत्ताः पूर्वमेव हि ।**
**न ते शास्त्रमपेक्षन्ते नापि धर्माङ्कुशाद्भयम् ।**
**रागोद्रेकाख्यदुष्प्रेक्षरूक्षहर्यक्षरक्षिणाम् ॥ २२२ ॥**

अज्ञानां प्रवृत्तिः न शास्त्रापेक्षेत्याह **अज्ञास्तु इति** ॥ २२२ ॥

**अतो निष्फलमेवाभूच्छास्त्रं ते क्लीबशस्त्रवत् ॥ २२३ ॥**

तथा च निरङ्कुशभोगस्य फलत्वस्यैव अभावात्, लब्धुमशक्यत्वात्, अनन्यलभ्यत्वाभावात्, वक्तृश्रोत्रोरनभिमतत्वाच्च न प्रयोजनत्वमित्युपसंहरति **अत इति** ॥ २२३ ॥

**कस्तेऽधिकारी स्वस्थात्मा मत्तस्याप्यस्ति मृत्युभीः ।**
**विषयस्य विचारश्च युक्तितस्स्यान्न शक्तितः ॥ २२४ ॥**

प्रयोजनाभावादेव तद्धेतुभूतविषयजिज्ञासोरधिकारिणोऽप्यभाव इत्याह **कस्ते इति** । विषयोऽपि धर्माभावो वा धर्मे प्रमाणाभावो वा । तदुभयमपि प्रत्यक्षेणैव सिद्ध्यतीति मतं उत तदितरप्रमाणाभ्यां इति विकल्प्य दूषयति **विषयस्येत्यादिना** ॥ २२४ ॥

**अक्षं स्यात्तवलीलायै न पक्षान्तरशिक्षणे ।**
**तच्च युक्त्याख्यशस्त्रेण नान्येनेति मतिर्मम ॥ २२५ ॥**
**अक्षानुकूलस्स्यादर्थस्तद्विरुद्धस्तु नेत्यपि ॥ २२६ ॥**
**तथा सर्वत्र दृष्टत्वादिति युक्त्यैव सिद्ध्यति ।**
**युक्तेरमानता यस्य तस्य निर्विषयं मतम् ॥ २२७ ॥**
**किञ्च दृष्टं समस्तं च दृष्ट्या सिद्ध्येन्न शास्त्रतः ।**
**अदृष्टं नास्ति चेत्तर्हि विषयस्ते विषं पपौ ॥ २२८ ॥**
**धर्माभावोऽपि तत्वं चेत्प्रत्यक्षेणैव सिद्ध्यति ।**
**अतत्वं यदि तर्ह्यासीद्धर्मो निष्कण्टको मम ॥ २२९ ॥**
**नापि धर्मे प्रमाणस्याभावश्शास्त्रेण बोध्यते ॥ २३० ॥**
**सोऽपि तत्वं यदि तदा प्रत्यक्षेणैव सिद्ध्यति ।**
**अतत्वं चेद्धर्मशास्त्रमकण्टकमभून्मम ॥ २३१ ॥**

प्रमाणान्तराप्राप्त एव खलु विषयः । स च प्रत्यक्षेण प्राप्तत्वे न संभवति । प्रमाणान्तरं तु तत्त्वावेदकं नास्त्येव । धर्माभावोऽतत्वं चेद्धर्मस्य तत्वरूपता त्वयैवाङ्गीकृता स्यादित्युपसंहरति **सोऽपि तत्वमिति** ॥ तथा च साधूक्तं तत्वनिर्णये "समयप्रयोजनाभावात् नासौ समयी"ति ॥ २२५ – २३१ ॥

॥ इति चार्वाकवादः ॥

**एवं चार्वाकमर्यादा सर्वाप्यार्यैर्विगर्हिता ।**
**जिनबुद्धागमाद्यध्वशोधनायाधुना यते ॥ २३२ ॥**

एवं धर्माद्यतीन्द्रियमनङ्गीकुर्वाणो नास्तिको निराकृतः । धर्मादिकमङ्गीकृत्यापि ईश्वरमनभ्युपगन्तॄन्निराकर्तुं प्रतिजानीते । **जिनबुद्धेति** । ॥ २३२ ॥

**यदीदं न तदा तन्नेत्याज्ञा राज्ञः परं भवेत् ।**
**समानं नोभयोर्मानमनुमा ननु मा क्व मा ॥ २३३ ॥**

धर्मादिकं अपौरुषेयवाक्यैकप्रमाणकं इति प्राक् प्रतिज्ञातम् । तत्र तदितराप्रमाणकत्वे सति सप्रमाणकत्वादिति हेतौ विशेषणासिद्धिपरिहाराय अतीन्द्रियार्थविषये प्रत्यक्षाप्रमाणकत्वं सिद्धवत्कृत्य लिङ्गाप्रमाणकत्वं सिषाधयिषुस्तदभिमतं लिङ्गं उपलक्षणतयाऽनूद्य व्याप्त्यभावेन दूषयति । **यदीदमिति** । वैधी हिंसा पापसाधनं हिंसात्वात् विप्रहिंसावत् इति खलु तव अनुमानम् । तत्र व्याप्तिनिश्चयः त्वद्वाङ्मात्रेण वा, साहचर्यदर्शनमात्रेण वा, अथ प्रत्यक्षेण, उत प्राचां वाग्भिः, निर्मूलयुक्त्या वा इति विकल्प्य नाद्य इत्याह **राजाज्ञेति** । द्वितीयं दूषयति **अनुमेति** । साहचर्यदर्शनमात्रेण प्रवृत्तेति शेषः । क्व, मा प्रमाणं, मा न इति योजना । द्वितीयो माशब्दो निषेधार्थकः । तदुक्तं 'सर्वत्र शक्यते कर्तुं आगमं हि विनाऽनुमा' इति । ॥ २३३ ॥

**न चेत्सुरावत्क्षीरं च किमपेयं न तेमते ॥**
**द्रवद्रव्यत्वतो हेतोस्ततो मूलानुगैव सा ॥ २३४ ॥**

तदेवोदाहरणप्रदर्शनेनानुभावयति **न चेदिति** । **मूलानुगेति** । तदुक्तं पद्धतौ 'अन्ततः प्रत्यक्षागममूलत्वात्' इति ॥ २३४ ॥

**मूलं नातीन्द्रियेऽध्यक्षं स्वस्ववाक्यस्य कस्य न ।। २३५ ।।**

तच्च मूलं अत्र प्रत्यक्षं न संभवतीत्याह **अतीन्द्रियेति** । आगमोऽपि न त्वद्वाक्यं अतिप्रसङ्गादित्याह **स्वस्वेति** ।। २३५ ।।

**प्राचां वाचस्तु शोचन्ते देहः कारागृहं किल ।**
**अतो युक्त्यापि नार्थस्ते यत्मा हिंसां प्रशंसति ।। २३६ ।।**

नापि भारतादिपूर्वजवाक्यम् । विरोधेन तत्प्रामाण्यस्य त्वयैवाङ्गीकर्तुमशक्यत्वात् इत्याह **शोचन्त इति** । इवेति शेषः । 'बिभेत्यल्पश्रुताद्वेदः' इत्यत्रेवात्रापि तात्पर्यं विभावनीयम् । अयं दुराग्रही श्रुतिसिद्धं अस्मत्प्रामाण्यमपलपतीति हेतोरिति भावः ।। नापि निर्मूलयुक्त्येति पञ्चमः कल्प इत्याह **युक्त्येति** । 'देहबन्धाद्बहिः कुर्याज्जीयान् कारागृहादिव' इति प्रागुक्तमनुसन्धेयम् । हिंसा पुण्यसाधनं बन्धविमोचनरूपत्वात् संमतवदित्यपि प्रयोगसंभवेनातिप्रसङ्गात् । तथा च त्वदनुमाने दृष्टान्तः साध्यविकलः । हिंसा पुण्यसाधनं हिंसात्वादिति प्रकरणसमश्च ।। २३६ ।।

**तन्मानिनोऽप्यमानस्य कथंकारं मिथः कथा ।। २३७ ।।**

उभयसंप्रतिपन्नप्रमाणाभावात् तव मिथः कथायामधिकार एव नेत्याह **अमानिन इति** ।। २३७ ।।

**किं च युक्त्येकभक्तश्चेत्कथं मांसं निषेधसि ।। २३८ ।।**

व्याप्तिविकलतर्कैः प्रत्यवस्थानेऽतिप्रसङ्गान्तराण्याह **किञ्चेत्यादिना** । ।। २३८ ।।

**भूतेभ्योऽन्यन्न वै मांसे नान्यदन्नेऽपि दृश्यते ।**
**एकं त्याज्यं भोज्यमन्यदित्येतत्केन ते मते ।। २३९ ।।**

मांसं न त्याज्यं किन्तु भोज्यमेव, भौतिकत्वात् अन्नवत् इति प्रयोगोऽभिमतः । न च मांसस्य दुर्गन्धत्वेनाभोज्यत्वम् । सर्वत्र मांसेऽभावात्,

विद्यमानस्यापि उपायतः परिहारसंभवात्, सर्वथा पापहेतुताऽभावाच्च । तथाच अन्नहेतुपाकादिवत्, हिंसात्वेन हेतुना मांसहेतुहिंसाया अपि न त्वदभिमतं पापसाधनत्वानुमानं युक्तम् ॥ २३९ ॥

**हिंसादोषेण यौक्तस्य यज्ञावज्ञा च ते कथम् ॥ २४० ॥**

तेनैव न्यायेन, त्वयोच्यमानं यागीयहिंसाया दोषत्वमपि दूषितमित्याह **हिंसेति** ॥ २४० ॥

**जिनमन्दिरनिर्माणे तद्यात्रायां च कोटिशः ।**
**भूशोधाद्यैः पादघातैर्हिंसाऽऽस्ते मखवन्न किम् ॥ २४१ ॥**

जिनमन्दिरनिर्माणे अपरिहार्यतया समापतिता, या क्रमिकीटादीनां कोटिशो हिंसा, तत्र हिंसात्वहेतुरनैकान्तिकश्चेत्याह **जिनेति** ॥ २४१ ॥

**बर्हहस्तस्य या शङ्खे गर्हा साऽपि न शोभते ॥ २४२ ॥**

वेदमनादृत्य शुष्कतर्कमुपजीव्य रचिता सर्वाऽपि तत्प्रक्रिया शंख-कृष्णाजिनवराहकेसरादीनां अपावित्र्यवर्णनपरा अनेनैव न्यायेन पराहता वेदितव्येत्याह **बर्हहस्तेत्यादिना** ॥ शङ्खस्य अस्थित्वात्, कृष्णाजिनस्य चर्मत्वात्, वराहकेसराणां केशत्वात्, अपावित्र्यं खलु परेणानुमित्सितम् । सर्वेषां हेतूनां बर्हे व्यभिचारः । तस्यास्थिचर्मकेशसकलात्मकत्वात् । तत्र साध्याभावः परस्य बर्हहस्तस्य संमतः ॥ २४२ ॥

**लवणं भक्ष्यते चेत्स्याच्छुक्तिरूपास्थिभक्षणम् ।**
**जलीकृत्य स्वीकृतिश्चेदस्थिक्षालनवारिणः ॥ २४३ ॥**

अस्थित्वहेतोः तन्मिश्रे लवणे व्यभिचारः इत्याह **जलीकृत्येति** । ॥ २४३ ॥

**॥ अहिंसावादनिराकरणम् ॥**

**कर्ता सर्वस्य कार्यस्य कस्मादीशो विसृज्यते ॥ २४४ ॥**

इदानीं निरीश्वरवादिनः जिनबुद्धसांख्यभाट्टप्राभाकरान्निराकर्तुं प्रतिजानीते **कर्तेत्यादिना** ॥ २४४ ॥

**स्वभावादेव सर्वं च जगत्स्यात्सचराचरम् ।**
**किमीश्वरेणेतिवदन्प्रष्टव्यः प्रतिवादिना ॥ २४५ ॥**

'स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रियाः ॥ यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' इत्यनुव्याख्योदाहृतश्रुतिमनुरुन्धानः आदौ स्वभाववादमपाकरोति **स्वभावादेवेत्यादिना** ॥ २४५ ॥

**स्वभावोऽपि जडश्चेत्स्यादन्यप्रेर्यो घटादिवत् ।**
**जानातीच्छति पश्चाच्च गच्छतीति न किं श्रुतम् ॥ २४६ ॥**

स्वभावो जडः अजडो वा । पक्षद्वयेऽपि स्वतन्त्रोऽस्वतन्त्रो वा इति विकल्प्य जडः स्वतन्त्र इति पक्षं 'अचेतनत्वं स्वातन्त्र्यमिति चात्मप्रमाहतं' इत्यनुव्याख्यानोक्तदिशा व्याहतत्वादुपेक्ष्य अस्वतन्त्र इति पक्षे दोषमाह **स्वभावोऽपीति** । प्रवृत्तिं प्रति ज्ञानेच्छाप्रयत्नादिकं कारणम् । तदभावात् न जडस्य स्वतःप्रवृत्तिः ॥ २४६ ॥

**अजडोऽप्यस्वतन्त्रश्चेत्प्रागुक्तं दूषणं स्मर ।**
**स्वातन्त्र्ये तु किमीशेनापराद्धं लघुमूर्तिना ॥ २४७ ॥**

अजडः अस्वतन्त्र इति पक्षे प्रागुक्तं परप्रेर्यत्वलक्षणं दोषमतिदिशति **अजडोऽपीति** ॥ एतेन चिच्चैत्ये केनचिन्नियते अपर्याप्तशक्तिमत्वात् अस्वतन्त्रत्वात् रथादिवत् इति तत्वोद्योतोक्तं अनुमानं ईश्वरसाधकं विघूतं बोध्यम् । अजडः स्वतन्त्र इति पक्षे किं तादृशः स्वभावो जगदन्तर्भूतः उत भिन्नः । आद्ये किं एकः अथ अनेकः । नाद्यः । अनेकेषां स्वभावस्य एकत्वायोगात् । न द्वितीयः । स्वातन्त्र्ये अनेकत्वे च परस्परविरोधेन

जगद्विलयापत्तेः । जगदनन्तर्भूतः एकः स्वतन्त्र इति पक्षस्तु नामान्तरेण ईश्वराङ्गीकारपर्यवसायीति नेश्वरापलापो युक्त इत्याह **किमीश्वरेणापराद्धमिति । लघुमूर्तिनेति ।** स्वभावपक्षस्तु, वस्तुभिन्नस्य स्वभावस्य, तदेकत्वस्य तत्स्वातन्त्र्यस्य चेति अप्रामाणिकबहुकल्पनाऽऽपत्तेर्गुरुभूतमित्याशयः । ॥ २४७ ॥

**स्वस्वभावात्स्वयं चेत्स्यात्तद्यात्माश्रयदूषणम् ।**
**स्वकारणस्वभावाच्चेत्स्वभावस्ते गुरुः पतेत् ॥ २४८ ॥**

इदानीं 'स हि कर्ता' 'द्यावाभूमी जनयन्देव एकः' इत्याद्यागमानुगृहीतेन कार्यत्वानुमानेनापि ईश्वरसिद्धिमाह **स्वस्वभावादित्यादिभिः ।** गिर्यङ्कुरादिकं कार्यं तावदनुभवसिद्धम् । तत्र स्वभाववादी प्रष्टव्यः । तत्किं स्वस्वभावादिनोत्पन्नं स्वकारणस्वभावाद्वा । नाद्यः आत्माश्रयादित्याह **स्वस्वभावादिति ।** न द्वितीयः । कारणादेव कार्योत्पत्तिसंभवेन पुनः कारणस्वभावस्यापि कारणत्वाङ्गीकारो गौरवपराहत इत्याह **स्वकारणेति ।** ॥ २४८ ॥

**तदा कारणचक्रस्थः कर्ताऽप्यावश्यकोऽस्य हि ।**
**महीमहीधरादेश्च यः कर्ता स महेश्वरः ॥ २४९ ॥**

कारणमपि नैकैकमात्रं कार्यं प्रति हेतुः । केवलं दण्डमात्राद्घटोत्पत्तिप्रसङ्गात् । किन्तु कारणकलाप एव । तत्र च कर्तुरनुप्रवेशो नियतः । या क्रिया सा सकर्तृका इति व्याप्तेः । घटादिषु सर्वत्र तथा दृष्टेः । **एवं च** गिर्यङ्कुरादिकार्यस्यापि कर्ता तावदुपेय इत्याह **तदेति ।** न चास्मदादिः कर्ता संभवति क्षित्यङ्कुरादिजगदुपादानादिगोचरापरोक्षानादिकस्याभावात् । तेन च विना कर्तृत्वानुपपत्तेः । अतः अकामेनापि सर्वज्ञः कर्ता स्वीकार्यः । स एवास्मदभिमतो महेश्वर इत्याह **महीमहीधरादेरिति महेश्वर इति च** ॥ २४९ ॥

**न चेत्कुलालकार्वाद्या नापेक्ष्येरन्स्थले स्थले ।**
**अन्यथा दृष्टहानिस्स्याददृष्टस्य च कल्पना ॥ २५० ॥**

ननु जीवानामदृष्टेनैव घटाद्युत्पत्तिरिति संमतिः । तथा च जीवानामेव क्षित्यङ्कुरादिकं प्रति अदृष्टद्वारा कर्तृत्वसंभवे किमीश्वरेणेति शङ्कां बाधकोक्त्या निरस्यति **न चेदिति** । ज्ञानेच्छापूर्वककर्तृणां कुलालादीनां तथा सत्यपलापः स्यात् । न च तथाऽस्त्विति वाच्यम् । दृष्टहान्यादिप्रसङ्गादित्याह **अन्यथेति** ॥ २५० ॥

**यत्नेन साध्यते मोक्षो यदि तर्हि स्वभाववाक् ।**
**अभावमाप नो चेत्ते व्रतचर्या बहिर्ययौ ॥ २५१ ॥**
**जडस्वभावकर्मादि प्रेर्यं स्यादजडेन हि ।**
**किं कुठारस्स्वयं गच्छेद्घटो वा जलमाहरेत् ॥ २५२ ॥**

'चिदचित्तनु सर्वमसौ तु हरिर्यमयेदि'ति भगवत्पादीयोक्तिं विवृण्वानः निरीश्वरवादानपाकरोति **यत्नेनेत्यादिना** । स्वभावो वा कर्म वा, विना यत्नं न प्रवृत्तेरीष्टे जडस्य यत्नवता चेतनेन प्रेर्यत्वनियमात् । तदुक्तं 'विना यत्नं न हठो नापि कर्मे'ति । स्वभावकर्मादिकं जडं, चेतनप्रेर्यं, जडत्वात् कुठारवदित्यनुमानमिहाभिप्रेतम् ॥ २५१ ॥ २५२ ॥

**स्वभावस्य तिरस्कारः पुरस्कारश्च पावके ।**
**दृश्यते मणिमन्त्राद्यैर्न तत्तस्य स्वतन्त्रता ॥ २५३ ॥**

स्वभावस्य पारतन्त्र्यमनुभावयति **स्वभावस्येति** ॥ २५३ ॥

**स्वानिष्टस्य हि कर्मादेः प्रेरको न स्वयं जनः ।**
**अतस्तत्प्रेरणायान्यो मान्यः कोऽपि मनीषिणा ॥ २५४ ॥**

चेतनस्यापि तदाह **स्वानिष्टस्येति** । अतः परमचेतन उपेय इत्याह **मान्य इति** ॥ २५४ ॥

**न हि पुण्यस्य लघुता पापस्य गुरुताऽपि वा ।**
**यदुन्नयेल्लाघवाद्वा गौरवाद्वाऽप्यधो नयेत् ।**
**अतश्शिलादिदृष्टान्तोऽप्युक्तेर्भाराय केवलम् ॥ २५५ ॥**

पुण्यं ऊर्ध्वगतिहेतुः लघुत्वात् उत्कटवायुवत्; पापं अधोगतिहेतुः गुरुत्वात् शिलावत् इत्यनुमानविरोधमाशङ्क्य दृष्टान्तस्य साध्यवैकल्येन निराह **न हीति** ॥ २५५ ॥

**सर्वस्य कर्ता तत्रापि किं न कर्ता महेश्वरः ॥ २५६ ॥**

कुत एवमित्यत आह **सर्वस्येति** । 'पयोऽम्बुवच्चेत्तत्रापि' इत्युक्तदिशा जडवायुशिलयोः ऊर्ध्वाधोगतिहेतुत्वमपि ईशनियतमित्याह **महेश्वर इति** । ॥ २५६ ॥

**यस्स्तम्भसंभवो डिम्भं हिरण्यकशिपोरपात् ।**
**सोऽन्तर्यामी मम स्वामी कस्य न स्याद्विचारय ॥ २५७ ॥**

अनुभवसिद्धं चैतदित्याह **स्तम्भेति** ॥ डिम्भं अर्भकं प्रह्लादम् । ॥ २५७ ॥

**शिला यदि स्वसत्त्वेन जले नयति पूरुषम् ।**
**स्थले कस्मान्न नयति समे या नीयते नरैः ॥ २५८ ॥**

गुरुत्वहेतोः समस्थले विद्यमानशिलायां व्यभिचारोऽपीत्याह **शिलेति** । ॥ २५८ ॥

**अश्मा यस्मान्नतेऽप्स्वेव तिर्यक्पर्यक्च गच्छति ।**
**अतस्स्वतः कृतिस्तस्य न जले नापि च स्थले ॥ २५९ ॥**

अस्तु वा क्वचिदधोगतिहेतुत्वम् । न तावता शिलायाः स्वतः **प्रवृत्ति-**सिद्धिः कुत्रापीत्याह **अश्मेति** ॥ २५९ ॥

**तदीशगौरवात्स्वीयगौरवाच्च नयेदधः ।**
**यतस्स गौरवं धर्मं चक्रे पतनकारणम् ॥ २६० ॥**

गुरुत्वादेः पतनादिहेतुत्वस्वभावोऽपि सर्व ईश्वरनियमादेवेत्याह **तदीशेति** ॥ २६० ॥

**यदा स धर्मसामर्थ्यं रुणद्धि न तदा पतेत् ।**
**न मग्नो मन्दरः कस्मान्मही वा नाप्सु मज्जति ॥ २६१ ॥**

स्वभावस्य ईश्वरनियतत्वमित्येतत्कुत इति चेत् । ईश्वरप्रेरणाभावे स्वभावस्य स्वकार्यकारित्वादर्शनादेव । तत्रागमं प्रमाणयति **मन्दर इति** । प्रत्यक्षं च तत्राह **मही वेति** ॥ २६१ ॥

**यद्वत्तवरतो वार्धुं नलहस्तार्पिताश्शिलाः ।**
**उन्ममज्जुस्स दौर्जन्यं कस्य कस्य न भर्जयेत् ॥ २६२ ॥**

गुरुत्वहेतोः जलस्थशिलायामेव व्यभिचार इत्याह **नलहस्तेति** । ॥ २६२ ॥

**विषमारोहतीशस्य सत्त्वादेव न तु स्वतः ।**
**किं विषादो विषादासीच्छिशोस्तस्य शिवस्य वा ॥ २६३ ॥**

प्रह्लादे शिवे च अन्वयव्यभिचारात् विषस्यापि न स्वत ऊर्ध्वगमनशक्तिरित्याह **विषमिति** ॥ २६३ ॥

**अतो दृष्टं समस्तं च दृष्टाच्चेश्वरतो भवेत् ।**
**अदृष्टमीश्वरादेवेत्यासीत्सर्वधुरन्धरः ॥ २६४ ॥**

अदृष्टं अङ्कुरादि । **ईश्वरादेवेति** । एवकारोऽयोगव्यवच्छेदपरः । ईश्वरादन्यस्वतन्त्रकारणव्यवच्छेदपरो वा । सत्त्वाच्चावरस्येतिसूत्रीय, 'अवरस्य तदधीनस्य कारणस्य सत्त्वात्' इति भाष्ये स्वेच्छया परतन्त्रसाधनसापेक्षत्वाभ्युपगमादिति ध्येयम् । एतच्चात्र धुरन्धर इति शब्देन ध्वन्यते । सत्स्वपि इतरेषु कारणेषु, अयमेव स्वतन्त्रत्वात्प्रधान इति । अन्यथा कारणमित्यवक्ष्यत् ॥ २६४ ॥

**तस्मात्पक्षे पक्षसमे यस्यानैकान्त्यचोदना ।**
**वेद नासौ पुमाञ्छास्त्रमर्यादामार्यगर्हितः ॥ २६५ ॥**

ननु कार्यत्वं स्वभावे कर्मणि चास्ति तत्र सकर्तृकत्वं नास्तीति व्यभिचार इति तत्राह **पक्षे इति** । व्यभिचारनिरूपकतया पराभिमतानां सर्वेषां पक्षत्वात् न व्यभिचार इति भावः ॥ २६५ ॥

**रत्नप्रभा स्वभावश्चेत्कुतो नास्ति शिलान्तरे ।**
**ततस्तत्रैव सा भूयादित्यत्रास्ति नियामकः ॥ २६६ ॥**

शिलात्वेनैकजातीयेऽपि रत्ने शिलान्तरेऽनुपलभ्यमानः प्रभाविशेषः जातिस्वभावनियामकमीश्वरं गमयतीत्याह **प्रभेति** ॥ २६६ ॥

**नार्यैश्च वार्यः कार्येऽसौ हर्यैश्वर्यैर्यवीर्यवान् ।**
**निर्दैवमृद्ध्यै तं विद्वान्कोऽद्याऽऽद्याद्धि बौद्धवत् ॥ २६७ ॥**

किञ्च, न वयं स्वभावादिकं कार्योत्पत्तौ नोपयुज्यत एवेति वदामः । किन्तु तस्य परप्रेरणयैव प्रयोजकत्वं ब्रूमः । न तु बौद्धवत् तत्स्वातन्त्र्यमित्याह **नार्यैरिति** ॥ किञ्च शक्तिरूपोऽयं स्वभावः न कारणं किन्तु कारणतारूप एवेत्यवधेयम् । तदुक्तं सुधायां– 'ततोऽन्वयव्यतिरेकसमधिगम्यमतीन्द्रियमेव किञ्चिन्मृदादीनां घटादिकारणत्वमभ्युपगमनीयम् । तदेव च शक्ति'रिति ॥ २६७ ॥

**किं चाचेतनमात्रस्य स्वभावोऽन्यनियम्यता ।**
**अतो भवत्स्वभावेन प्रभुराविर्बभूव मे ॥ २६८ ॥**

स्वभावस्य अचेतनत्वस्वभावः स्वतःप्रवृत्तिविधुरः स्वप्रवर्तकमीश्वरमाविर्भावयतीत्याह किञ्चेति ॥ २६८ ॥

**स च स्वेच्छानुसारेण तत्तद्वस्तु तथा तथा ।**
**तनुते तेषु चाप्येकमुच्चं नीचं करोति च ॥ २६९ ॥**

**स्वतन्त्रस्य च तस्येच्छा नियोक्तुं नैव शक्यते ।**
**अराजकमिदं राष्ट्रं न चेन्नष्टं भविष्यति ॥ २७० ॥**

वस्तुवैचित्र्ये च ईश्वरसंकल्पो निमित्तम् । स च ईश्वरः स्वतन्त्रोऽपि प्रमाणानुसारी । न पर्यनुयोगमर्हति । स्वातन्त्र्यं च 'सर्वस्येशानः' इत्यादि-प्रमाणप्रमितम् । तदनङ्गीकारे प्रपञ्चप्रविलयापत्तिरतिप्रसङ्ग इत्याह **द्वाभ्याम् स चेत्यादिना** ॥ २६९ ॥ २७० ॥

**नरेषु कश्चिन्मूकोऽस्ति वाचालोऽप्यस्ति कश्चन ।**
**सोऽयं नरस्वभावो न तवापि च ममापि च ॥ २७१ ॥**

'न च कर्मविमामलकालगुणप्रभृतीशमचित्तनु तद्धि यतः' इति भगवत्पादोक्तिमाश्रित्य अचेतनत्वरूपसाधारणदोषेण कालकर्मस्वभावादीनां जडानामेव स्वातन्त्र्येण कारणत्वप्रतिपादनपराणि निरीश्वराणि जिन-बुद्ध-भाट्ट-साङ्ख्य-प्राभाकरादिमतानि हिनस्ति नरेष्वित्यादिभिः नवभिः ॥ तत्र स्वभाववादी तावत्प्रष्टव्यः किं स्वभाव एक एव कारणं उत कर्मापि इति । आद्ये आह **नरेष्विति** । मूकत्वेति सर्ववैचित्र्योपलक्षणम् ॥ २७१ ॥

**कर्मापि चेद्गतं तर्हि स्वभावाङ्गयुपसर्पणम् ।**
**क्वचित्स्वभावः कर्मापि क्वचिच्चेत्कलहो भवेत् ॥ २७२ ॥**

द्वितीये आह **कर्मापीति** । तथा चापसिद्धान्त इति भावः । न च देशकालभेदेन व्यवस्थितिः । विनिगमकाभावेन परस्परप्रतिरोधेन कार्य-मात्रप्रविलयापत्तेरित्याह **क्वचिदिति** ॥ २७२ ॥

**अथ कर्मापि राजा चेज्जडता तस्य किं कृता ।**
**जनने मरणे वाऽपि किं कर्ता तस्य नेष्यते ॥ २७३ ॥**
**अतोऽवद्यं जडत्वाद्यं स्वभावानां च कर्मणाम् ।**
**यतोऽभून्निरवद्योऽसौ कथं सिद्ध्येन्न सिद्धराट् ॥ २७४ ॥**

किञ्च कर्मादिजडेषु जडत्वजननविनाशादीनि अवद्यानि दृश्यन्ते। न च तानि स्वतन्त्रेषु सम्भवन्ति। अतस्तत्कर्ताऽन्योऽपेक्षितः। सोऽपि चेत्सावद्य एव तर्हि अस्वतन्त्र आपद्येत कर्त्रन्तरसापेक्षश्च स्यात्। तथा चानवस्थितिरसम्भवश्च। अतो निरवद्य उररीकरणीयः। एवं च कथं नेश्वरसिद्धिरित्याह **अथेति द्वाभ्याम्** ॥ २७३ ॥ २७४ ॥

**यदि तत्तत्कृतं कर्म तज्जन्ममरणादिकम्।**
**अन्यचैतन्यसाचिव्यशून्यमेव करोति ते ॥ २७५ ॥**
**तर्हि हन्ता न कोऽप्यासीत्स्वस्वकर्महते जने।**
**अतो हिंसादोषवादो गतो यस्ते मते मतः ॥ २७६ ॥**
**अथ कर्त्रन्तरापेक्षं कर्मापि कुरुते तव।**
**तर्हि सर्वस्य कर्तारमाक्षिपेत्कश्चनेश्वरम् ॥ २७७ ॥**
**निरीश्वरान्भाट्टसाङ्ख्यप्राभाकरमतानुगान्।**
**चित्रमेकप्रहारोऽयं युक्त्या त्रीनप्यखण्डयत् ॥ २७८ ॥**

हिंसा दोषः, अहिंसा गुणः इत्यादिप्रकारैः गुणदोषविभागस्ताव-त्सर्वसमयिभिरङ्गीकृतः। स च जीवेषु प्रत्यक्षसिद्धस्य ज्ञानेच्छापूर्वककर्तृत्व-स्यानभ्युपगमे दुरुपपादः। न हि जडं कर्मादिकं प्रति विधिनिषेधौ तत्तच्छास्त्रप्रतिपाद्यौ संभवतः। नापि स्वतन्त्रमीश्वरं प्रति। जीवोऽपि चेत्सर्वथा न कर्ता न स विधिनिषेधविषयः। तथा च तत्परशास्त्रस्याप्रामाण्यं लोकव्यवहारविलोपः। परस्परहिंसादीनां निरङ्कुशतया प्रवृत्तेः। अत ईश्वरनियतं जीवकर्तृत्वमेष्टव्यं सर्ववादिभिरित्याह **यदीत्यादिभिश्चतुर्भिः**। ॥ २७५ – २७८ ॥

**तस्माज्जडानुसरणं त्यक्त्वा भज महाप्रभुम्।**
**स्वभावकालकर्मादेस्सर्वस्यास्य नियामकम् ॥ २७९ ॥**

उपसंहरति **तस्मादिति** ॥ २७९ ॥

**एकस्य पापमन्यस्य नांहस्स्यादिति चोद्यते ।**
**दारा गुरूणां पापाय न तथा गृहमेधिनाम् ॥ २८० ॥**

'तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा' इति भागवतोक्तं कृष्णस्य परनारीगमनेऽपि निर्दोषत्वं विवृणोति **एकस्येति** ॥ २८० ॥

**युक्तिस्तु तत्र व्यर्थैव विवेकोऽतो विधेर्बलात् ।**
**तत्रांहस्तद्यत्र तत्त्वे प्राचां वाचो न चेन्न च ॥ २८१ ॥**

**व्यर्था** प्रबलप्रमाणविरोधात् स्वार्थासाधिका । **प्राचां वाचः** सदागमाः ॥ २८१ ॥

**निरवद्यतया यस्तु श्रुत्याद्यैस्स्तूयतेतराम् ।**
**कृत्वाऽपि न स कर्माणि लिप्यते जगदीश्वरः ॥ २८२ ॥**

धर्मिग्राहकप्रमाणबाधश्चेत्याह **निरवद्यतयेति** ॥ 'निरनिष्टो निरवद्यः' इति श्रुतिः । 'न मां कर्माणि लिम्पन्ति' इति गीतोक्तमाह **कृत्वाऽपीति** । तत्र हेतुः **जगदीश्वर इति** । स्वतन्त्र इत्यर्थः । तदुक्तं 'स्वातन्त्र्य-पारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः' इति ॥ २८२ ॥

**नापि कारयितुः पापं कर्तृवद्युक्तितो भवेत् ।**
**मङ्क्तुर्जलेषु यद्दुःखं किं तन्मज्जयितुः प्रभोः ॥ २८३ ॥**

'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपि' इति भाष्योक्तमाह **नापीति** ॥ ईशितेति हेतुगर्भं विशेषणम् ॥ २८३ ॥

**विधेः पदानुसरणे विधितातस्य किं भयम् ।**
**करणात्प्रेरणाद्यस्य न भीरिति स गर्जति ॥ २८४ ॥**

विधितातस्य विधिसत्त्वनियामकस्य । तदुक्तं 'ईशो यतो गुणदोषा-दिसत्त्वे' इति ॥ **न भीरिति स गर्जति** । 'भीरपि यं बिभेति' 'दोषाः श्रुताश्च नाङ्गेहिं तथा प्रतीताः' इति निर्भयत्वं निर्दोषत्वं च निरवकाशतया प्रतिपादयति ॥ २८४ ॥

**यतो विधिर्निषेधो नॄन्विदधाति निषेधति ।**
**ताभ्यां बन्धो हि बद्धानां मुक्तानां स्यात्कथं वद ॥ २८५ ॥**

**नॄन्** संसारिणः । मुक्तानामित्युपलक्षणं जीवन्मुक्तानां समाधिस्थानां चेति ज्ञेयम् । 'नैव तस्य कृतेनार्थः नाकृतेनेह कश्चन' इति गीतोक्तेः । ॥ २८५ ॥

**यस्तु प्रस्तूयते श्रुत्या नित्यमुक्ततया प्रभुः ।**
**स निर्दोषो विजयते हयग्रीवाभिधो हरिः ॥ २८६ ॥**

**प्रस्तूयते** प्रकर्षेण स्तूयते । **स निर्दोष इति** । अत्र ग्रन्थकृतैव पाषण्डमतखण्डनग्रन्थे कृतस्य मङ्गलश्लोकस्य 'यत्सृष्टिचातुरीतोऽब्जमपङ्कं पङ्कवास्यपि' इति पूर्वार्धोऽनुसन्धेयः । तत्सृष्टवस्तूनामप्येवं निर्लेपत्वे सृष्टिकर्तुर्हयग्रीवस्य स्वतो लेपानर्हत्वं किमु वक्तव्यमिति भावः ॥ २८६ ॥

**व्रतस्था हस्तविन्यस्तसूत्रात्ते सूतकांहसा ।**
**न लिप्यते किल स्त्री च हन्तेशो लिप्यते किल ॥ २८७ ॥**
**का भीः स्वगुणसंबद्धसूत्रसप्तशतीपतेः ।**
**कण्ठोपकण्ठे नृहरेस्त्रिसूत्रीसूत्रितस्य च ॥ २८८ ॥**

यस्य कस्यचित्क्षुद्रसूत्रस्य संबन्धः स्वस्त्रीणां पापनिवारणहेतुर्जैनैरङ्गीकृतः । सूत्रसप्तशतीपतेः यज्ञोपवीताख्यत्रिसूत्रीधरस्य अस्मदीशस्य सुपवित्राणां सूत्राणां संबन्धस्य तद्धेतुत्वानङ्गीकारे कथं न स्वव्याघातः इति भावः ॥ इयांस्तु विशेषः । त्वदभिमतं दुर्मन्त्रमन्त्रितं कुविन्दकृतं कुसूत्रम् । इदं तु मन्त्रवर्णात्मकं त्रयीमयं, तन्निर्णायकं च मुकुन्दकृतं सुसूत्रं इति । **सप्तशती** गीता ॥ २८७ ॥ २८८ ॥

**अस्त्यावश्यकधर्मस्य प्रत्यवायोऽकृतौ स्मृतौ ।**
**मुक्ते मुक्तत्वतोऽसौ न ततस्तच्चाघवारकम् ॥ २८९ ॥**

विमत ईश्वरः अकृतौ प्रत्यवायवान्न, मुक्तत्वात् व्यतिरेकेण संसारिवत् ॥ हेतूच्छित्तिर्विपक्षे बाधिका ॥ २८९ ॥

**तस्मादेवास्मदीशोऽपि सर्वस्माच्च न लिप्यताम् ।**
**एकत्र वारकं कस्मान्नापरत्र निवारकम् ॥ २९० ॥**

ईश्वरस्य निषिद्धकृतिः, न लेपहेतुः, मुक्तसंबन्धित्वात्, आवश्यकस्य अकृतिवत् । न चाप्रयोजकता । मुक्तत्वं अकृतौ लेपस्य वारकं, कृतौ तु नेति न युक्तियुक्तम् । अर्धजरतीयापत्तेः इत्याह **तस्मादिति** ॥ २९० ॥

**मुक्तत्वं च सदा क्लेशवर्जितत्वेन सिद्ध्यति ॥ २९१ ॥**

न च मुक्तत्वमसिद्धम् । विमतः बन्धात्यन्ताभावलक्षणमुक्तत्ववान् क्लेशरहितत्वात् घटवत्, व्यतिरेकेण बद्धवत् इति तत्सिद्धेः ॥ २९१ ॥

**तच्च जन्मजरामृत्युक्षुत्तृडादिविवर्जनात् ।**
**अनुमीयते श्रि(स्त्रि)या साकं सर्पतल्पपरायणे ।**
**नारायणे पयस्सिन्धौ कृतधाम्नि त्रिधाम्नि नः ॥ २९२ ॥**

न च तत्राप्यसिद्धिः । विमतः क्लेशरहितः क्लेशहेतुजन्मादि-शून्यत्वात् । विपक्षे अकारणकार्योत्पत्तिर्बाधिका । विमतो जन्मादिशून्यः प्रलये सत्वात् । न चासिद्धिः 'एको नारायण आसीत्' 'आनीदवातं स्वधया तदेकम्' इत्यादिश्रुतिसिद्धेः ॥ २९२ ॥

**युगे युगे परक्लेशहत्यै चावतितीर्षति ।**
**अनुत्तीर्णस्स्वयं पङ्कात्परं तारयतीह कः ॥ २९३ ॥**

विमतः स्वयं क्लेशहीनः परेषां क्लेशहन्तृत्वात् । न चाप्रयोजकता । 'अनुत्तीर्णः स्वयं पङ्कादि'ति न्यायविरोधात् ॥ २९३ ॥

**नित्यमुक्ता च सा भार्या नित्यमुक्तः पतिश्च सः ।**
**बाहुभ्यामेव बन्धोऽस्ति न तयोर्भवबन्धनम् ॥ २९४ ॥**

न च, विमतः न मुक्तः कलत्रवत्त्वात् संमतवत् इति सत्प्रतिपक्षता । संसारिकलत्रवत्त्वस्य उपाधित्वात् । लक्ष्म्याः असंसारित्वेन न साधनव्यापकता । न च स्त्रीत्वादेव संसारित्वम् । अप्रयोजकत्वात् । प्रमाणबाधाच्च । पुरुषत्वादेव मुक्तस्यापि तथात्वापाताच्च । अलौकिकत्वेन समाधानं तूभयत्र समम् ॥ २९४ ॥

**अनाद्योर्न भवाद्योऽस्ति भवो ह्येष पुनर्भवः ॥ २९५ ॥**
**पत्या तेन कुतोऽपत्यशतवत्यभवन्न सा ।**
**सत्सु दारेषु नाभेस्स पुत्रं कस्मादजीजनत् ॥ २९६ ॥**

विमतः अपुनर्भववान् भवरहितत्वात् । भवः उत्पत्तिः । तद्राहित्यं च उभयोः सुप्रसिद्धम् । सामान्याभावेन विशेषाभावसिद्धिः ॥ विमतः संसारी कामित्वात् इति चेन्न । असिद्धेः । विमतः न स्त्रीकामुकः तन्निरपेक्षेण अपत्योत्पादकत्वात् । तच्च विधितातस्य पद्मनाभस्य सुप्रसिद्धम् । कामित्वं अप्रयोजकं च । मुक्तानामपि कामसद्भावात् । मुक्तत्वं तु कामाहतत्वमात्रेणोपपन्नम् इत्याह **पत्येति** ॥ २९५ ॥ २९६ ॥

**अतस्स भरणाद्भर्ता सा भार्या भ्रियते यतः ।**
**तत्तयोर्नित्यसुखिनोर्न संसारोऽस्त्यदुःखिनोः ॥ २९७ ॥**

किञ्च नित्यसुखिनोर्दम्पत्योः न दुःखं शङ्कार्हं इत्याह **अत इति** । ॥ २९७ ॥

**दुःखमेव हि संसारो दुःखहेतुत्वतोऽपरम् ।**
**उपचारेण संसारो न दुःखं नापि दुःखदा ॥ २९८ ॥**

तत एव तयोः संसारशङ्का गर्भस्रावेणापसारिता दुःखस्यैव मुख्यतः संसारत्वादित्याह **दुःखमिति** । नेत्यादिकस्योत्तरत्र सेत्यनेनान्वयः ॥ २९८ ॥

**सा भार्या केन संसारो यदि स्त्रीत्वेन संसृतिः ।**
**तर्हि पुंस्त्वाच्च संसार इति मुक्तिर्गता तव ॥ २९९ ॥**

किञ्च जैनैर्मुक्तौ मित्रसंपत्तिरङ्गीक्रियते न कलत्रसंपत्तिः । तत्कुत इति वाच्यम् । कलत्रं स्त्रीत्वात्संसाररूपमिति चेत् मित्रमपि पुंस्त्वात्कुतो न तथा । अतः लक्ष्मीपतित्वं विष्णोर्न संसारित्वहेतुरित्याह **सेति** ॥२९९॥

**कलत्राणीव मित्राणि भवायेह भवन्ति हि ।**
**मुक्तौ चेन्मित्रसंपत्तिस्त्रीसंपत्तिः कुतो न ते ॥ ३०० ॥**

एवं इतरमुक्तानामपि स्त्रीसहायत्वं न संसारापादकमित्याह **मुक्ताविति** । ॥ ३०० ॥

**रागाभावेन या शान्तिस्सा देवीदेवयोस्समा ।**
**अतः कलत्रशून्यस्य गुरोर्वाक्ये भरं त्यज ॥ ३०१ ॥**

अथ मित्रदर्शनं न मुक्तत्वविरोधि रागाहेतुत्वादिति चेत् तदेव कुतः । अलौकिरूपवत्त्वान्मित्राणामिति चेत् समं कलत्राणामिति तद्दर्शनमपि मुक्तौ न दोषावहम् । कलत्रशून्यस्य तवगुरोर्वाक्यं तु विप्रलम्भमूलत्वादुपेक्षणीयमित्याह **अत इति** ॥ ३०१ ॥

**उन्नयोर्जितधर्मेण भार्यां च सहधर्मिणीम् ॥ ३०२ ॥**
**सततोर्ध्वगतिर्नृणां महाक्लेशकरी तव ।**
**मुक्तौ स्याच्चेत्सुखकरी भार्या केन भयङ्करी ॥ ३०३ ॥**

किञ्च जैनाः सततोर्ध्वगतेर्मोक्षरूपतामाहुः । सा च महाक्लेशकरीति सर्वानुभवसिद्धम् । तदुक्तम् भगवत्पादैः 'नित्यमूर्ध्वा च दुःखिता गतित्वाल्लौकिकी यथा' इति । एवं विकृतिहेतुत्वेन आत्मनो विनाशापादिका च । एतदप्युक्तं 'अलोकाकाशमाप्तस्य कथं न विकृतिश्च सा' इति । तथा च दुःखहेतुं आत्मस्वरूपनाशहेतुं च नित्योर्ध्वगतिमङ्गीकुर्वतः सुखसाधनभार्यां त्वनङ्गीकुर्वतो जैनस्य विवेकवैधुर्यमपहसति **सततेति** ॥ ३०३ ॥

**वृथा वेदेषु देवेषु सत्सु यज्ञादिकारिषु ।**
**न मत्सरं कुरु महादोषमीषत्पराकुरु ॥ ३०४ ॥**

मात्सर्यं दोषेषु महत् । तद्दूषितानि निरीश्वराण्यवैदिकानि जैनादिमतानि दूरतो हेयानीति 'दुःशास्त्रं तु परित्यजेदि'ति भगवत्पादोपदेशमनुरुध्य मुमुक्षुं प्रति हितोक्तिमाह **वृथेति** । महादोषं मत्सरं ईषदपि न कुरु इत्यन्वयः । **पराकुरु** सर्वात्मना परित्यज ॥ ३०४ ॥

**अतो वैदिकमर्यादैवाङ्गीकार्या विवेकिना ।**
**वैदिकानां तु कलहो वेदार्थास्फूर्तितः परम् ॥ ३०५ ॥**

'अतोऽपौरुषेयवाक्येनैव धर्मादिसिद्धेः सर्ववादिनां तदङ्गीकार्यं' इति तत्त्वनिर्णयोक्तमाह **अत इति** । 'नन्वेवं सति वेदेनैव सर्वेषां धर्मप्रतिपत्तिरित्यायातम् । तर्हि वादिविप्रतिपत्तिर्न स्यात् । सत्यमेव तत् किन्तु धर्मादिस्वरूपे वेदेन प्रतीते तद्विशेषेषु तमतिक्रम्य स्वमतिदोषाद्वादिविप्रतिपत्तयः प्रतीयन्ते' । इति तत्वनिर्णयटीकोक्तमाह **वैदिकानां त्विति** ॥ ३०५ ॥

**क्वचित्सदसतोश्चैकीभावः स्थानैक्यतो भवेत् ।**
**सुरासुरास्सुधार्थे प्राङ्नैकीभूताः किमम्बुधौ ॥ ३०६ ॥**

**स्थानैक्यतः**, स्थानं वेदप्रामाण्यादिकं यत्किञ्चित्, आपाततः संप्रतिपत्तिविषयः, तस्य ऐक्यतः साधारण्यमपेक्ष्य । तात्पर्यार्थे तु संप्रतिपत्तिर्नास्त्येव । यथा समुद्रमथनसमये असुरैः कृते सर्पस्य मुखभागग्रहणे, उच्चैःश्रवसः सुरायाश्च स्वीकारे सुराणां संप्रतिपत्तिः तद्वत् । यथा च ईप्सितस्य अमृतस्य लाभः सुराणामेव, दैत्यानां तु सत्याच्च्युतानां संहृतिरेव, एवं अमृतत्वस्य प्राप्तिः तत्त्ववादिनामेव, मायिनां तु मिथ्यावादिनां तमःप्राप्तिरेव तथेति भावः ॥ ३०६ ॥

**त्यक्तैकमत्यरूपैक्यान्निघ्नन्ति बलिनोऽबलान् ।**
**यथा पुरन्दरः पूर्वदेवान्देवर्षिहर्षकृत् ॥ ३०७ ॥**

**पुरन्दरः** तत्स्थानीयो जयतीर्थार्यः, **पूर्वदेवान्** कुसमयिनः निरस्य, न्यायसुधाप्रदानेन देवर्षिहर्षकृत्, भूसुराणां सन्तोषकृत् ॥ ३०७ ॥

**प्रतिपक्षी सदृक्षः स्यात्प्राचो नीचो न वै भवेत् ।**
**कालात्ययापदिष्टस्य नो चेत्सत्प्रतिपक्षता ॥ ३०८ ॥**

**प्राचः** अपौरुषेयागममूलस्य तथाऽनादिसाक्षिप्रत्यक्षसिद्धस्य च तत्ववादस्य, **नीचः** तयोरतत्वावेदकत्वं वर्णयन् मायावादः । **सदृक्षः** । समानबलत्वेन विरोधी । नैव भवेत् कुत एव तद्बाधकः इति भावः । हीन-बलस्यापि बाधकत्वाङ्गीकारेऽतिप्रसङ्गमाह **कालेति** । तदुक्तं वादावल्यां 'अन्यथा दहनशैत्यानुमानमपि तदुष्णतावगाहिप्रत्यक्षबाधेन प्रमाणं प्रसज्येत' इति ॥ ३०८ ॥

**महत्त्वं च गुणेनैव नाकारेण धनेन वा ।**
**सावकाशैक्यवाक्यानि बाधते किं न भेदवाक् ॥ ३०९ ॥**

**महत्त्वं** बलवत्त्वम् । **गुणेन** ब्रह्मतर्कोक्तेन 'बहुत्वाच्च स्वभावतः' इत्युक्तनिमित्तेन । **आकारेण** ग्रन्थविस्तरेण । **धनेन** युक्त्याभासेन । सावकाशेति उपलक्षणम् उपजीवकेत्यपि ग्राह्यम् । भेदवागित्यनन्तरं निरव-काशा उपजीव्या चेति शेषः । एकाऽपि स्वभावप्रबला भेदवाक् दुर्बलान्य-नेकानि ऐक्यवाक्यानि बाधत एव । तदुक्तं सुमध्वविजये 'प्राच्यं शास्त्रं यत्सपादं तु लक्षं वाक्येनैकेनाक्षिपद्धर्षतीर्थः' इति । बहुत्वं च तदीयग्रन्थ-विस्तरापेक्षयैव । वस्तुतस्तु भेदसाधकप्रमाणानामेव बहुत्वम् । तदुक्तं तत्त्वनिर्णयटीकायाम् 'एवमुपजीव्यत्वनिरवकाशत्वलक्षणस्वभावबलवत्प्रमाण-बाधितत्वात् ऐक्यागमस्याप्रामाण्यमित्युक्तम् । न केवलमेतावत् किन्तु बहुत्वलक्षणबलवद्भिरेतैरेव प्रमाणैर्बाधितत्वाच्च' इति ॥ ३०९ ॥

**मानत्वस्य स्वतस्त्वेन सा नातत्वं वदेत्क्वचित् ।**
**दोषश्च वेदेनानादौ बाधोऽप्यन्यार्थतैव तत् ॥ ३१० ॥**

**स्वतस्त्वेन** औत्सर्गिकत्वेन । तदुक्तं वादावल्यां 'प्रामाण्यं हि ज्ञानस्योत्सर्गतः, अपवादादप्रामाण्यम्' इति । **क्वचिदिति** । अन्यथा

व्याघातादिति भावः । यथोक्तं तत्रैव 'अतत्त्वावेदकं प्रामाण्यं चेति व्याघातः' इति । अत्र करणदोषलक्षणोऽपवादो नास्तीत्याह **अनादाविति** । कथं तर्हि श्रौतस्यैक्यवाक्यस्य बाध इत्यत आह **बाधोऽपीति** । **अन्यार्थतेति** । तदुक्तं तत्त्वोद्योते 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इति । अन्यार्थश्च 'स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि । सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः' इति अनुव्याख्यानोक्तदिशा बोध्यः ॥ ३१० ॥

## ॥ इति बौद्धवादनिरासः ॥

**दोषाद्यप्रतिरुद्धेन ज्ञानग्राहकसाक्षिणा ।**
**स्वतस्त्वं ज्ञानमानत्वनिर्णीतिनियमो हि नः ॥ ३११ ॥**

'तत्प्रामाण्यं च स्वत एव' इति भगवत्पादोक्तं ज्ञानप्रामाण्यस्य स्वतस्त्वं समर्थयिष्यन् 'ज्ञानग्राहकमात्रग्राह्यत्वं स्वतस्त्वं' इति तट्टीकोक्तं स्वतस्त्वनिर्वचनं तावत् परिष्कृत्याह **दोषेति** ॥ दोषशङ्कादिरूपा प्रामाण्यविरोध्युपकसामग्री-त्यर्थः । आदिपदेन विरोध्युपस्थितिर्ग्राह्या । विरोधि च प्रामाण्याभावः अप्रामाण्यं चेत्युभयम् । ज्ञानपदेन ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानं ग्राह्यम् । अन्यथा बाधापत्तेः । साक्षित्वं च ज्ञानप्रकारप्रकारकतया ज्ञानप्रकारवद्विशे-ष्यकतया च ज्ञानविषयकप्रत्यक्षत्वं, ज्ञानांशे लौकिकप्रत्यक्षत्वं वा ॥ **मानत्वं** याथार्थ्यम् । 'याथार्थ्यमेव मानत्वमि'त्युक्तेः । **निर्णीतिः** । सत्यः स्तम्भो भवत्येवेतिवत् ज्ञानं प्रमाणं भवत्येवेत्यवधारणम् । न तु नदोषं चेत्प्रमाणमिति संमुग्धतया ग्रहणम् । **नियमः** साक्षिणा गृह्यत एवेत्येवंरूपः । न पुनः **साक्षिणैव गृह्यत** इति । अनुमित्याऽपि प्रामाण्यग्रहस्य सिद्धान्तेऽभ्युपगमात् । **अप्रतिरुद्धेनेति** साक्षिविशेषणकृत्यं स्वयमग्रे वक्ष्यति । व्यवसायोपनीतौ धर्मिधर्मौ अनुव्यवसाये विषयौ इत्यत्र परतस्त्ववादिनां न विवादः ।

प्रामाण्यघटकोपाधिरूपं धर्मधर्मिवैशिष्ट्यं अनुव्यवसाये विषय एव न भवति बहिरर्थत्वादित्येके । विषयोऽपि न सत्तया विषय इत्यपरे । तत्र द्वितीयमतानुसारेण अनुव्यवसायरूपः साक्षी प्रामाण्यं गृह्णन्नपि न तत्र निर्णयरूपः । एतन्मतेन सिद्धसाधनतावारणाय निर्णीतिपदम् । अनुमित्यनुव्यवसायेन, अभ्यासदशापन्नज्ञानानुव्यवसायेण पञ्चमानुव्यवसायेन च गृह्यमाणमपि प्रामाण्यं न प्रथमानुव्यवसायस्य विषय इति एके परतस्त्ववादिनो मन्यन्ते । तन्मतेन सिद्धसाधनवारणाय नियमपदम् । नः अस्माकं स्वतस्त्ववादिनां इति बहुवचनेन, चतुर्णामपि स्वतस्त्ववादिना साधारणं उभयसिद्धप्रामाण्याविषयकज्ञानभिन्नज्ञानविषयत्वनैयत्यलक्षणं स्वतस्त्वनिर्वचनं संगृह्णाति । तथा च अप्रतिबद्धसाक्षिवेद्यत्वनियमः साक्षिवेद्यत्वयोग्यता वा स्वतस्त्वमिति निष्कृष्टलक्षणद्वयं अभिहितं भवति । तदनेन तत्वनिर्णयटीकोक्तं ज्ञानग्राहकमात्रग्राह्यत्वं स्वतस्त्वं इति निर्वचनं परिष्कृत्योक्तं ध्येयम् । विस्तरस्तर्कताण्डवे स्वमते स्वतस्त्वनिरुक्तिभङ्गे ॥ ३११ ॥

**अतो दूरस्थवृक्षादिज्ञाने ज्ञातेऽपि यत्पुनः ।**
**प्रामाण्यसंशयस्तत्र तदस्माकंमते भवेत् ॥ ३१२ ॥**

ननु तथाऽपि स्वतस्त्वे अनभ्यासदशायां संशयो न स्यात् । ज्ञानग्रहे प्रामाण्यग्रहात् । अग्रहे च धर्मिज्ञानाभावादिति संशयानुपपत्तिबाधकं परिहरति **अत इति** । असति प्रतिरोधे साक्षिवेद्यत्वनियमो वा साक्षिवेद्यत्वयोग्यता वा स्वतस्त्वमित्युक्तम् । अप्रामाण्यसंशयस्थले च प्रामाण्यग्रहणशक्तिप्रतिबन्धिका दूरस्थत्वादिदोषानुसन्धानरूपा अप्रामाण्यग्रहणसामग्री समवहितैव । अन्यथाऽप्रामाण्यसंशयायोगात् । एवं च ज्ञानं गृह्णता साक्षिणा शक्तिप्रतिबन्धात्प्रामाण्याग्रहणेऽप्यस्मदुक्तस्वतस्त्वाहान्या स्वतस्त्वपक्षेऽपि धर्मिज्ञानस्य प्रामाण्यानिश्चयस्य च संभवेन संशयो युक्त एवेति भावः । एतेन स्वतस्त्वनिर्वचने अप्रतिरुद्धेतिविशेषणस्य कृत्यमुक्तं भवति ॥ ३१२ ॥

**यतो दूरत्वदोषेण स्वगृहीतेन कुण्ठितः ।**
**न निश्चिनोति प्रामाण्यं तत्र ज्ञानग्रहेऽपि सः ॥ ३१३ ॥**

साक्षी दोषान् यथायथं प्रत्यक्षानुमानागमैरनुसन्धत्ते । तत्र दूरस्थत्वदोषः साक्षिणैव गृह्यत इत्याह **स्वगृहीतेनेति** ॥ ३१३ ॥

**देशस्य विप्रकर्षो हि दूरत्वं स च साक्षिणा ।**
**गृहीतुं शक्यते यस्मादाकाशोऽव्याकृतो ह्यसौ ॥ ३१४ ॥**

तदेवोपपादयति **देशस्येति** । साक्षिवेद्यत्वाभावे जातिबधिरमूकादीनां गगनानिश्चयात्सञ्चार एव कुण्ठितः स्यात् अन्धकारे च हस्तप्रसारणादिकं च न स्यादिति भावः ॥ ३१४ ॥

**काचादिदोषं चैकत्र तत्कार्यानुमितं पुनः ।**
**यदान्यत्रानुसंधत्ते ज्ञानमात्रग्रही तदा ॥ ३१५ ॥**

अनुमानप्रमाणेन साक्षिणा दोषानुसन्धानमुदाहरति **काचेति** । इदं घटादिविषयकं चक्षुरिन्द्रियं, दोषवत् अस्पष्टतया विषयोल्लेखित्वात्, करतलस्थरेखोपरेखादीनां अस्पष्टतयोल्लेखिदुष्टचक्षुरिन्द्रियवदित्यनुमानप्रकारः कार्येण कारणानुमानरूपः ध्येयः ॥ ३१५ ॥

**विपर्ययेऽपि दूरत्वपूर्वदोषानुदर्शनात् ।**
**उदास्ते चतुरस्साक्षी प्रामाण्यग्रहणे किल ॥ ३१६ ॥**

'यद्दर्शनं क्वचिच्छुक्तिरजतादौ विषये व्यभिचारि बाधितं स्यात् तच्चक्षुरादिकरणकं मनःपरिणतिरूपमेव न साक्षिरूपम्' इति ज्ञानपादीयसुधोक्तिमनुरुध्याह **विपर्ययेऽपीति** ॥ **दोषानुदर्शनात्** । संशयनिश्चयसाधारणदोषज्ञानात् । **उदास्ते** । न दोषं चेत्प्रमाणं न चेदप्रमाणमिति व्यवस्थया गृह्णाति । अन्यतरकोटिं नावधारयति । **चतुरः** । अव्यभिचारिसुदृढनिर्णयात्मकः ॥ ३१६ ॥

**तदा रागादिदोषेण कलुषं चञ्चलं मनः ॥**
**गृह्णाति तत्र प्रामाण्यमर्थग्रहणकातरम् ॥ ३१७ ॥**

**तदा** साक्षिण औदासीन्यसमये । **गृह्णाति** निश्चिनोति । अन्यथा प्रवृत्तिर्न स्यादिति भावः । तत्र हेतुगर्भविशेषणत्रयम् **कलुषमित्यादि** । ॥ ३१७ ॥

**समीपस्थपदार्थानां चक्षुरादीन्द्रियैश्शुभैः ।**
**ग्रहणे ज्ञानयाथार्थ्यग्रहे तस्याग्रहो महान् ॥ ३१८ ॥**

**समीपस्थपदार्थानाम्** । पद्धत्युक्ता ये अर्थदोषाः अतिदूरत्वमतिसामीप्यमित्यादयः तद्रहितानाम् । **शुभैः** क्लृप्तदोषरहितैः । इन्द्रियैरित्युपलक्षणम् । निर्दोषया उपपत्त्या निर्दोषेण वाक्येन च । **महान् आग्रहः** प्रामाण्यं गृह्णात्येवेति नियमः ॥ ३१८ ॥

**स्वतः प्रामाण्यवादे तन्न काऽप्यनुपपन्नता ।**
**यथानुभूतसर्वार्थवादिनां तत्त्ववादिनाम् ॥ ३१९ ॥**

**स्वतः प्रामाण्यवादे** अप्रतिबद्धः साक्षी प्रामाण्यं नियमेन गृह्णातीति वादे । तदुक्तम् 'अदुष्टबुद्धीनां स्वत एव सिद्धत्वात्प्रामाण्यस्य' इति । **अनुपपन्नता** । परतस्त्ववादिनामिवानवस्था, प्राभाकराणामिव बाह्यागमज्ञानप्रामाण्यप्रसङ्गः, साङ्ख्यानामिव आरोपितज्ञानप्रामाण्यानुमानप्रसङ्गः इत्यादिका । ॥ ३१९ ॥

**न चेत्तण्डुलपानीयवस्त्रभार्यासुतादिषु ।**
**गृहस्थितेषु गृहिणो नवेषु स्यान्न निर्णयः ॥ ३२० ॥**

'संवादान्वयव्यतिरेकानुविधायित्वात्प्रामाण्यज्ञप्तेस्तत्कार्यत्वमित्येतदप्यनेनैव निरस्तम् व्यतिरेकाभावस्यानुभवसिद्धत्वात्' इति तत्वनिर्णयटीकोक्तमाह

**न चेदिति** । संवादो हि द्विविधः । सजातीयसंवादो विजातीयसंवादश्चेति । साक्षात्स्वविषयकप्रमाणान्तरसंवादः सजातीयसंवादः । स्वनिष्ठप्रामाण्यव्यवस्थापनद्वारा स्वविषयविषयकमानान्तरसंवादः विजातीयसंवादः । अत्र नवेषु इत्यनेन सजातीयसंवादाभावं सूचयति । गृहे स्थितेष्वेव न तु भुक्तेष्वित्यनेन विजातीयसंवादाभावम् । एवं च उभयविधसंवादाभावेऽपि प्रामाण्यज्ञप्तेरनुभवसिद्धत्वेन न तस्यास्तत्कार्यत्वमिति भावः ॥ ३२० ॥

**शिशुः किं जातमात्रोऽम्बास्तनं संदिह्य चुम्बति ।**
**पशुश्च नवघासादौ न विश्वसिति किं वने ॥ ३२१ ॥**

उक्त व्यतिरेके व्यभिचारं शिशूनां पशूनामप्यनुभवोदाहरणेन द्रढयति **किं जातमात्र इति** । अत्रापि जातमात्र इत्यनेन नवघासादौ इत्यनेन चोभयविधसंवादाभावो ज्ञाप्यते ॥ ३२१ ॥

**अनानुभविकी सर्वत्रापि संदिग्धता नृणाम् ।**
**विनोन्मत्तशिरःपित्तिपिशाचग्रस्तचेतनान् ॥ ३२२ ॥**

एतदनङ्गीकारे सर्वानुभवविरोधं बाधकमाह **अनानुभविकीति** । ॥ ३२२ ॥

**अनभ्यासदशापन्नसमीपस्थे न संशयः ।**
**न तत्र तद्धीमानत्वेऽप्यस्ति कस्यापि संशयः ॥ ३२३ ॥**

'बुद्धिदोषाभावेऽनभ्यासदशाऽऽपन्नज्ञानप्रामाण्यस्यापि निष्कम्पस्यैव प्रतीयमानत्वात्' इति तत्वनिर्णयटीकोक्तमाह **अनभ्यासेति** ॥ ३२३ ॥

**एवं चार्थेष्वसन्देहान्मानत्वेऽपि न संशयः ।**
**यतस्तत्संशयोऽप्यर्थसंशये पर्यवस्यति ॥ ३२४ ॥**

**असंदेहात्** धर्मिणि धर्मवैशिष्ट्यविषयकसन्देहाभावात् । **मानत्वे** तद्वद्विशेष्यकत्वे ॥ **तत्संशयः** तद्वद्विशेष्यकत्वसंशयः । **अर्थसंशये** धर्मि-

धर्मवैशिष्ट्यसंशये । **पर्यवस्यति** प्रामाण्यस्यार्थसत्ताघटितत्वादित्याशयः ।
॥ ३२४ ॥

**अयोग्यं मनसो मानत्वं चेत्तत्संशयः कुतः ।**
**स्वायोग्यगन्धे सन्देहश्चक्षुषा कस्य जायते ॥ ३२५ ॥**

मनसैव प्रामाण्यसंदेहः, न साक्षिणा तस्य सुदृढनिर्णयरूपत्वात् । तदुक्तं 'सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनम्' इति । 'मानसे दर्शने दोषाः स्युर्नैव साक्षिदर्शने । यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत्' इति च । तेन मनसः प्रामाण्यग्रहणयोग्यत्वं तावत्सिध्यतीत्याह **अयोग्यमिति** । अयं प्रयोगोऽत्राभिप्रेतः । मनः प्रामाण्यग्रहणयोग्यं, तत्सन्देहकारणेन्द्रियत्वात् । यत् यत्सन्देहकरणमिन्द्रियं तत् तद्ग्रहणयोग्यम्, यथा रूपसन्देहकरणेन्द्रियं चक्षुः रूपग्रहणयोग्यम् इति । विपक्षे बाधकोक्त्या अप्रयोजकतां वारयति **स्वायोग्येति** । चक्षुषा गन्धसन्देहोऽस्तु इति न शङ्क्यम् सर्वानुभवबाधितत्वादित्याह **कस्येति** । किंशब्द आक्षेपे ॥ ३२५ ॥

**उपनीतं च निर्णीतिकन्या धन्याऽन्वमन्यत ।**
**दोषाभावाद्विरुद्धार्थकोटेराटोपमोटनात् ॥ ३२६ ॥**

उक्तन्यायं साक्षिण्यतिदिशन्, अन्तरिन्द्रिययोः साक्षिमनसोः बहिरर्थभूततद्वस्त्वघटितप्रामाण्यग्रहणयोग्यता कथं घटत इति शङ्कां तदुपायोक्त्या निराह **उपनीतमिति** । अयमाशयः । साक्षी, बहिरर्थत्वात् तद्वस्त्वरूपस्य धर्मधर्मिवैशिष्ट्यस्य, तद्ग्रहणे न प्रभवतीति वदन् प्रष्टव्यः । किं साक्षिणो बहिरर्थो वैशिष्ट्यं विषय एव न भवति । उत स्वातन्त्र्येण तदविषयः । नाद्यः । साक्षिणो व्यवसायविषयकसाक्षात्कारत्वेन, व्यवसायस्य च ससंबन्धिकत्वेन, व्यवसायविषयकसाक्षिणः संबन्धिताऽवच्छेदकवैशिष्ट्यविषयकत्वनियमात् । धर्मधर्म्यंशयोरिव तद्वैशिष्ट्यांशेऽपि व्यवसायप्रत्यासत्तेः सत्त्वेन

तदप्रतीतौ हेत्वभावाच्च । न द्वितीयः । स्वातन्त्र्येण विषयत्वस्य स्वतस्त्वसिद्धावनुपयोगात् । उपनीततया वैशिष्ट्यविषयकत्वेऽपि साक्षिणा तद्घटितप्रामाण्यग्रहस्याविकलत्वात् । नन्वेवं साक्षिणः श्रुतसाक्षिवाक्यवत् व्यवसायविषयतया वैशिष्ट्यविषयकत्वेऽपि तत्संशयविरोधित्वरूपं सत्तानिश्चयरूपत्वं नास्तीति न तद्घटितप्रामाण्ये निश्चयरूपता इति चेन्न । यत्र ज्ञानस्यान्यद्वारेणार्थविषयता तत्र द्वारिणा द्वारं सत्त्वेनार्थविषयकमिति ग्रहणे द्वारिणोऽपि सत्त्वेनार्थविषयतेत्यनुभवसिद्धमित्याह **निर्णीतीति** । अत्र व्यवसायो द्वारम् । तत्र अर्थसत्ताविषयकत्वग्रहः साक्षिणो युज्यते । कुतः । **विरुद्धार्थकोटिः** अप्रामाण्यम् । **तदाटोपमोटनात्** । तदुपस्थित्यभावात् । अप्रामाण्यकारणं दूरस्थत्वादिदोषः । तदभावात् न व्यवसायेऽनाश्वासः । यथा कन्या उपनयनवन्तं दोषरहितं पुरुषं, विरुद्धधनकोटिमप्युपेक्ष्य वरयेदेव तथेति ध्वनिः ॥ ३२६ ॥

**अतस्सांशयिकत्वाख्यहेतोरेतादृशस्थले ।**
**असिद्धत्वान्नमानत्वपरतस्त्वप्रसाधकः ॥ ३२७ ॥**

परतस्त्ववादिना, सांशयिकत्वहेतुः परतस्त्वसाधनाय प्रयुज्यते । तत्किं दोषादिना साक्षिणः प्रतिरोधदशायां उत अप्रतिरोधदशायाम् । आद्ये अप्रयोजकता । प्रतिरोधादेव साक्षिणा प्रामाण्याग्रहणस्य, मानससंशयस्य चोपपत्तेः । अप्रतिबद्धसाक्षिवेद्यत्वरूपस्वतस्त्वाहानेः । द्वितीये तु प्रामाण्यस्य निश्चितत्वाद्धेतोरसिद्धिरेवेत्याह **अत इति** । **एतादृशस्थले** अप्रतिरोधदशायाम् । ज्ञानस्य प्रामाण्यग्रहे अभ्यासदशापन्नत्वमप्रयोजकम् किन्तु दोषाभाव एवेति हृदयम् ॥ ३२७ ॥

**दूरस्थे संशयोऽप्यस्ति दोषश्च भ्रमकारणम् ।**
**यतोऽणुत्वभ्रमो नृणां महत्यर्थेऽपि जायते ॥ ३२८ ॥**

दूरस्थस्य ज्ञाने प्रामाण्यग्रहणप्रकारं पक्षभेदेन विविच्य पूर्वोक्तां सांशयिकत्वस्य हेतोरसिद्धिं निष्कर्षति पञ्चभिः । **दूरस्थे इत्यादिना ।** तदुक्तं तत्त्वोद्योते 'द्विविधं ज्ञानम् । एकाकारनियतं डोलायमानं च । तत्र द्वितीयं सन्देहसंज्ञां लभते । आद्यमपि द्विविधम् । किञ्चित्स्वार्थस्य निश्चायकं यथा स्तम्भो भवत्येवेति । किञ्चित्स्वार्थमुल्लिखदपि न तस्य निश्चायकम् । यथा सवितृसुषिरविषयम् । स चायं भेदः क्वचित्संभावनाभावाभावाभ्यां भवति । क्वचित्परीक्षापेक्षायामपि तत्प्रवृत्त्यप्रवृत्तिभ्याम् । क्वचिच्च प्रागेव विपरीतसंस्कारभावाभावाभ्यां इति । **संशयोऽपीति** । अपिशब्देन क्वचित् साक्षिणा दोषसद्भावनिश्चये सति भ्रमोऽपि मानसो भवति । दोषस्य भ्रमकारणत्वात्, साक्षिणा च तदा प्रतिरोधेन प्रामाण्यग्रहणाभावादित्याह **दोषश्चेति ।** दूरत्वस्य दोषत्वेऽनुभवमाह **यत इति** ॥ ३२८ ॥

**तत्र तद्दोषरोधेन प्रामाण्यं प्राङ्न गृह्यते ॥ ३२९ ॥**

**तत्र** दूरस्थजलज्ञाने । **प्राक्** विशेषदर्शनाभावे । तत्सद्भावे तु प्रतिबन्धनिरासात्साक्षिणा प्रामाण्यं तत्रापि निश्चीयत एव ॥ ३२९ ॥

**विशेषदर्शनाभावाद्द्विकोटिस्मृतिमान् जनः ।**
**तदर्थी तत्र सन्दिग्धे मनसा न तु साक्षिणा ॥ ३३० ॥**

क्वचित्सन्देहं तत्सामग्र्युपपादनपूर्वकमभिनीय दर्शयति **विशेषेति ।** ॥ ३३० ॥

**विकल्परूपं हि मनो यत आहुः पुरातनाः ।**
**यतश्च संशयस्साक्षिवेद्यदुःखसुखेषु न ॥ ३३१ ॥**

'मानसे दर्शने दोषाः स्युर्नैव साक्षिदर्शने । सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनम्' इति ज्ञानपादीयानुव्याख्यानोक्तमाह **विकल्पेति** ॥ सर्वत्र

प्रामाण्यग्रहे परीक्षापेक्षां वदतां परतस्त्ववादिनामिव नास्माकमनवस्थेत्याह **यत इति** । तदुक्तं वादावल्यां 'सुखदुःखेच्छातदभावादिषु साक्षिसिद्धेषु क्वचिदन्यथाभावानुपलम्भात्' इति ॥ ३३१ ॥

**ज्ञानं गृह्णंस्तदा साक्षी निर्दोषं चेदियं प्रमा ।**
**इति सामान्यतः प्रामाण्यं च गृह्णन्निवर्तते ।**
**अत्र सांशयिकत्वाख्यहेतुस्स्यात्सिद्धसाधनः ॥ ३३२ ॥**

संशयस्थलेऽपि तद्धर्मिभूतस्य ज्ञानस्य ग्रहणं साक्षिणैव । तद्ग्रहणप्रकारस्तु निर्दोषं चेत्प्रमा न चेदन्यथा इति व्यवस्थयैव । ननु सुदृढनिर्णयरूपस्य कथमेवं संशयरूपतेति तत्राह **सामान्यत इति** ॥ अयं भावः । व्यवसायोत्पत्त्यनन्तरं करणदोषविषयके मानसे संशये तदाहितप्रामाण्याप्रामाण्यविषयके च तादृशे संशये सति साक्षी उक्तसंशयोपनीतकोटीरनूद्य पूर्वसंशयोपस्थितादोषत्वादिव्यवस्थाप्यत्वमेवोत्तरसंशयोपस्थितप्रामाण्याप्रामाण्ययोरवधारयति। अतस्तत्र स निश्चयरूप एव । सदोषत्वादिकोटिचतुष्टयं तु संशयद्वयोपनीतमनुवदत्येव न विधत्ते । तदवधारणे उदासीन इति न कुत्रापि तस्य संशयरूपत्वप्रसङ्ग इति । **सामान्यतः** पूर्वमानससंशयविषयतया सन्दिग्धं प्रामाण्यं अदोषव्यवस्थाप्यतया **गृह्णन्** न तु अवधारयन् इत्यर्थः । **सिद्धसाधनः** प्रतिबद्धः साक्षी प्रामाण्यं नावधारयतीति यत्प्रमेयं स्वतस्त्ववादिनां सिद्धं तस्यैव साधनः । न तु पुनः साक्षिणः प्रामाण्यग्रहणयोग्यत्वाभावरूपस्य पराभिमतपरतस्त्वसाधनः इत्यवधेयम् ॥ ३३२ ॥

**तत्र सांशयिकत्वेऽपि कुतोऽन्यत्र तदग्रहः ।**
**दूरस्थे चञ्चलं चक्षुर्न हि पात्रस्थितोदने ॥ ३३३ ॥**

**तत्र** प्रतिबन्धस्थले, **सांशयिकत्वेऽपि** साक्षिणा प्रामाण्यानवधारणेऽपि । **अन्यत्र** दोषतत्प्रयुक्तमानससंशययोरभावस्थले । तदग्रहः

प्रामाण्यानवधारणम् । **चञ्चलं** प्रमाऽजनकम् । न हि प्रतिबद्धं कार्यमजनयत्कारणमकारणं भवतीति भावः । तदुक्तं भगवत्पादैः 'अन्यथाऽनवस्थानात्' इति । तदाशयः विवृतस्तर्कताण्डवे, 'फलाभावमात्रेण स्वरूपयोग्यत्वाभावसाधने लोकसिद्धसर्वव्यवस्थाऽयोगादित्यर्थः' इति ॥ ३३३ ॥

**क्वचिज्ज्ञानत्वजातीये दोषजेऽव्यभिचारिणि ।**
**सर्वत्र व्यभिचारित्वशङ्कापङ्कोऽपि नोचितः ॥ ३३४ ॥**

अव्यभिचारिणि दोषाजन्ये । अस्य सर्वत्रेत्यनेनान्वयः । शङ्कापङ्कः निर्मूलसंशयः ॥ ३३४ ॥

**अनुमानत्वजातीये दोषजेऽव्यभिचारिणि ।**
**किं प्रामाण्यानुमानाच्च तच्छङ्की त्वं निवर्तसे ॥ ३३५ ॥**

किं चैवं शङ्कायाः सार्वत्रिकत्वाभ्युपगमे, त्वदभिलषितोऽनुमित्या प्रामाण्यनिश्चयोऽपि न सिध्येदित्याह **अनुमानत्वेति** । पर्वतो वह्निमानित्यनुमितिः प्रमाणं संवादादित्येवं त्वया प्रामाण्यानुमानेऽपि शङ्काऽऽस्कन्दनादिति भावः ॥ ३३५ ॥

**यदि व्याप्त्यादिदार्ढ्येन शङ्कां धिक्कुरुते भवान् ।**
**तर्हि निर्दोषतादार्ढ्यात्साक्षीह क्षोभयेद्धि ताम् ॥ ३३६ ॥**

परमुखेनैव समाधिं वाचयति **यदीति** ॥ ३३६ ॥

**तत्सन्निकृष्टदृष्टेषु न प्रामाण्यग्रहे भयम् ।**
**प्रामाण्यग्रहणे शक्तिस्साक्षिणस्स्वेन तेजसा ॥ ३३७ ॥**

**सन्निकृष्टदृष्टेषु** दोषाजन्यज्ञानेषु । **भयं** दोषजन्येष्वपि प्रामाण्यावधारणापत्तिरूपम् । **प्रामाण्यग्रहणे** स्वस्य स्वग्राह्यज्ञानस्य च प्रामाण्यावधारणे । **साक्षिणः** चेतनत्वेन स्वयंप्रकाशस्य । **स्वेन तेजसा** सहजशक्त्या । यत्र

क्वचित्परीक्षापेक्षा तु अपवादनिरासार्था । एतेन ग्राहकान्तरानवस्था परीक्षानवस्था चेत्यनवस्थाद्वयं परतस्त्ववादिनामिव नास्मन्मतेऽवकाशमासादयतीति समर्थितं वेदितव्यम् ॥ ३३७ ॥

**निरोधनाशमात्राय नदीरुद्धेन नौरिव ।**
**परीक्षाऽपेक्ष्यते क्वापि तदभावे स्वयं पटुः ।**
**न हि राजपथे गन्त्रा गमने नौरपेक्ष्यते ॥ ३३८ ॥**

सहजशक्तिमेवोपपादयति **निरोधेति** । तदुक्तं वादावल्यां 'न हि गोक्षुरकापसारणसापेक्षेति गजस्य गमनशक्तिः परतन्त्रा' इति ॥ ३३८ ॥

**निरोधकोऽपि कार्यस्याभावं सम्पादयेत्परम् ।**
**तदभावस्यापि कार्ये कारणत्वं न शोभते ॥ ३३९ ॥**

प्रतिबन्धकाभावस्य कारणत्वाभावं समर्थयितुं तावत्प्रतिजानीते **तदभावस्येति** ॥ ३३९ ॥

**रुणद्धि यद्धि सामग्रीसत्त्वेऽप्यभिमतं फलम् ।**
**बुधैस्तदेव सर्वत्र प्रतिबन्धकमुच्यते ॥ ३४० ॥**

प्रतिबन्धकलक्षणपरामर्शेनैव तस्य कारणत्वाभावः सिद्ध्यतीत्याशयेन तल्लक्षणमाह **रुणद्धीति** । तथा च सत्यां सामग्र्यां कार्यानुत्पादप्रयोजकत्वं प्रतिबन्धकत्वम् । प्रतिबन्धकाभावस्यापि कारणसामग्र्यां प्रवेशे सामग्र्यभावेनैव कार्याभावाल्लक्षणस्यासंभवः ॥ ३४० ॥

**उष्णस्पर्शभरेणोग्रश्शक्तो दग्धुं हि पावकः ।**
**मन्त्रादिप्रतिबद्धस्तु न दहेदन्यदा दहेत् ॥ ३४१ ॥**

एवं मणिमन्त्रादिप्रतिबन्धकाभावः न दाहं प्रति कारणमित्याह **उष्णेति** । तथा च वह्नौ दाहशक्तेरिव साक्षिणि प्रामाण्यग्रहणशक्तेः

सहजत्वेऽपि मण्यादिप्रतिबन्धेनादाहस्येव दोषशङ्कादिप्रतिबन्धेन प्रामाण्याग्रहणोपपत्तिरिति भावः ॥ विस्तरः तर्कताण्डवे प्रतिबन्धकाभावस्य हेतुत्वे प्रकारचतुष्टयभङ्गे ॥ ३४१ ॥

**यत्प्रागभावादुदयन्घटो न स्वनिरोधकृत् ।**
**यतस्तन्तुविनाशेन पटनाशे न तन्तुषु ।**
**तद्रोद्धृता यतश्चेशो नित्यः क्ष्मापातरोधकृत् ॥ ३४२ ॥**

कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वं इति पराभिप्रेतं लक्षणं निराह **यदिति** । तत्र अभावः प्रागभावः ध्वंसो वा । आद्ये स्वं प्रति अप्रतिबन्धके घटे स्वकारणीभूतस्वप्रागभावप्रतियोगित्वस्य सत्त्वेनातिव्याप्तिः । द्वितीये पटनाशं प्रति अप्रतिबन्धकेषु तन्तुषु पटनाशरूपकार्यं प्रति कारणीभूतो यस्तन्तुनाशः तत्प्रतियोगित्वस्य सत्त्वेनातिव्याप्तिः । न हि तन्तवः पटनाशं प्रति प्रतिबन्धकाः । सत्स्वेव तन्तुषु तन्तुसंयोगनाशेन पटनाशस्य जायमानत्वात् । उभयत्रापि, भूपतनप्रतिबन्धके भुवो धारके कूर्मरूपे परमात्मनि अव्याप्तिः । तत्र हेतुः नित्य इति । अनादिरित्यपि ग्राह्यम् ॥ ३४२ ॥

**अतो न कारणीभूताभावस्य प्रतियोगिता ।**
**प्रतिबन्धकता किं तु पूर्वोक्तैव सतां मता ॥ ३४३ ॥**

**अतः** सकलदोषैरव्याप्त्यादिभिर्दुष्टत्वात् । **पूर्वोक्ता** 'रुणद्धि यद्धि' इत्यादिनोक्ता ॥ ३४३ ॥

**मण्यादिर्मुख्यतो रोद्धा तस्यैवादर्शि लक्षणम् ।**
**हेतोर्विघटकादृष्टं त्वमुख्यं तन्न लक्षितम् ॥ ३४४ ॥**

प्रतिबन्धकं द्विविधं मुख्यं अमुख्यं चेति । तत्र आद्यं मण्यादिकं कारणनिष्ठकार्यानुकूलशक्तिविघटकरूपम् । द्वितीयं सामग्रीविघटकरूपमदृष्टम् ।

आद्यस्य लक्षणमेव पूर्वोक्तम् । अतो न तस्य द्वितीयलक्षणलक्ष्येऽव्याप्तिः शङ्कनीयेत्याशयेनाह **मण्यादिरिति** ॥ ३४४ ॥

**प्रतिबन्धकमण्यादेरभावो यदि कारणम् ।**
**कारणाभावतस्तर्हि कार्याभावो भविष्यति ॥ ३४५ ॥**
**प्रतिबन्धकताऽप्यत्र मण्यादेर्भण्यते कुतः ॥ ३४६ ॥**

कारणाभावः प्रतिबन्धक इति त्वन्मते मणौ मुख्यप्रतिबन्धकलक्षणं तावन्न संभवतीत्याह **प्रतिबन्धकेति** ॥ ३४५ ॥ ३४६ ॥

**दण्डाख्यकारणाभावाद्यत्र कार्यं न जायते ।**
**प्रतिबन्धेन निर्बन्धं तत्र को वक्ति मानवः ॥ ३४७ ॥**

कारणाभावे प्रतिबन्धकत्वव्यवहारः अलौकिक इति दृष्टान्तोक्त्याऽऽह **दण्डेति** ॥ ३४७ ॥

**कारणाभावहेतुश्च कश्चित्स्यात्प्रतिबन्धकः ।**
**सत्येव कारणे शक्तिस्तम्भकोऽप्यस्ति कश्चन ॥ ३४८ ॥**

त्वद्रीत्या मणौ अमुख्यप्रतिबन्धकलक्षणमप्यसंभवीति वक्तुं प्रागुक्तं विभागं स्मारयति **कारणेति** ॥ ३४८ ॥

**मण्यभावस्य हेतुत्वे तदभावात्मको मणिः ।**
**न हेत्वभावहेतुत्वात्प्रतिबध्नात्यदृष्टवत् ॥ ३४९ ॥**

असंभवमेवोपपादयति **मण्यभावेति** । त्वन्मते मणिर्हेत्वभावरूप एव न हेत्वभावघटकः इति भावः ॥ ३४९ ॥

**कार्याभावो यतस्स्वाभावाख्यहेतोरभावतः ।**
**सति तस्मिन्नभूत्तेन शक्तिस्तम्भकता गता ॥ ३५० ॥**

अत एव कारणनिष्ठकार्यानुकूलशक्तिविघटकत्वरूपस्य प्रतिबन्धकलक्षण-स्यापि त्वन्मते मणौ असंभव एवेत्याह **कार्याभावेति** ॥ ३५० ॥

**कारणाभावमात्रेण कार्याभावस्य सिद्धितः ।**
**शक्तिस्तम्भकता केन कल्प्या कल्पकसंसदि ॥ ३५१ ॥**

मण्यभावः खलु कारणं त्वन्मते । स च मणिसद्भावे नास्ति । तथा च कारणाभावः । तत एव च सामग्र्यभावः । तेनैव च कार्याभावः । सति चैवं कारणस्यैवाभावात् कार्याभावोपपत्तौ न कारणनिष्ठकार्यानुकूल-शक्तिविघटकत्वकल्पनाऽवकाशमासादयतीत्याह **कारणाभावेति** ॥ ३५१ ॥

**सर्वथा कारणाभावाद्भिन्नस्यात्प्रतिबन्धकः ।**
**न चेद्दण्डाभावतश्च प्रतिबन्धकता भवेत् ॥ ३५२ ॥**

विपक्षे लोकव्यवहारविरोधं बाधकं दर्शयन्नेव परोक्तलक्षणस्य प्रत्याख्यानमुपसंहरति **सर्वथेति** ॥ ३५२ ॥

**तस्माच्छङ्कापनोदाय परीक्षापेक्षणं क्वचित् ।**
**तदभावे सह ज्ञानैः प्रामाण्यं च स वीक्षते ॥ ३५३ ॥**

प्रत्याख्यानस्य प्रकृतोपयोगमाह **तस्मादिति** ॥ तदुक्तं तत्त्वनिर्णये 'अदुष्टबुद्धीनां स्वत एव सिद्धत्वात्प्रामाण्यस्य' इति । प्रतिबन्धदशायां कार्याजननमात्रेण शक्तेः सहजत्वाभावे वह्न्यादौ दाहादिशक्तेः सहजत्वमिति व्यवस्थित्यनुपपत्तेरिति भावः ॥ तथा च साक्षिणः प्रामाण्यग्रहणे सहजशक्तौ न काऽप्यनुपपत्तिरिति ॥ ३५३ ॥

**अथ प्रामाण्यानुमितेः पूर्वं प्रामाण्यसंशयः ।**
**सर्वत्राप्यस्ति तेनैतत्साक्षिणा वीक्ष्यते कथम् ॥ ३५४ ॥**

इदानीं पराभिमतपरतस्त्वसाधकमपाकरोति **अथेत्यादिभिः** ॥ ३५४ ॥

**अतोऽनुमानात्तत्तद्धि प्रामाण्यमनुमीयते ।**
**इत्यक्षिणी निमील्यैव वदन्तं प्रति चोच्यते ॥ ३५५ ॥**

'प्रामाण्यं परतो ज्ञायते सांशयिकत्वात्' इत्यस्य समीपस्थपदार्थ-विषयकज्ञानप्रामाण्ये असिद्धिरित्याह **अत इति** ॥ ३५५ ॥

**अनानुभविकस्सोऽयं संशयः केन कल्प्यते ।**
**प्रामाण्यग्रहणोपायाभावादिति मतं यदि ॥ ३५६ ॥**

**तदा तेऽन्योन्याश्रयाख्यमहादोषो भविष्यति ।**
**संशयानुपपत्त्यैव प्रामाण्येक्षणशिक्षणम् ॥ ३५७ ॥**

न चात्र विवादः । संशये कल्पकाभावात् अनुभवविरोधाच्चेत्याह **अनानुभविक इति** ॥ ननु न कल्पकाभावः । प्रामाण्यग्रहणोपायाभावस्यैव सर्वत्र सांशयिकत्वस्य कल्पकत्वात् । अत एव अनानुभविकमप्यसिद्धमिति चेद् अत्र प्रष्टव्यम् । प्रामाण्यग्रहणे उपायाभाव एव कुतः । अनुव्यवसाय-रूपसाक्षिण एव उपायस्य विद्यमानत्वात् । साक्षी न प्रामाण्यग्राहकः किन्तु अनुमितिरेवेति चेत् । किमेतत्स्वसमयानुरोधादेवोच्यते उत लोकानुभव-मनुरुध्य । नाद्यः अन्योन्याश्रयादित्याह **तदा त इति** । सिद्धे परतस्त्वरूपे त्वत्समये साक्षिणः प्रामाण्याग्राहकत्वसिद्धिः । तत्सिद्धौ च परतस्त्व-सिद्धिरिति ॥ ३५६ ॥ ३५७ ॥

**न चेद्घटत्वतद्वत्त्वतत्प्रकारकतादिकम् ।**
**उपनीतमनीतं वा साक्षात्कुर्याद्धि साक्ष्यसौ ॥ ३५८ ॥**

न द्वितीयः । लोकानुभवस्य विरुद्धत्वादित्याह **न चेदिति** । स्वसमयदुरभिनिवेशदुर्व्यसनेन अनुभवपीडनं न क्रियते चेत् इत्यर्थः । **साक्षात्कुर्यात्** अवधारयेत् । दोषाभावे साक्षिणः उपनीतांशेऽपि अवधारण-रूपत्वं 'उपनीतं च निर्णीतिकन्या धन्याऽन्वमन्यत' इत्यादिना समर्थितम् । **अनीतं** साक्षाद्विषयं घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वं सुखसुखत्व-**तद्वैशिष्ट्यादिकम्** आन्तरपदार्थं च । हीत्यनेन प्रतिबन्धकाभावे साक्षिणा प्रामाण्यावधारणस्यानुभवसिद्धतां द्योतयति ॥ ३५८ ॥

**यद्यस्ति संशयस्तेऽयं तदैवास्य पराभवः ।**
**पराभूते सति ह्यस्मिन्नीक्षणं स्याद् दुरीक्षणम् ॥ ३५९ ॥**
**प्रामाण्यवीक्षणाभावादेव संशयकल्पना ।**
**एवं च कथमन्योन्यसंश्रयस्त्वां जिहासति ॥ ३६० ॥**

न च प्रामाण्यसंशय एव प्रतिबन्धकः अन्योन्याश्रयादित्याह **यद्यस्तीति** ॥ ३५९ ॥ ३६० ॥

**पृथुबुध्नोदरत्वादेर्विशेषस्य प्रदर्शनात् ।**
**कथं समीपस्थघटपटाद्यर्थेषु संशयः ।**
**यन्मूलो ज्ञानमानत्वसन्देहस्ते भविष्यति ॥ ३६१ ॥**

प्रामाण्यसंशयं प्रत्यर्थसंशयः कारणम् । अर्थसंशयं च प्रति विशेषादर्शनम् । समीपस्थेषु घटपटाद्यर्थेषु पृथुबुध्नोदरत्वादिविशेषदर्शनस्यैव सद्भावेन नार्थसंशय एवोत्पत्तुमर्हति कुतस्तन्मूलकः प्रामाण्यसंशयः इत्याह **पृथ्विति** । ॥ ३६१ ॥

**यथा प्रामाण्यानुमानात्प्रामाण्यस्य विनिर्णयः ।**
**तथा घटत्वप्रत्यक्षाद्घटत्वस्यापि निर्णयः ॥ ३६२ ॥**
**शङ्काधानं यथा तत्र मूलदार्ढ्यान्न ते मते ।**
**तथा निर्दोषाक्षजन्यज्ञानदार्ढ्यादिहापि न ॥ ३६३ ॥**

किं चानुमितिः प्रामाण्यनिर्णयरूपेति परेणाङ्गीकृतम् । तत्र कुतो न संशयकल्पनेति वक्तव्यम् । अनुमाने क्लृप्तदोषाणामसिद्ध्यादीनामभावात्तत्र निर्णयश्चेत् प्रत्यक्षे क्लृप्तदोषाणां दूरस्थत्वादीनामभावाद्घटप्रत्यक्षस्यापि निर्णयरूपत्वमङ्गीकार्यमित्याह **यथेति** ॥ ३६२ ॥ ३६३ ॥

**तस्मात्प्रामाण्यशङ्काया बीजं भर्जितमत्र ते ।**
**निर्बीजा सा लता गर्भस्रावेणैव गताऽभवत् ॥ ३६४ ॥**

उपसंहरति **तस्मादिति** ॥ ३६४ ॥

**दोषशङ्काकृतोऽप्येषु न स्यात्प्रामाण्यसंशयः ।**
**समीपस्थघटाद्यर्थज्ञानेषु कुत एव सा ॥ ३६५ ॥**

अर्थेन्द्रिययोः सन्निकर्षेण जायमाने प्रत्यक्षे अप्रामाण्यशङ्कां प्रति तयोरन्यतरस्मिन्दोषशङ्का खलु कारणम् । यदा निर्दोषमिन्द्रियं दूरस्थत्वादिदोषरहितेनार्थेन सन्निकृष्टं सत् प्रत्यक्षं जनयति तदा तत्र ज्ञाने अप्रामाण्यशङ्काकारणस्यैवाभावेन नैव तच्छङ्का संभाविनीत्याह **दोषेति** ॥ ३६५ ॥

**तत्सन्निकृष्टदृष्टार्थज्ञानमानत्वसंशयः ।**
**अजानतां जानतां वा नास्ति चक्षुष्मतां सताम् ॥ ३६६ ॥**

**अजानतां जानतां वेति ।** परीक्षानैरपेक्ष्येण साक्षिणः सहजशक्त्यैव इति भावः । **सतां** अदुष्टबुद्धीनाम् ॥ यथोक्तं 'अदुष्टबुद्धीनां स्वत एव सिद्धत्वात्प्रामाण्यस्य' इति ॥ ३६६ ॥

**नायं घट इति प्रोक्ते भवत्येवेति यत्पुनः ।**
**भवन्ति प्रतिवक्तारस्तत्र किं कारणं वद ॥ ३६७ ॥**
**यद्यर्थे तत्र विश्वासस्तर्हि तेन च साक्षिणा ।**
**ग्रहणे नतरां तस्य विघ्नो द्वैमातुरो ह्यसौ ॥ ३६८ ॥**

एकाकारनियतोऽपि व्यवसायो द्विविधः । अयं घट इति, अयं घटो भवत्येवेति च । तत्राद्येऽनुव्यवसायः घटमहं जानामीत्येवंरूपः । द्वितीये तु घटमेव घटत्वेन जानामि इति सुदृढनिर्णयात्मकः व्यवसाये प्रामाण्योल्लेखी । तदुक्तं तर्कताण्डवे 'सुखमेव सुखत्वेन जानामीत्यादिज्ञाने प्रामाण्यशब्दानुल्लेखेऽपि तदर्थस्य सुखत्ववति सुखत्वप्रकारकत्वरूपस्य प्रामाण्यस्योल्लेखादि'ति । एतादृशस्थले न केवलं व्यवसायो निर्णयरूप एकाकारनियतत्वात् । किं नामानुव्यवसायोऽपि व्यवसायप्रामाण्यनिश्चयद्वारा अर्थनिर्णयस्य सुदृढतां सम्पादयति । तथा च तत्रार्थशङ्का नतरां संभवतीति प्रमेये लोकानुभव-

मभिनीय दर्शयति **नायं घट** इति । **द्वैमातुरः** व्यवसायानुव्यवसायरूपमातृद्वयोपेतः । विघ्ननिवारको विनायक इति ध्वनिः ॥ ३६७ ॥ ३६८ ॥

**किञ्च वित्तव्ययायाससाध्ये कर्मणि कर्मिणाम् ।**
**प्रामाण्यनिश्चयोऽवश्यं निश्शङ्कायै प्रवृत्तये ॥ ३६९ ॥**

'तत्प्रामाण्यं च स्वत एव अन्यथाऽनवस्थानात्' इति भगवत्पादोक्तां परतस्त्वहेतूनां प्रतिकूलतर्कपराहतिं वक्तुं तावत्प्रामाण्यस्य अवश्यवेद्यत्वमाह **किञ्चेति** । तदुक्तं तत्वनिर्णयटीकायां 'अवश्यवेद्यत्वाभावान्नानवस्थेत्यभिप्राय इति चेन्न । निश्शङ्कप्रवृत्तावश्यवेद्यत्वादि'ति । 'यद्यपि लोके संशयतोऽपि प्रवृत्तिर्भवति । तथाऽपि न बहुतरशरीरायासवित्तव्ययादिसाध्या पारत्रिकी प्रवृत्तिस्तथा भवितुमर्हती'ति च ॥ ३६९ ॥

**स चेत्स्वतो न तर्हि स्यादनवस्थाख्यदूषणम् ॥ ३७० ॥**

**स चेत्स्वतो नेति** । प्रामाण्यनिश्चयः साक्षीतरेण तार्किकरीत्या संवादादिलिङ्गेन वा, प्राभाकरदिशा मनोवृत्तिज्ञानेन वा, भट्टरीत्या ज्ञाततालिङ्गकानुमित्या वा भवतीति पक्षे इत्यर्थः । **अनवस्थेति** । फलमुखी करणमुखी चेत्यनवस्थाद्वयमित्यर्थः । यथोक्तं तर्कताण्डवे 'परतस्त्वे प्रामाण्यज्ञानस्यापि प्रामाण्यं संवादादिलिङ्गजन्यानुमितिरूपेणान्येन ज्ञानेन ग्राह्यम्, एवं तत्प्रामाण्यमप्यन्येनेति फलमुखी एकाऽनवस्था । एवं प्रामाण्यस्यानुमेयत्वे लिङ्गव्याप्त्यादिज्ञानप्रामाण्यानिश्चयेऽसिद्ध्यादिप्रसङ्गेन तन्निश्चयार्थं लिङ्गाद्यन्तरं तज्ज्ञानप्रामाण्यनिश्चयश्च स्वीकार्यः, एवं तत्र तत्रापीति करणमुख्यन्यापीति अनवस्थाद्वयापत्तेरि'ति । एवं प्राभाकरमते मनोवृत्तिज्ञानस्यास्वप्रकाशत्वेन ग्राहकान्तरानवस्था च ध्येया । साक्षिणा प्रामाण्यग्रह इति पक्षे तु नैतद्दोषावकाशः । साक्षी स्वयं प्रकाशः नियतयथार्थः, स्वात्मानं स्वप्रामाण्यं, व्यवसायं व्यवसायप्रामाण्यं च गृह्णातीत्यभ्युपगमात् ॥ ३७० ॥

**यद्यर्थनिश्चयादेव प्रवृत्तिरिति मन्यसे ।**
**तर्हि प्रामाण्यसन्देहस्थलेऽप्यर्थस्य निश्चयात् ॥ ३७१ ॥**
**आवश्यकात्प्रवृत्तिस्स्याद्यत्र प्रामाण्यसंशयः ।**
**तत्राप्युपान्तगमने किं न स्यादर्थनिश्चयः ॥ ३७२ ॥**
**अतः प्रामाण्यनिर्णीत्यै प्रवर्तेत न कश्चन ॥ ३७३ ॥**

ननु पारत्रिक्यां प्रवृत्तावपि अर्थनिश्चय एव हेतुः । समानविषयकत्वात् । आवश्यकत्वाच्च । अतो नानवस्थेति चेत् । किं अर्थनिश्चयमात्रो हेतुः उत अयमर्थः इत्थं भवत्येवेति अवधारणात्मकः अर्थनिश्चयाश्वासः । नाद्यः । तथा सति प्रामाण्यज्ञानस्यैव सर्वथाऽनपेक्षितत्वापत्त्या प्रामाण्यं परतो ज्ञेयं इति त्वन्मतस्यानवसरदुःस्थत्वापत्तेः । तस्य ज्ञेयत्वे खलु स्वतस्त्वपरतस्त्वचिन्तावसरः । अथ मतं, यत्र दूरादर्थनिश्चयो जायते तत्र तस्य अप्रामाण्यशङ्काऽऽस्कन्दितत्वेन प्रवर्तकत्वानुपपत्त्या, तादृशस्थले अप्रामाण्यशङ्कानिरासार्थं प्रामाण्यनिश्चयोऽपेक्ष्यते । स च समर्थप्रवृत्तिजनकत्वादिलिङ्गेनैवेति प्रामाण्यस्य परतस्त्वोक्तिर्युक्तेति चेदत्र वक्तव्यम् । प्रवृत्तिसामर्थ्यस्य कथं निर्णय इति । उपान्तगमनेन परीक्षया चेदेवं तर्हि प्रामाण्यनिश्चयानुमानात्पूर्वं अर्थनिश्चयस्यैवोत्पत्तिरुक्ता स्यात् । स च शङ्काऽनास्कन्दित एवेत्यभ्युपेयम् । अन्यथा प्रामाण्यसाधकहेतोरप्रयोजकत्वापत्तेः । तथा च प्रामाण्यनिश्चयसाध्यायाः प्रवृत्तेः अनुमानात्प्रागेव निष्पन्नत्वेन न तदर्थं प्रामाण्यनिश्चयानुसरणमिति प्रामाण्यस्य परतस्त्वचिन्ता मोघैवेत्याह **यद्यर्थेत्यादिभिस्त्रिभिः** ॥ ३७१ ॥ ३७२ ॥ ३७३ ॥

**यद्यर्थनिश्चयाश्वासः प्रामाण्यस्य विनिश्चये ।**
**अनवस्था तर्हि सुस्था निश्शङ्कासु प्रवृत्तिषु ॥ ३७४ ॥**

अर्थनिश्चयाश्वास एव प्रवर्तक इति द्वितीयपक्षमाशङ्कते **यदीति** । अप्रामाण्यशङ्कास्थले च अर्थनिश्चयसद्भावेऽपि न तदाश्वासः । इदमित्थं

भवत्येवेति अर्थनिश्चयाश्वास एव प्रवर्तकतयाऽङ्गीक्रियते । स च अप्रामाण्याशङ्कानिरासे एव भवति । तच्छङ्कानिरासश्च प्रामाण्यनिश्चयेन । तन्निश्चयश्चानुमित्यैव नानुव्यवसायेनेति प्रामाण्यस्यानुमेयत्वलक्षणपरतस्त्वोक्तिरर्थवतीति शङ्काऽऽशयः । परिहरति **अनवस्थेति** । प्रामाण्यनिश्चयस्य प्रवर्तकत्वाङ्गीकारेऽस्मत्प्रसंजितानवस्थाभिया खलु तत्पक्षं विहाय परेण अर्थनिश्चयाश्वासः प्रवर्तक इति पक्ष उपात्तः । इदानीं अर्थनिश्चयाश्वासार्थमपि पुनः प्रामाण्यनिश्चयस्याऽवश्यकताङ्गीकारे आगतः स एव दुरात्माऽनवस्थादोषः इति घट्टकुटीप्रभातवृत्तान्त इति भावः ॥ ३७४ ॥

**किञ्चार्थनिश्चयव्याप्तः प्रामाण्यस्यापि निश्चयः ॥ ३७५ ॥**

किञ्च अयं घटत्ववान् भवत्येवेत्येवंरूपार्थनिश्चयस्य प्रवर्तकत्वाङ्गीकारे निश्चितप्रामाण्यकं घटज्ञानं प्रवर्तकमित्येवाङ्गीकृतं भवति । तादृशार्थनिश्चयस्य तज्ज्ञानप्रामाण्यनिश्चयेन व्याप्तत्वादित्याह **किञ्चेति** । अर्थनिश्चयः व्याप्तो येनेति विग्रहः ॥ ३७५ ॥

**प्रकारत्वे विशेष्यत्वे न कदाऽप्यस्ति संशयः ।**
**घटत्ववत्त्वनिर्णीतिर्विशेष्ये याऽवशिष्यते ।**
**प्रामाण्यनिर्णयो ह्येष स एव ह्यर्थनिर्णयः ॥ ३७६ ॥**

व्याप्तिमेवोपपादयति **घटत्ववत्त्वेति** ॥ यत्र व्यवसायो विशेष्यवृत्तिधर्मप्रकारकः तत्र व्यवसायप्रकारप्रकारकतया व्यवसायप्रकारवद्विशेष्यकतया व्यवसायविषयकप्रत्यक्षात्मकोऽनुव्यवसायः व्यवसायप्रामाण्यनिश्चयात्मक एवेत्याह **स एवेति** ॥ अर्थनिर्णयं प्रति व्यापक एवेत्यर्थः ॥ ३७६ ॥

**अतो गृहीतप्रामाण्यं ज्ञानमेव प्रवर्तकम् ।**
**प्रवृत्तेरर्थनिर्णीतिजन्यत्वोक्तौ च किं न ते ॥ ३७७ ॥**

**अत इति** । प्रकारान्तरेण प्रवृत्तिनिर्वाहासंभवादित्यर्थः । तथा हि । न तावदर्थनिश्चयः एव प्रवर्तकः । पीतः शङ्ख इति निश्चयेऽपि पीतार्थिनोऽप्रवृत्तेः । नापि अप्रामाण्यशङ्काऽभावसहकृतः । तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यशङ्काभावः अनेकाभावघटितत्वाद्गुरुः । प्रामाण्यनिश्चयस्तु न तथेति लघुः । एवमप्रामाण्यशङ्काभाववत् प्रामाण्यात्यन्ताभावशङ्काभावः एवं तद्व्याप्तदोषजन्यत्वादिशङ्काभावोऽपि हेतुरिति अभावा अनेके । प्रामाण्यनिश्चयस्त्वेकः । अभावानां प्रामाण्यनिश्चयविरोध्यभावत्वेनैकत्वे त्वावश्यकत्वाल्लाघवाच्च प्रामाण्यनिश्चय एव सहकारी । प्रामाण्यनिश्चयस्याप्रामाण्यशङ्कानिवर्तकत्वेनोपक्षये त्वत्पक्षे प्रामाण्यस्यानुमेयत्वेनावश्यकेन प्रामाण्यव्याप्यतया लिङ्गज्ञानेनैवाप्रामाण्यशङ्कानिवृत्तिसंभवात्प्रामाण्यज्ञानस्य प्रवृत्तावनुपयोगात्तद्ग्रहणचिन्ता व्यर्था । अन्यथा व्याप्त्यादिनिश्चयोऽपि व्यभिचारादिशङ्कानिरासोपक्षीणः स्यात् । इत्यादि दूषणं द्रष्टव्यम् । विस्तरस्तु तर्कताण्डवे प्रामाण्यस्य प्रवर्तकत्वभङ्गे ॥ ३७७ ॥

**तज्ज्ञानग्राहकेणैव तद्ग्रहे नानवस्थितिः ।**
**अन्येन तु ग्रहेऽत्युग्रां कस्तरेत्तां सुदुस्तराम् ॥ ३७८ ॥**

**तदिति** । निष्कम्पप्रवृत्त्यर्थं अवश्यवेद्यत्वादिति भावः । तदुक्तं तत्वनिर्णये । 'प्रामाण्यं तावदवश्यं केनचित्प्रमाणेन वेदितव्यम् । अन्यथा तदभावप्रसङ्गात् । न च ज्ञानग्राहकातिरिक्तेन तद्ग्रहणं संभवति । तत्प्रामाण्यस्याप्यन्येन ग्रहणाङ्गीकारेऽनवस्थानात् । तस्य स्वतस्त्वे प्रथमस्यैव तथात्वाङ्गीकारोपपत्तेः । अतः परिशेषात् स्वतस्त्वसिद्धिरि'ति ॥ ३७८ ॥

**घटे घटत्वसत्त्वे हि घटज्ञानस्य मानता ।**
**पटादौ च पटत्वादेरसत्त्वे तज्ज्ञानमानता ॥ ३७९ ॥**

प्रामाण्यं अनुव्यवसायविषयत्वयोग्यं इति अनुपदं सिषाधयिषुस्तदर्थं प्रामाण्यस्वरूपं निर्धारयति **घट इति** । विशेष्यवृत्तिधर्मप्रकारकत्वमेव प्रामाण्यं न तु मणिकृदुक्तरीत्या विशेष्यनिष्ठात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नत्वादिकं येन व्यवसायाविषयतया अनुव्यवसायविषयत्वायोग्येन बहिरर्थेनाभावरूपोपाधिना घटिततया प्रामाण्यस्य, तद्विषयीकरणयोग्यताऽनुव्यवसायस्य न स्यादित्याशयः ॥ ३७९ ॥

**तत्तद्वत्त्वं तेषु तेषु व्यवसायेऽवसीयते ।**
**ततोऽनुव्यवसायेऽपि तद्भानं स्याद्धि तद्बलात् ॥ ३८० ॥**

व्यवसायविषयभूतं धर्मधर्मिवैशिष्ट्यं स्वविषयानुव्यवसायं प्रति सत्तया विषयत्वयोग्यं व्यवसायविषयत्वात् विशेष्यवत् इति तर्कताण्डवोक्तमनुमानं हृदि कृत्वाऽऽह **तत्तदिति** । न चाप्रयोजकता । यदि उपनीतत्वमात्रेण वैशिष्ट्यं सत्तया न निश्चिनुयात् विशेष्यमपि न निश्चिनुयात् अविशेषात् इति विपक्षे बाधकसद्भावात् । योग्यत्वं च ज्ञानद्वारा प्रामाण्यावच्छिन्नसहजशक्तिकत्वं ध्येयम् । न चाविशेषासिद्धिः । विशेष्यांशेऽनुव्यवसायः सत्तया निश्चयरूप इति परेणाङ्गीकारात् । न चोपनीतं वैशिष्ट्यं कथं सत्तया विषयत्वयोग्यमिति वाच्यम् । विशेष्यमपि कथम् । उपनायकस्य व्यवसायस्य निर्दोषत्वेन निश्चितत्वादिति चेत्समं वैशिष्ट्येऽपीति भावः ॥ ३८० ॥

**एवं च ज्ञानयाथार्थ्यं ज्ञानग्राहकसाक्षिणा ।**
**कथं न गृह्यते ज्ञानं यदि स्यात्सविकल्पकम् ॥ ३८१ ॥**

अनुव्यवसायस्य सत्तया वैशिष्ट्यविषयकत्वे प्रामाण्यविषयकत्वस्य सिद्ध्या स्वतस्त्वसिद्धिरित्याह **एवं चेति** ॥ यदि स्यात्सविकल्पकमिति परराीत्योक्तम् । सिद्धान्ते निर्विकल्पस्याभावात् । वस्तुतस्तु सविकल्पकमित्यस्योपनायकमित्यत्र तात्पर्यम् । अयमत्र प्रयोगोऽभिप्रेतः । तत्तज्ज्ञानप्रामाण्यं

स्वाश्रयज्ञानविषयकानुव्यवसायविषयत्वयोग्यं तद्विषयत्वायोग्योपाध्यघटितज्ञान-धर्मत्वात् तत्तज्ज्ञानत्ववत् इति । इदं चानुमानं 'प्रामाण्यं ज्ञानग्राहकमात्रग्राह्यं अप्रामाण्येतरज्ञानवृत्तिधर्मत्वात् ज्ञानत्ववदिति सुधोक्तानुमानस्य परिष्कार-रूपम् ॥ ३८१ ॥

**यद्यस्य निर्णयो न स्याज्ज्ञानद्वारैव वेदनात् ।**
**ज्ञानोपनीतसौरभ्यनिर्णीतिस्तर्हि चक्षुषा ।**
**सुरभीदं चन्दनं चेत्याकारा जायते कथम् ॥ ३८२ ॥**
**घटोऽयमितिधीर्देशकालयोरुपनीतयोः ।**
**निर्णयाय कथं शक्ता न हि तत्राप्यनिश्चयः ॥ ३८३ ॥**

उपनीतेऽपि सत्तानिश्चयरूपतां पूर्वोक्तां विपक्षेऽनेकबाधकोक्तिभिर्द्रढयति **यदीत्यादिभिः** । शङ्कामुत्थापयति **यदीति** । अनुव्यवसायस्य श्रुतसाक्षि-वाक्यवत् अन्यविषयतया वैशिष्ट्यग्राहकत्वेऽपि तत्संशयविरोधित्वरूपं सत्ता-निश्चयरूपत्वं नास्तीति न तद्घटितप्रामाण्ये निश्चयरूपता । न हि अन्यविषय-तयाऽर्थग्राहकेणाप्यर्थसत्त्वसिद्धिः । गेहे घटज्ञानमिति वाक्यजन्यज्ञानेनापि घटसिद्ध्यापातादिति शङ्काऽभिप्रायः । परिहरति **ज्ञानोपनीतेति** ॥ दृढ-ज्ञानोपनीतेत्यर्थः । तथैवाग्र उक्तः । दृढेतिहेतुगर्भं विशेषणम् । दोषशङ्का-दिनाऽनास्कन्दितेत्यर्थः । अयमाशयः । न सव्यवधानमात्रेण सत्त्वानिश्चाय-कत्वम् । तथा सति सुरभीदं चन्दनमिति चाक्षुषज्ञानस्य ज्ञानोपनीतसौरभ्यांशे निश्चयरूपत्वं न स्यात् । तथा घटोऽयमिति चाक्षुषज्ञानस्य साक्ष्युपनीतयो-र्देशकालयोर्निश्चयरूपत्वं न स्यात् । न चेष्टापत्तिः । अनुभवविरोधादित्याह **न हीति** ॥ ३८२ ॥ ३८३ ॥

**उपनायकतज्ज्ञानदार्ढ्यात्तत्संशयो न चेत् ।**
**दृढज्ञानोपनीतेऽर्थे कथमत्राप्यनिर्णयः ॥ ३८४ ॥**

नन्वेवं गेहे घटज्ञानमिति वाक्यजन्यज्ञानं, कुतो घटसत्वं न साधयतीति चेद्वैषम्यादित्याह **उपनायकेति** । उपनायकं सौरभ्यज्ञानं देशकालोपनायकं साक्षिरूपं च ज्ञानं निर्दोषतया सत्त्वेनार्थविषयके इति गृहीते । तेन द्वारिणस्तत्सत्तानिश्चयरूपत्वं युज्यते । गेहे घटज्ञानं साक्षिणा श्रुतवाक्यं च द्वारिणा ज्ञानेन तथा न गृहीते इति न तेनार्थसिद्धिः । यदि पुनस्ते अपि क्वचित्तथा गृहीते तदा तत्रापि घटसत्त्वसिद्धिर्भवत्येव । घटोऽयमिति धीरित्युपलक्षणम् । ज्ञानमात्रमित्यर्थः । वस्तुसामान्यविषयकप्रत्ययमात्रस्य कालखचिततयैव तत्तद्वस्त्ववभासनात् । तदुक्तमनुव्याख्याने आनुमानिकपादे 'तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् ॥ साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते' इति ॥ तथा चोपनीतत्वमात्रेणानाश्वासे वस्तुमात्रस्य देशकालव्यवस्थाविलोपप्रसङ्ग इति भावः ॥ ३८४ ॥

**ज्ञातो मया गुरूक्तार्थ इति यो वेत्ति साक्षिणा ।**
**यथा तस्यास्ति विश्वासस्तस्मिन्नर्थे तथैव हि ॥ ३८५ ॥**
**ज्ञातो घटः पटो ज्ञात इत्यादावपि साक्षिणा ।**
**ज्ञानस्यूततया भातोऽप्यर्थः किं नावसीयते ॥ ३८६ ॥**

एतदर्थविषयकगुरुवाक्यजन्यज्ञानवानहं इति साक्षिणोऽनुभवस्तदर्थे सत्तानिश्चयात्मकोऽस्तीत्यविवादः । तत्र साक्षी, ज्ञानं, गुरुवाक्यं चेति द्वयोपसर्जनतयाऽर्थं विषयीकरोति । एवमपि तस्य तत्रार्थे सुदृढ आश्वासः । ज्ञातो मया घटः इत्यत्र तु घटः केवलमेकस्यैवोपसर्जनतया भाति । ज्ञानमात्रोपसर्जनतयाऽर्थस्य भानात् । तथा च सुतरामाश्वासस्तत्र भवत्येवेति भावः ॥ ३८५ ॥ ३८६ ॥

**इति शुश्रुम धीराणां तदुक्तमृषिणेति च ।**
**श्रुत्या स्वोक्तार्थदार्ढ्यार्थं पूर्वैरप्युक्ततोच्यते ॥ ३८७ ॥**

द्वारस्य निर्दोषत्वे, तद्द्वाराग्रहणं, संवादेन दार्ढ्यसंपादकमेवेत्येतत् शास्त्रसंमत्या द्रढयति **इतीति** ॥ **दार्ढ्यार्थमिति** । तदुक्तं तर्कताण्डवे 'स्वतन्त्रादप्यनाशङ्कितदोषान्यद्वारा ग्राहकस्य । 'ऋषिभिर्बहुधागीतं छन्दोभिर्विविधैः पृथक्' । 'तदेतदृचाभ्युक्तम्' । इत्यादिवत्संवादेनाधिक्याच्च' इति ॥ ३८७ ॥

**वाचोगोचरताज्ञानेऽप्यर्थसत्ता यथेयते ।**
**ज्ञानगोचरताज्ञानेऽप्यर्थसत्ता तथेयताम् ।**
**न चेच्चारांश्चारयन्तो नृपाश्च स्युरकोविदाः ॥ ३८८ ॥**

द्वारिणोऽर्थसत्तानिश्चये द्वारस्य निर्दोषत्वमेव प्रयोजकमित्येतद्राजनीत्या विपक्षे बाधकोक्त्या द्रढयति **न चेदिति** । चारवाक्यस्य निर्दोषतां निश्चित्यैव राजाऽऽसितस्तदुक्तार्थज्ञानस्य प्रामाण्यमवधार्य तदर्थसत्तां निर्धारयति । एवमपि चेन्न तत्र निश्चयस्तर्हि चारनियोजकस्य राज्ञोऽकोविदत्वमापद्यत इति भावः । ॥ ३८८ ॥

**किं चेदं निरणायीति प्रोक्तेऽर्थे सत्त्वनिर्णयः ।**
**अस्त्येव निकटस्थेषु धीश्च निश्चयरूपिणी ॥ ३८९ ॥**

यदि च सव्यवधानत्वमात्रेण सत्त्वानिश्चायकत्वं तर्हि मम गेहे घटप्रमा इत्याप्तवाक्यजन्यज्ञानेनापि घटसत्त्वं न सिध्येत् इति तर्कताण्डवोक्तदिशा प्रतिबन्दीं गृह्णाति **किञ्चेति** ॥ इदं निरणायि, मया घटसत्त्वं निश्चितं, मम घटप्रमाऽस्तीति यावत् । विपर्यये पर्यवसानमाह अर्थे सत्वनिर्णयः अस्त्येवेति । अतः निर्दोषत्वाविशेषात् निकटस्थेषु धीश्च निश्चयरूपिणी अस्त्येव अङ्गीकार्यैव । अन्यथा पूर्वोक्ताप्तवाक्यजन्यज्ञानमपि अर्थसत्तानिश्चयरूपं न स्यादिति भावः ॥ ३८९ ॥

**अतो विनिश्चितोऽर्थोऽयमित्यनुव्यवसायवान् ।**
**अर्थसत्तारूपमेव तत्प्रामाण्यं च निर्णयेत् ॥ ३९० ॥**

तथा च प्रामाण्यस्वतस्त्वसिद्धिरित्याह **अत इति** ॥ अतः इदं इत्थमेवेति अर्थनिश्चयस्य तज्ज्ञानप्रामाण्यनिश्चयव्याप्तत्वात् । **अर्थसत्तारूपमेव** अर्थसत्ताव्यापकमेव । तथा च प्रयोगः । विमतः अनुव्यवसायः स्वग्राह्यव्यवसायप्रामाण्यविषयकः विनिश्चितार्थव्यवसायविषयकानुव्यवसायत्वात् प्रामाण्यानुमित्यनुव्यवसायवत् ॥ ३९० ॥

**किं च प्रामाण्यानुमित्याऽप्युपस्थिततदग्रहः ।**
**साक्षिणि स्याद्यतस्तत्राप्युपनीतं तदीयते ॥ ३९१ ॥**

सव्यवधानत्वमात्रेण निश्चायकत्वाभावेऽनुमित्यनुव्यवसायेनापि अनुमित्युपनीतव्यवसायप्रामाण्यनिश्चयो न स्यादित्याह **किञ्चेति** ॥ न चेष्टापत्तिः । अनुमित्यादिप्रामाण्यं स्वत इति प्राचीननैयायिकैरङ्गीकारेण अपसिद्धान्तापातात् ॥ ३९१ ॥

**न किं प्रमावानहमित्याकारा निश्चयात्मिका ।**
**जायतेऽनुव्यवसितिः प्रामाण्येऽनुमितेऽपि ते ॥ ३९२ ॥**

'न च नवीनन्यायमते तत्रापि स्वतः प्रामाण्याभावात्साध्यवैकल्यम् । तथात्वे तत्प्रामाण्ये कदाचित्संशयविपर्ययव्यतिरेकप्रमाऽन्यतरापातात्' इति तर्कताण्डवोक्तदिशा नवीनमतेऽनुभवविरोधमाह **न किमिति** ॥ ३९२ ॥

**व्याप्तिजानुमितेर्दार्ढ्यादुपनीतस्य निर्णये ।**
**अक्षजानुभवे दार्ढ्यं किं नास्त्यत्रोपनेतरि ॥ ३९३ ॥**

तत्र परिहारं परमुखेन वाचयित्वा समः समाधिरित्याह **व्याप्तिजेति** । उपनायकयोः दार्ढ्यं प्रत्यक्षानुमित्योरुभयत्र सममिति भावः ॥ ३९३ ॥

**नापि प्रामाण्यसन्देहाज्ज्ञानदार्ढ्यस्य विप्लवः ।**
**दृढरूढज्ञानशक्त्या संशयस्यैव हिंसनात् ॥ ३९४ ॥**
**घटत्ववत्त्वे सन्देहस्स्यात्तन्निश्चयविच्युतौ ।**
**सन्देहात्तच्च्युतेश्चोक्तौ किं दोषं नानुपश्यसि ॥ ३९५ ॥**

अर्थेन्द्रिययोः क्लृप्तदोषाभावे प्रत्यक्षं अयं घटो भवत्येवेति निश्चयरूपमेव जायते । एवं अनुव्यवसायोऽपि घटमेव घटत्वेन जानामि इति प्रामाण्यनिश्चयात्मकः । तत्र पुनःप्रामाण्यसन्देहस्यैवानवकाशान्न तत्संशयबलेन प्रत्यक्षस्योपनायकस्यादृढत्वकल्पना । अन्योन्याश्रयादित्याह **नापीति** । ॥ ३९४ ॥ ३९५ ॥

**किं प्रत्यक्षममानं ते किं वा दुर्बलमन्यतः ।**
**साभासत्वं द्वयोश्चास्ति मानत्वं चोभयोस्समम् ॥ ३९६ ॥**

किञ्च किमिदं प्रत्यक्षस्यादृढत्वम् । अमानत्वं, क्वचिदाभासत्वं, अनुमितिवत्साक्षात्प्रामाण्याविषयकत्वं वा । नाद्यः अनङ्गीकारादित्याह **किं प्रत्यक्षमिति** । किमाक्षेपे । न द्वितीयः अनुमानेऽपि साम्यादित्याह **साभासत्वमिति** । नापि तृतीयः । अनुमित्या प्रामाण्योल्लेखोऽपि जले जलत्ववत्त्वोपस्थापन एव पर्यवसितः । तच्च इदं जलमेवेति विषयीकारिणि प्रत्यक्षेऽप्यस्तीति कुतो दौर्बल्यमिति भावः ॥ ३९६ ॥

**प्रबलाक्षोपनीतेऽर्थे निर्णयो यदि नेष्यते ।**
**दुर्बलानुमयाऽऽनीते विश्वासो नतरां तदा ॥ ३९७ ॥**

वस्तुतोऽनुमानापेक्षया प्रत्यक्षमेव प्रबलमित्याह । **प्रबलेति** । तदुक्तं 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितं' इति । समर्थितं च न्यायामृते जात्योपक्रमादिन्यायैरुपजीव्यत्वेन च प्रत्यक्षप्राबल्यम् । अतो न तदुपनीते अनाश्वासशङ्कालेशोऽपीति भावः ॥ ३९७ ॥

**ज्ञातस्यैव पुनर्ज्ञाने प्रामाण्यं गृह्यते किल ।**
**तादृश्याद्ये दृढज्ञाने कुतो वा तन्न गृह्यते ॥ ३९८ ॥**

प्रथमं अयं घट इति व्यवसायः घटमहं जानामि इति तदनुव्यवसायश्च । अनेनानुव्यवसायेन स्वग्राह्यव्यवसायनिष्ठं प्रामाण्यं न ग्राह्यं स्वतस्त्वापत्तेः । किन्तु अयं घट इति समानविषयकं व्यवसायान्तरम् तद्विषयको द्वितीयोऽनुव्यवसायः । अनेन द्वितीयेनानुव्यवसायेन प्रथमव्यवसायनिष्ठं प्रामाण्यं गृह्यते इत्यङ्गीक्रियते । नन्वेवमपि प्रामाण्यस्यानुव्यवसायवेद्यत्वोपगमे अनुमेयत्वरूपपरतस्त्वहान्या पुनः स्वतस्त्वापत्तिस्तदवस्थैवेति चेन्न । तज्ज्ञानविषयकज्ञानाजन्यज्ञानविषयत्वं स्वतस्त्वं इति निर्वचनात् । तथा च तज्ज्ञानं ग्राह्यप्रामाण्याश्रयं प्रथमज्ञानं, तद्विषयकं ज्ञानं प्रथमानुव्यवसायः, तदजन्यं ज्ञानं तदेव, स्वस्य स्वाजन्यत्वात् । तस्य प्रामाण्यविषयकत्वं नाङ्गीकृतम् । किन्तु द्वितीयानुव्यवसायस्यैव । एवं च न स्वतस्त्वापत्तिः इति परतस्त्ववादपक्षमुत्थापयति **ज्ञातस्येति** । **पुनर्ज्ञाने** समानविषयकज्ञानान्तरानुव्यवसाये । **प्रामाण्यं** प्रथमज्ञाननिष्ठं इति शेषः । अन्यथा स्वतस्त्वापत्तेरित्यवधेयम् । किलेत्यपहासः । अपहासबीजं दर्शयन् दूषयति **तादृशीति** । निर्दोषतया दृढत्वेन द्वितीयज्ञानसदृशे प्रथमज्ञाने । अर्थसत्तानिश्चायकत्वप्रयोजकस्य उपनायकदार्ढ्यस्योभयत्र समानत्वेऽपि एकत्र निश्चयोऽपरत्र नेत्येतद्दुराग्रहमात्रमूलत्वादपहास्यमेवेत्याशयः ॥ ३९८ ॥

**परतस्त्वस्य रक्षार्थं यद्येष नियमस्तव ।**
**स्वतस्त्वपरिरक्षार्थं युक्तियुक्तौ ममाप्ययम् ॥ ३९९ ॥**

दूषणमेव विवृणोति **परतस्त्वस्येति** । अयमाशयः । प्रथमानुव्यवसायेनैव कुतो न प्रामाण्यग्रहः इति वक्तव्यम् । किं स्वसमयमात्रानुरोधेन, उत युक्तियुक्ततया । नाद्यः अतिप्रसङ्गात् परसमयरक्षणार्थं स्वतस्त्वस्याप्यङ्गी-

कार्यत्वापत्तेः इत्याह **स्वतस्त्वेति** । न द्वितीयः । तदभावात् । प्रत्युत स्वतस्त्वपक्षे एव युक्तीनां सद्भावसमर्थनेन वैपरीत्यस्यैवोचितत्वादित्याह **युक्तियुक्त इति** । एतेनान्यतरपक्षानिर्णय इति शङ्का परास्ता ॥ ३९९ ॥

**किञ्च प्रवृत्तिसामर्थ्यात्प्रामाण्यानुमितिस्तव ।**
**प्रवृत्तेश्च समर्थत्वं केन निर्णीयते वद ॥ ४०० ॥**
**न हि तत्रानुमा तेऽस्ति साक्षिणा केवलेन चेत् ।**
**पिता तवानुमानस्य साक्षी रक्ष्यो हि सर्वथा ॥ ४०१ ॥**

परतस्त्ववादिमुखेनैव साक्षिणोऽर्थसत्तानिश्चयात्मकतां वाचयितुं पराभिमतं परतस्त्वमनुवदति **किं चेति** । इदं जलज्ञानं प्रमाणं सफलप्रवृत्तिजनकत्वादिति अनुमेयत्वं खलु परतस्त्वम् । तत्र प्रवृत्तेः सफलत्वं नाम प्रवृत्तस्य जलार्थिनः उदन्याऽभावनिमित्तदुःखाभावस्य सुखस्य च अनुव्यवसायाभिमतसाक्षिणाऽनुभवः । तथाच दुःखाभावे सुखे च सत्तानिश्चयः तज्ज्ञानयोश्च तत्सत्ताघटितप्रामाण्यनिश्चयश्च साक्षिणोऽवश्यमङ्गीकार्यः । अन्यथा प्रामाण्यानुमितौ लिङ्गस्वरूपस्यैवासिद्ध्यापत्तेः । तथा च साक्षिणा प्रामाण्यग्रहमनुपजीव्य अनुमानस्यैवानुत्थानात् अनुमेयत्ववादिनाऽपि स्वतस्त्वमङ्गीकृतमेवेति तदनभ्युपगमोक्तिः स्वव्याहतेत्याह **पितेति** । उपजीव्य इत्यर्थः ॥ ४०० ॥ ४०१ ॥

**दूरे प्रामाण्यशङ्का चेन्नोपान्ते सा कुतो नृणाम् ।**
**ज्ञाने ज्ञातेऽर्थतोऽर्थेच्छोः कोटिस्मृत्या बुभुत्सया ।**
**प्राप्तशङ्कातरोर्मूलं छेत्तुं कोऽन्यः परश्वधः ॥ ४०२ ॥**
**अतोऽत्र तन्निरोधाय विशेषावसितिर्ध्रुवा ।**
**संशयस्य ह्यनुत्थानमेककोट्यवधारणे ॥ ४०३ ॥**

दोषशङ्काऽऽद्यकलङ्कितज्ञानस्यानुव्यवसायः स्वग्राह्यज्ञानप्रामाण्यविषयकः तद्विरुद्धाविषयकत्वे सति तद्व्याप्यत्वाविषयकत्वे सति तत्संशयविरोधिप्रत्ययत्वात्

इति तर्कताण्डवोक्तदिशा स्वतस्त्वेऽनुमानमग्रे 'विमता सन्निकृष्टापूर्वार्थादोषजदृष्टिदृक्' इति ४८४ श्लोकेन विवक्षुस्तदुपयुक्तमुपोद्घातं रचयति **दूरे इत्यादि चतुर्भिः** । शङ्कां प्रति दूरस्थत्वादिदोषः कारणम् । न चोपान्ते समीपस्थे स दोषः । अतस्तत्कार्यशङ्काऽपि नेत्याह **कुत इति** ॥ अनेन शङ्काया असार्वत्रिकत्वस्य व्युत्पादनेनानुमाने पक्षप्रसिद्धिर्व्युत्पादिता ज्ञेया । न च अप्रयोजकता । यदि प्रामाण्यनिश्चयो न स्यात् तत्संशयविरोधित्वमेव न स्यात् इति विपक्षे हेतूच्छित्तिरूपबाधकसद्भावादिति वक्तुं संशयविरोधित्वे संभावितानि प्रकारान्तराणि प्रतिक्षिपति **ज्ञाने इत्यादिना तस्मादित्यन्तेन** । तथाहि । संशयाभावः किं धर्म्यज्ञानात्, कोट्यस्मरणात्, बुभुत्साऽभावात्, प्रामाण्यविरुद्धविषयकत्वात् प्रामाण्यव्याप्यविषयकत्वात्, प्रामाण्यविषयकत्वाद्वा इति विकल्पान् क्रमेण निराह । **ज्ञाने इति** । नाद्यः । धर्मिणो ज्ञानस्य ज्ञातैकसत्त्वेन तदज्ञानमसंभवि । न द्वितीयः । प्रयोजनसद्भावेन तदिच्छोः ज्ञानत्वरूपसाधारणधर्मदर्शनवतः कोटिस्मृतिरपि नियता । न तृतीयः । अर्थेच्छोः विशेषबुभुत्साऽप्यवर्जनीया । **प्राप्तेति** । सामग्रीवशात्प्रसक्तेत्यर्थः । **मूलं छेत्तुं** अनुत्पादं प्रयोजयितुम् । **परश्वधः** प्रतिबन्धकः । **अन्यः** प्रामाण्याप्रामाण्यान्यतरकोटिनिर्धारणाभ्यामिति शेषः । सत्यां सामग्र्यां शङ्कारूपकार्यानुत्पादप्रयोजकं अन्यतरकोटिनिर्धारणरूपं विशेषदर्शनं वाच्यमिति भावः । ॥ ४०२ ॥ ४०३ ॥

**तस्मात्कथं न निर्णीतसमीपस्थार्थधीषु सा ।**
**अतोऽत्र संशयोच्छित्त्यै वाच्यः प्रामाण्यनिश्चयः ॥ ४०४ ॥**

विशेषदर्शनाभिमतेषु अन्तिमेषु त्रिषु विकल्पेषु चतुर्थस्तावदत्र अनानुभविक इत्याह **अत्रेति** । समीपस्थघटादिज्ञाने । **प्रामाण्यविरुद्धं** खलु अप्रामाण्यं, तद्व्याप्यं, प्रामाण्याभावः तद्व्याप्यं चेति चतुष्टयम् । तत्सर्वमपि

दोषाजन्यज्ञानस्थलेऽनुभवपराहतम् । तदन्यतमसद्भावे अर्थाभावनिश्चय एव स्यात् । न त्वनुभूयमानोऽर्थनिश्चयः । नापि पञ्चमः । तद्धि प्रामाण्य-व्याप्यत्वेन प्रामाण्यव्याप्यज्ञानं विवक्षितम् । न हि व्याप्यज्ञानमात्रात्संशय-निवृत्तिः । अन्यथा तैलं पृथिवी न वेति संशयो न स्यात् । तच्चात्र नास्ति । व्याप्त्यनुसन्धानहीनानामपि बालमुग्धादीनां संशयादर्शनात् । अतः परिशेषात् षष्ठः प्रमाणविषयकत्वपक्ष एव स्वीकार्यः । तथा च प्रामाण्यस्य अनुव्यवसाय-वेद्यत्वरूपस्वतस्त्वसिद्धिर्निष्प्रत्यूहेत्युपसंहरति **तस्मादिति** ॥ ४०४ ॥

**नात्र प्रवृत्तिसामर्थ्यमन्यद्वाऽस्त्यनुमापकम् ।**
**यतो गृहीतप्रामाण्यज्ञानजातीयताऽपि न ।**
**नवार्थनूत्नज्ञानत्वात्स्वतस्त्वं कस्त्यजेत्ततः ॥ ४०५ ॥**

न चात्राप्यनुमेयत्वं संभावनार्हं अनुमापकलिङ्गाभावात् । तद्धि भवत् प्रवृत्तिसामर्थ्यरूपविजातीयसंवादो वा गृहीतप्रामाण्यकज्ञानसजातीयत्वरूप-सजातीयसंवादो वा । अत्र नोभयमपीत्याह **नात्रेति** ॥ तत्र न तावदाद्यं समर्थप्रवृत्तिजनकत्वम् । सर्वत्र ज्ञाने तदभावात् । प्रवृत्तेः सामर्थ्यनिर्धा-रणार्थमपि परीक्षायाः लिङ्गानुसन्धानस्य प्रामाण्यस्य साक्षिणैव ग्राह्यत्वात् । तत्रापि परीक्षान्तरानुसरणेऽनवस्थाया उक्तत्वात् । नापि द्वितीयम् । प्रत्यग्र-दृष्टपदार्थज्ञानेषु तदसंभवात् । एतदाह **नवार्थेति** ॥ संवादकज्ञानप्रामाण्य-स्यापि साक्षिणैवावधार्यत्वेन स्वतस्त्वानपायाच्च । तत्रापि सजातीयसंवादा-न्तरानुसरणेऽनवस्थानात् । उपसंहरति **स्वतस्त्वमिति** ॥ ४०५ ॥

**समीपगमने सत्येवार्थसामर्थ्यशोधनम् ।**
**तत्प्रमानुमितेः पूर्वं प्रामाण्यं साक्षिणेक्ष्यते ॥ ४०६ ॥**

उक्तदोषो दूरस्थज्ञानेऽपि समान इत्याह **समीपगमन इति** । **प्रवृत्तेः सामर्थ्यनिश्चयो** अर्थतथात्वनिश्चये तज्ज्ञानप्रामाण्यनिश्चय एव च पर्यवस्यतीति **भावः** ॥ ४०६ ॥

**साक्ष्युच्छिष्टकृताहारा तेऽनुमास्योपजीविनी ।**
**साक्षी तदक्षाद्यध्यक्षो नोपेक्ष्योऽयं मुमुक्षुभिः ॥ ४०७ ॥**

हेतोः पक्षवृत्तित्वनिश्चयकाले प्रागेव साक्षिणा प्रामाण्यस्य निश्चयादनुमानं सिद्धसाधनमेवेत्याह **साक्षीति** । अध्यक्षः सर्वप्रमाणानां प्रामाण्यग्राही । **मुमुक्षुभिरिति** ॥ मोक्षादिकमतीन्द्रियम् वेदैकप्रमाणगम्यम् । अतो न तज्जन्यज्ञानप्रामाण्यनिश्चये सजातीयसंवादरूपलिङ्गस्यावसरः । प्रवृत्तिसामर्थ्यरूपलिङ्गावधारणं मुमुक्षुदशायामसंभावितम् । अतो मुमुक्षूणां प्रवर्तको वेदजन्यज्ञाने प्रामाण्यनिश्चयः साक्षिणैवैष्टव्यः । अतः साक्ष्युपेक्षणेन परतस्त्ववादिनां मोक्षाशा दूरोत्सारिता इति हृदयम् ॥ ४०७ ॥

**अप्रामाण्ये स्वतस्त्वं न युक्तियुक्तमतो न तत् ॥ ४०८ ॥**

'दुष्टबुद्धीनामेवाप्रामाण्यशङ्केति परतोऽप्रामाण्यं' इति तत्वनिर्णयोक्तं अप्रामाण्यस्य परतस्त्वं समर्थयिष्यन्प्रतिजानीते **अप्रामाण्य इति** । अत इत्युक्तेर्यत इत्यादावुपस्कर्तव्यम् । तदित्यप्रामाण्यस्वतस्त्वं परामृशति ॥ यतो न युक्तियुक्तं अतः न तत् । अङ्गीकारार्हमिति शेषः ॥ ४०८ ॥

**भ्रमज्ञानज्ञेयरूप्यत्वाद्यभावो ह्यमानता ।**
**तत्सत्त्वग्राहिणी भ्रान्तिस्साक्षी चान्तः स्वतन्त्रदृक् ।**
**उपनायकशून्येन बाह्यं तद्गृह्यते कथम् ॥ ४०९ ॥**

ननु कथं न युक्तियुक्तम् । अप्रामाण्यं ज्ञानग्राहकमात्रग्राह्यं ज्ञानधर्मत्वात् प्रामाण्यवत् इति युक्तेः सद्भावादिति चेन्न । युक्तेः बाधितविषयत्वादाभासत्वं इति वक्तुं अप्रामाण्यस्वरूपं निर्धारयति **भ्रमेति** । भ्रमश्च तज्ज्ञानं च तस्य ज्ञेयः विषयः रूप्यत्वादि तदभावः । विशेष्यवृत्त्यभावप्रतियोगिरूप्यत्वादिधर्मप्रकारकत्वमिति यावत् **अमानतेति** हि शब्देन

सूचयति किमतो यद्येवमित्यत आह **तत्सत्त्वेति** ॥ अयमाशयः । अप्रामाण्य-घटकः रजत्वाद्यभावस्तावद्ग्राह्यार्थः । स च न साक्षात्साक्षिणा गृहीतुं शक्यः साक्षिणो बहिरस्वातन्त्र्यात् । नाप्युपनायकद्वारा । उपनायकभ्रान्तेस्तद-विषयकत्वात् । प्रत्युत रजतत्वादिसत्त्वग्राहित्वात् । अतो बाधितविषयमनु-मानमिति ॥ ४०९ ॥

**अतोऽनुमानतो रूप्यत्वाभावोपस्थितिर्यदा ।**
**तदा तदपिगृह्णीयादिति सर्वमनाकुलम् ॥ ४१० ॥**

**अतः** यतः साक्षी बहिरस्वतन्त्रः भ्रमश्च न रजतत्वाद्यभावोपनायकः तदनुल्लेखित्वात् तस्मात् । **अनुमानतः** इत्युपलक्षणम् । नेदं रजतमिति विसंवादिमानान्तरात् । तथा च नियमेन विसंवादसहकृतसाक्षिवेद्यत्वाद-प्रामाण्यं परतो ग्राह्यमिति फलितम् ॥ ४१० ॥

**॥ ज्ञानप्रामाण्यस्य ज्ञप्तौ स्वतस्त्वसमर्थनम् ॥**

**नापि प्रमाया जनको दोषाभावो गुणोऽपि वा ।**
**असल्लिङ्गपरामर्शाद्यतो यादृच्छिकानुमा ॥ ४११ ॥**

'तत्प्रामाण्यं च स्वत एव सिद्धं' इति तत्वनिर्णये करणप्रामाण्यस्य चोत्पत्तौ स्वतस्त्वं प्रतिपादितम् । तत्र ज्ञानप्रामाण्यस्योत्पत्तौ स्वतस्त्वं तट्टीकोक्तदिशा, परतस्त्वे बाधकोक्त्या समर्थयितुं उपक्रमते **नापीत्यादिना** । अयमाशयः । सुधायां जिज्ञासाधिकरणे उत्पत्तौ स्वतस्त्वं ज्ञानजनकमात्रा-धीनजन्मत्वं इति निरुक्तम् । तत्र मात्रपदेन ज्ञानत्वावच्छिन्नकार्यतानिरूपित-कारणताश्रयव्यतिरिक्तस्य गुणस्य दोषाभावस्य च व्यवच्छेदः । तत्र अनित्य-प्रमामात्रानुगतगुणः परतस्त्वसाधकः इति मन्वानाः पक्षधरप्रगल्भादयः ग्राह्य

**प्रमेत्यादिना** त्रेधा गुणस्वरूपं परिष्कृत्य फलतया विषयसत्त्वमेवानुगतगुणं निरूपयन्ति । अयं च पक्षः अग्रे 'यद्यर्थसत्ताऽत्र गुणस्तथापि न गुणाज्जनिः' इति (४३२) श्लोकमारभ्य निरसिष्यते । तत्र विस्तरः तर्कताण्डवे प्रमामात्रानुगतगुणभङ्गे द्रष्टव्यः । प्रमामात्रानुगतगुणाभावेऽपि प्रत्यक्षादिप्रमासु प्रत्येकानुगतगुणैरेव परतस्त्वं सेत्स्यतीत्यपरे यज्ञपतिप्रभृतयः समास्थिताः । अनुमितिप्रमायां यथार्थलिङ्गपरामर्शस्यानुगतगुणत्वं च वर्णयन्ति । तत्र सुधायां मात्रपदेन व्यवच्छिन्नस्य गुणस्य दोषाभावस्य वा प्रमाजनकत्वं नोपपन्नमिति साधयितुं तावत् प्रतिजानीते **नापीति** । तत्र हेतुं व्यतिरेकव्यभिचारमाह **असल्लिङ्गपरामर्शेति** । इदमुपलक्षणम् । दुष्टार्थेन्द्रियसन्निकर्षात् यादृच्छिकी प्रत्यक्षप्रमा, विप्रलंभकादिवाक्यात् शुकादिवाक्याद्वा यादृच्छिकी शाब्दप्रमा इत्यपि ग्राह्यम् । तथा च तदभिमतगुणाभावेऽपि तत्तत्प्रमा सर्वत्र दृष्टेति भावः ॥ ४११ ॥

**सल्लिङ्गस्य परामर्शो गुणस्तेऽनुमितौ मतः ।**
**तदभावेऽपि जातेयमनुमा यत्प्रमापिका ।**
**सर्वत्र च प्रमायास्तद्गुणजत्वकथा वृथा ॥ ४१२ ॥**

एवं व्यतिरेकव्यभिचारात् प्रमायां न गुणः कारणमिति द्वाभ्यां विशदयति **सल्लिङ्गस्येत्यादिना** । बाष्पारोपितधूमेन जायमानायां यादृच्छिक्यां वह्न्यनुमितौ न विद्यमानलिङ्गस्य परामर्शोऽस्तीति भावः ॥ ४१२ ॥

**यो धर्मो व्यतिरेकेण व्यभिचारी स कार्यकृत् ।**
**कथं स्यात्कारणं यस्मादन्वयि व्यतिरेकि च ॥ ४१३ ॥**

व्यतिरेकव्यभिचारेऽपि गुणस्य कुतो न प्रमाकारणत्वमित्यतः कारणताग्राहकप्रमाणवैधुर्यादिति वक्तुं तत्प्रमाणमाह **यस्मादिति** ॥ **अन्वयि व्यतिरेकि चेति** । अन्वयव्यतिरेकलिङ्गगम्यमित्यर्थः । न तु अन्वय-

व्यतिरेकवत्त्वमात्रम् । तदुक्तं शक्तिसद्भावसमर्थनावसरे सुधायां 'ततोऽन्वयव्यतिरेकसमधिगम्यमतीन्द्रियमेव किञ्चिन्मृदादीनां घटादिकारणत्वमभ्युपगमनीयमि'ति ॥ तथा चान्वयव्यतिरेकवत्त्वरूपमनन्यथासिद्धनियतपूर्ववृत्तित्वमेव न कारणत्वम् । किं तु तदनुमेयम् । विस्तरस्तर्कताण्डवे शक्तिबादे ॥४१३॥

**दण्डे सति घटाभावादन्वयस्य निरूपणम् ।**
**यस्मिन्सत्येव यदिति प्राज्ञाः प्राहुर्विवेकिनः ॥ ४१४ ॥**

ननु यदुक्तं अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपान्वयव्यतिरेकवत्त्वलिङ्गेन कारणत्वमनुमेयमिति न तद्युक्तम् । अप्रामाण्यस्य परतस्त्ववादिना दोषस्य भ्रमकारणत्वं स्वीकृतम् । तच्च, दोषः भ्रमकारणं भ्रमनिरूपितान्वयव्यतिरेकवत्त्वात् इत्यनुमातव्यम् । न च तत्संभवति । यादृच्छिकसंवादिप्रमास्थले उक्तरूपलिङ्गाभावेनासिध्यापत्तेः । दोषसत्त्वे भ्रमसत्त्वं इति खलु भ्रमनिरूपितान्वयवत्त्वं दोषस्य वाच्यम् । न च तत्तत्र संभवति । दोषसत्त्वेऽपि यदृच्छया प्रमाया एवोदयेन भ्रमानुत्पादात् । अतोऽन्वयव्यतिरेकाभ्यां कथं कारणत्वानुमानमिति चेत् । स्यादेतदेवं यदि त्वदुक्तं अन्वयस्वरूपनिरूपणं उपपन्नं स्यात् । तथा सति दण्डस्यापि घटकारणत्वाभावप्रसङ्गादित्याह **दण्ड इति** । तर्हि निर्दोषोऽन्वयनिरूपणप्रकारः कीदृश इत्यत आह **यस्मिन् सत्येवेति** ॥ ४१४ ॥

**दण्डे सत्येव हि घटो दण्डाभावे न कुत्रचित् ।**
**अतोऽन्वयोक्तिर्मान्यैवं नान्यथा व्यभिचारतः ॥४१५॥**
**दण्डे सत्यपि मृत्पिण्डाद्यभावे यद्घटोऽपि न ।**
**रासभे सत्यपि घटो जायते च स्वकारणात् ॥ ४१६ ॥**

अयमेव प्रकारो निर्दोषतया मान्य इत्याह **दण्ड इति** ॥ ४१५ ॥
॥ ४१६ ॥

**अतोऽत्र दोषे सति च भ्रमाभावो न दूषणम् ।**
**दोषे सत्येव तु भ्रान्तिरिति सोऽपि यतोऽन्वयी ॥४१७॥**

**अत इति** । अन्वयप्रकारस्यैवंरूपत्वात् । दोषस्य भ्रमकारणत्वानुमाने भ्रमनिरूपितान्वयवस्वरूपहेत्वंशस्यासिद्धिः परिहृतेत्याह **नेति** । परिहारमुपपादयति **सत्येवेति** । एवकारपुरस्सरं व्याप्तिप्रदर्शनेन पूर्वं निर्दिष्टस्य व्यापकत्वावगमेन यत्र भ्रमः तत्र दोष इति व्याप्तिस्वरूपप्राप्तेः यादृच्छिकप्रमास्थले भ्रमस्यैवाभावेन निदर्शितान्वयव्याप्तिव्यभिचारस्याप्रसङ्गात् नान्वयवस्वरूपहेत्वंशस्यासिद्धिशङ्काप्रसर इत्याशयः । एतेन प्रमां प्रति गुणस्य कारणत्वमपि निरस्तम् । तत्रापि यत्र प्रमा तत्र गुण इत्येवान्वयस्य वक्तव्यत्वेन यादृच्छिकप्रमास्थले च गुणाभावेनान्वयव्यभिचारः स्फुटः । अतोऽन्वयवस्वरूपलिङ्गाभावान्न कारणत्वानुमानं संभवतीति ध्येयम् ॥ ४१७ ॥

**एवं च ज्ञानसामग्र्यां सत्यामेव प्रमा भवेत् ।**
**तदभावे तु न भवेदित्येवालं ममापि हि ॥ ४१८ ॥**
**तस्माद्भ्रमस्य सामग्र्यां प्रमासामग्र्यपि प्रमाम् ।**
**सामान्यरूपां कुर्यादित्याक्षेपो निर्निबन्धनः ॥ ४१९ ॥**

ज्ञानजनकमात्राधीनजन्मत्वं स्वतस्त्वं इति सुधोक्तं निर्वचनमप्यनेनैव समाहितमित्याह **एवं चेति** । ननु प्रमात्वस्य ज्ञानसामान्यसामग्रीप्रयोज्यत्वं खलु एतेन निर्वचनेनाभिप्रेतम् । भ्रमस्थले दोषस्याधिकस्य विद्यमानत्वेऽपि ज्ञानसामान्यसामग्री तावदविकला । तत्र कुतो न प्रमोत्पत्तिः । यदि दोषप्रतिबन्धान्न प्रमा तर्हि ज्ञानमपि सा न स्यात् । ज्ञानत्वप्रमात्वयोरेकसामग्रीप्रयोज्यत्वादेकांशे प्रतिबन्धेऽपरांशेऽपि तथात्वात् । मैवम् । स्यादेतदेवम् यदि ज्ञानसामान्यसामग्र्यां सत्यां प्रमेत्येवान्वयस्वरूपनिरूपणं भवेत् । न तदस्ति । किं नामोक्तदिशा ज्ञानसामान्यसामग्र्यां सत्यां एव

प्रमा इत्येव । न चैवं सति पूर्वोक्तातिप्रसङ्गः प्रसरतीति भावः । तदेतदाह **आक्षेपो निर्निबन्धन इति** ॥ ४१८ ॥ ४१९ ॥

**सुहृद्भावेन पृच्छन्तं प्रति तु प्रतिबन्धिका ।**
**एका फलबलात्तत्र नापरेत्युत्तरं वदेत्** ॥ ४२० ॥

नन्वेवं सति तत्र प्रमासामग्र्याः सत्त्वेऽपि दोषरूपप्रतिबन्धकवशान्न प्रमोत्पत्तिरित्युक्तं स्यात् । न च तद्युक्तम् । तथा सति ज्ञानोत्पत्तिरपि न स्यादित्युक्तो दोषः इत्यत आह **फलबलादिति** । अयमाशयः । प्रतिबन्धकत्वं हि सर्वत्र फलबलादेव कल्प्यम् । नायमस्ति नियमो यत्कारणनिष्ठशक्त्योरेकांशस्य प्रतिबन्धेऽपरस्यापि स इति । मणिनाऽग्निनिष्ठाया दाहशक्तेः प्रतिबन्धेऽपि तन्निष्ठायाः प्रकाशनशक्तेरप्रतिबन्धात् । एवमत्रापि दोषेण प्रमात्वजननशक्तिप्रतिबन्धेऽपि न ज्ञानत्वजननशक्तिप्रतिबन्धः । न हि तयोरेकशक्तिप्रतिबन्धकप्रतिबध्यत्वमपि स्वतस्त्वान्तर्गतम् । अतिप्रसङ्गपरिहारस्तु अनुभवसिद्धफलबलादेवेति भावः ॥ ४२० ॥

**यादृच्छिके यदृच्छैव भ्रमस्य प्रतिबन्धिका ।**
**दोषस्य जागरूकत्वात्तद्रोधे तदपेक्षणम्** ॥ ४२१ ॥

यदुक्तं दोषः प्रमात्वांशस्य प्रतिबन्धक इति न तद्युक्तम् । यादृच्छिकप्रमास्थले सत्यपि दोषे प्रमोत्पत्तिदर्शनादित्यत आह **यादृच्छिक इति** । तत्र यादृच्छिकस्य विषयसत्त्वस्योत्तेजकत्वेनोत्तेजकाभावविशिष्टस्य प्रतिबन्धकस्याभावात् । न हि मन्त्रसमवधाने मणिर्दाहं प्रतिबध्नातीति भावः ॥ ४२१ ॥

**प्रमासामग्र्येव शक्ता स्वफलं साधयेत्तदा ।**
**अतो यादृच्छिकी साऽभूत्तन्मात्रे तदपेक्षणात्** ॥४२२॥

**तदा** उत्तेजकेन प्रतिबन्धकशक्तेः कुण्ठनदशायाम् ॥ ४२२ ॥

**अन्यत्र सापि नापेक्ष्या गुणात्तत्क प्रमोदयः ॥४२३॥**

ननु यादृच्छिकप्रमास्थले विषयसत्त्वस्योत्तेजकत्वाङ्गीकारोऽयुक्तः। विषयसत्त्वस्य सार्वत्रिकत्वेन तस्यैव प्रमायां गुणत्वसम्भवात् स्वतस्त्वहानेरित्यत आह **अन्यत्रेति**। प्रमामात्र इत्यर्थः। **सा** यदृच्छा विषयसत्त्वमिति यावत्। **नापेक्ष्या**। विद्यमानमपि विषयसत्त्वं न प्रमाजनकतया अपेक्ष्यम्। **तत्** तस्मात् सल्लिङ्गपरामर्शादिकस्य वा दोषाभावस्य वा विषयसत्त्वस्य वा प्रमां प्रत्यजनकत्वात्। तदुक्तं तर्कताण्डवे अनित्यप्रमामात्रानुगतगुणभङ्गे 'किञ्च परतस्त्ववादिना हि विषयसत्त्वनैरपेक्ष्येण स्वत एवाप्रमाव्यावृत्तं ज्ञानकारणादधिकं किञ्चित्कारणं प्रमायां साधनीयम्। न तु ज्ञानसाधारणकारणस्यैव विषयसत्त्वविशेषणेनाप्रमाव्यावृत्तिः साधनीया। स्वतस्त्ववादिनाऽपि प्रमायां ज्ञानसाधारणकारणस्य विषयसत्त्वस्य स्वीकृतत्वेन सिद्धसाधनत्वादि'ति। अत्र ज्ञानसाधारणकारणस्येति पररीत्योक्तिरिति न्यायदीपव्याख्यायां व्यक्तम्। सुधोदाहरणेनाग्रे तत्रैव तर्कताण्डवे स्पष्टीकरणात्। तथा हि– 'अत एव सुधायां ज्ञानजनकमात्राधीनजन्मत्वमिति मात्रशब्देन जनकान्तरमेव निषिद्धम्। न तु विषयसत्त्वम्। तस्यातीतादिविषयकानुमित्यादिसाधारणत्वेन प्रामाण्यशरीरान्तर्गतत्वेन च तदजनकत्वादि'ति॥ प्रतिवक्ष्यति चाग्रे ग्रन्थकारोऽत्रैव विषयसत्त्वस्य गुणत्वं 'यद्यर्थसत्ताऽत्र गुणः' इत्यादिना॥ ४२३॥

**यतो वह्न्यनुमा सेयं ततो धूमत्वधीबलात्।**
**तज्जन्मवाच्यं नान्यस्माद्यद्धूमस्याग्निलिङ्गता॥ ४२४॥**

यदुक्तं यादृच्छिकप्रमास्थले सल्लिङ्गपरामर्शाभावेऽपि वह्न्यनुमितिदर्शनेन व्यतिरेकव्यभिचारान्न गुणस्य प्रमाकारणत्वमिति परतस्त्वासिद्धिरिति तदयुक्तम्। तत्र धूमाभासस्य वह्न्यनुमितिरूपप्रमाजनकत्वस्यैवानङ्गीकारादिति चेत् अत्र वक्तव्यम् कुतोऽयमनङ्गीकार इति॥ धूमाभासस्य ज्ञानजनकत्वमेव

नेति वा । उत्पन्नं ज्ञानं नानुमितिरिति वा । अनुमितित्वेऽपि लिङ्गान्तरादुत्पन्नेति वा । नाद्यः ज्ञानोत्पत्तेरनुभवसिद्धत्वात् । अनुभवमभिनीय दर्शयति **सेयमिति** । न द्वितीयः । प्रत्यक्षागमाजन्यस्यानुमितित्वावश्यम्भावादित्याह **वह्न्यनुमेति** । न तृतीयः । लिङ्गान्तरस्यानुपलम्भबाधितत्वेनादृष्टकल्पनाप्रसङ्गादित्याह **नान्यस्मादिति** ॥ ४२४ ॥

**यथाऽन्यत्र भ्रमाकारा सा धीर्धूमभ्रमादभूत् ।**
**तथैवेयं जनौ कोऽपि न विशेषोऽनयोर्द्वयोः ॥ ४२५ ॥**
**प्रवृत्त्युत्तरकालं तु विसंवादादसौ भ्रमः ।**
**संवादेन प्रमा सेयमिति निर्णीयते बुधैः ॥ ४२६ ॥**

ननु धूमभ्रमात्क्वचिद्वह्निभ्रमः क्वचित्प्रमा इत्येवं कार्ये वैचित्र्यं कुत इति चेत् किमुत्पत्तिप्रकारे विशेषं पृच्छसि उत ज्ञप्तौ । नाद्यः उभयोरपि असल्लिङ्गपरामर्शेनैव उत्पत्त्यनुभवेन तदभावात् । न द्वितीयः । संवादेन लिङ्गेनैकस्य प्रामाण्यं, विसंवादेनापरस्याप्रामाण्यमित्युत्तरकाले परीक्षया ज्ञप्त्युपपत्तेः । न चैवं प्रामाण्यग्रहस्य परीक्षापेक्षत्वे स्वतस्त्वहानिः । नदोषं चेत् प्रमाणं इति सामान्यतः प्रामाण्यं गृहीतवतैव साक्षिणा दोषशङ्कानिरासमात्रे परीक्षाऽपेक्षत्वेन तदनन्तरं स्वमहिम्नैव प्रामाण्यावधारणेन स्वतस्त्वस्याविकलत्वादित्येतस्य प्रमेयस्य सविस्तरं प्रागेव समर्थितत्वादित्याह **यथाऽन्यत्रेत्यादिना निर्णीयते बुधैरित्यन्तेन** ॥ ४२५ ॥ ४२६ ॥

**उत्पत्तिस्तूभयोरेकप्रकारा नात्र संशयः ।**
**तस्मादुक्तो गुणोऽन्यो वा कल्पनीयो न जन्मनि ॥४२७॥**

उपसंहरति **तस्मादिति ॥ अन्यो वेति** । अग्रे दूषयिष्यमाणस्तार्किकैः परिकल्पितः विषयसत्त्वैशीप्रमेत्येवमादिरूपः ॥ **कल्पनीयेति** । दुराग्रहमात्रमूलः न तु विचारसह इत्याशयः ॥ ४२७ ॥

**लिङ्गभ्रमाख्यानुमानदोषे सत्येव याऽभवत् ।**
**दोषाभावानपेक्ष्यैव सेयं यादृच्छिकप्रमा ॥ ४२८ ॥**

मा भूद् गुणः । दोषाभाव एव प्रमां प्रति कारणमित्यस्तु । एवमपि स्वतस्त्वहानिरेवेत्यतः प्रागुक्तौ यादृच्छिकप्रमास्थलीयौ अन्वयव्यतिरेकव्यभिचारौ मा विस्मार्षीरित्याह **लिङ्गेति** ॥ ४२८ ॥

**प्रमया नान्वयो यस्य व्यतिरेकोऽपि यस्य न ।**
**दोषाभावस्स कुत्रापि न प्रमां प्रति कारणम् ॥ ४२९ ॥**

**कारणमिति** । कारणतावच्छेदकप्रतिबन्धकाभावादिसाधारणं प्रयोजकत्वमात्रमनुमतमेवेति भावः । 'अदुष्टमिन्द्रियं त्वक्षं' इति ब्रह्मतर्के, 'निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम्' इति प्रमाणलक्षणे तत्र तत्र दोषाभावापेक्षतामात्रस्योक्तत्वात् । प्रतिबन्धकाभावस्तु न कारणम् । तदुक्तं सुधायां 'तर्हि दोषाभावः कारणमित्यायातमिति चेन्न । तथा सति उत्सर्गाभावयोः काप्यभावप्रसङ्गात्' इति । अत्र विस्तरस्तर्कताण्डवे प्रमायां दोषाभावस्य हेतुत्वभङ्गे ॥ ४२९ ॥

**एवं च भावाभावाख्यगुणघ्ना नैव या प्रमा ।**
**तत्स्वतस्त्वं महत्तत्वमित्याहुस्तत्ववादिनः ॥ ४३० ॥**

उक्तमर्थं निगमयति **एवमिति** ॥ **भावः** सल्लिङ्गपरामर्शादिः । तस्यान्वयतो व्यतिरेकतश्च व्यभिचारात् दोषनिरासोपक्षीणत्वेनान्यथासिद्धेश्च । **अभावः** दोषाभावः । तस्य प्रतिबन्धकाभावरूपत्वेनाकारणत्वात् । न तदुभयजन्यत्वं प्रमाया इत्याह **नैवेति** ॥ **महत्** उक्तदिशा साधकोपेतं बाधकरहितं च ॥ ४३० ॥

**कार्यस्यैवं व्यवस्थित्या सर्वमासीदनाकुलम् ॥ ४३१ ॥**

**सर्वं** अपौरुषेयवेदप्रामाण्यादिकम् ॥ ४३१ ॥

**तस्यापि चोत्तरं ब्रूमो यस्तथापि दुराग्रही ।**
**यद्यर्थसत्ताऽत्र गुणस्तथापि न गुणाज्ञनिः ॥ ४३२ ॥**

प्राग्दूषितं विषयसत्त्वस्य गुणत्वं अधिकदोषोक्त्यै पुनराशङ्कते **यदीति ॥** दूषयति **नेति** । विषयसत्त्वस्य प्रामाण्यशरीरान्तर्गतत्वेन न तज्जनकत्वमित्याह **न गुणाज्ञनिरिति** । यथा चैतत्तथा सुधाऽऽदिवाक्योदाहरणेन विवृतमधस्तात् ॥ ४३२ ॥

**परोक्षानुमितेर्जन्मन्यर्थो यत्ते न कारणम् ।**
**अन्यथा भाव्यनुमितेरसंभवमनुस्मर ॥ ४३३ ॥**

दोषान्तरमप्याह **परोक्षानुमितेरिति** । परोक्षशाब्दबोधस्येत्यादिकमपि ग्राह्यम् । **भाव्यनुमितेरिति** । अतीतानुमितेः अतीतशब्दबोधादेरित्यपि ध्येयम् । प्रत्यक्षादिप्रमास्वपि विषयसत्त्वस्य सद्भावेन त्वदुक्तस्यानुमित्यसाधारण्यस्यायोगाच्च अप्रमायामपि विषयासत्वस्यैव दोषत्वापाताच्चेत्यादयस्तर्कताण्डवोक्ता दोषा अप्यत्रानुसन्धेयाः ॥ ४३३ ॥

**नाप्यैश्वरार्थधीरत्र गुणो भवितुमर्हति ।**
**यद्धीत्वेनाखिले कार्ये सा हेतुर्न गुणत्वतः ॥ ४३४ ॥**

प्रत्यक्षादिप्रमासु प्रत्येकानुगतगुणपक्षं सल्लिङ्गपरामर्शस्य अनुमितिप्रमायां गुणत्वेनाभिमतस्य व्यतिरेकव्यभिचारप्रदर्शनेन दूषयित्वा, इदानीं प्रगल्भपक्षधराभिमतं प्रमामात्रानुगतगुणपक्षं दूषयति **नापीत्यादिना** । ग्राह्यप्रमा वा विशेष्यनिष्ठविशेषणज्ञानं वा अविद्यमानासंसर्गाग्रहो वा गुणः इति तदभिमतम् । तत्र ग्राह्यप्रमा नाम येन यद्ग्राह्यं तत्र तत्प्रमा । तथा च प्रमामात्रं प्रति ईश्वरनिष्ठाया ग्राह्यप्रमाया गुणत्वमिति तदाशयः । **ऐश्वरार्थधीः** । ईश्वरनिष्ठा ग्राह्यार्थविषयिणी प्रमा । **यत्** यस्मात्कारणात् ।

**सा** ईश्वरनिष्ठा प्रमा । **धीत्वेन** उपादानगोचरसाक्षात्कारतया । **अखिले कार्ये** भ्रमसाधारणं कार्यत्वावच्छिन्नं प्रति । **न गुणत्वतः** । अत्र हेतुरिति पूर्वोक्तं योजनीयम् । प्रमामात्रे गुणत्वेन न हेतुरित्यर्थः ॥ ४३४ ॥

**गुणत्वेनापि हेतुत्वे कल्पनागौरवं भवेत् ।**
**स्वतस्त्वेनान्यथासिद्धेः कल्पकं च न किंचन ॥४३५॥**

ननु कार्यमात्रं प्रति साक्षात्कारत्वेन हेतुरपीश्वरप्रमा प्रमां प्रति गुणत्वेनापि हेतुरस्तु को दोष इत्यत आह **कल्पनेति** । अत्र वक्तव्यं कुत एषा कल्पनेति । ईश्वरज्ञानस्याकारान्तरेण हेतुत्वाक्लृप्तेर्वा, प्रमात्वस्य गुणप्रयोज्यत्वलक्षणपरतस्त्वान्यथानुपपत्त्या वा । नाद्यः । साक्षात्कारत्वेन हेतुत्वस्य क्लृप्तत्वादित्युक्तत्वात् । न द्वितीयः । परतस्त्वस्येदानीमप्यसिद्धत्वेनान्यथासिद्धेरित्याह **स्वतस्त्वेनेति** । अन्योन्याश्रयान्नैवं कल्पना युक्ता । प्रामाण्यस्य परतस्त्वनिश्चये ईश्वरज्ञानस्य ग्राह्यप्रमात्वरूपगुणत्वेन कारणत्वकल्पनम् । तत्कल्पने एव चानुगतगुणलाभेन परतस्त्वसिद्धिः इति ॥ ४३५ ॥

**लिङ्गभ्रमादेव साऽभूदनुमा लैङ्गिकी यतः ।**
**अर्थसत्तादयस्तद्धीमानत्वस्यानुमापकाः ॥ ४३६ ॥**

अर्थसत्त्वपर्यवसितमीश्वरज्ञानं प्रामाण्यशरीरान्तर्गतत्वेन न प्रामाण्यजनकम् । यादृच्छिकसंवादेन प्रमायामनुमितावपि प्रामाण्योत्पत्तिः भ्रमप्रमासाधारणया अनुमितेः व्याप्तिज्ञानादिसामग्र्यैवेत्याह **लिङ्गेति** । तत्र हेतुमाह **लैङ्गिकी यत इति** । अर्थसत्ताजन्यत्वेऽनुमाया लैङ्गिकीति व्यवहारो न स्यादिति भावः । अर्थसत्तादीनां दोषशङ्कादिनिरासकत्वेन साक्षिणा प्रामाण्यावधारणे उपयोगमात्रं तु स्वीकृतम् । तावन्मात्रेण ज्ञप्तौ स्वतस्त्वाहानेरित्याह **अर्थसत्तादय इति** ॥ ४३६ ॥

**किं चार्थधीत्वतस्तस्यास्यात्तत्तदर्थेषु कारणम् ।**
**ज्ञानधीत्वेन च ज्ञाने न गुणोऽसौ भ्रमेऽपि यत् ।**
**तत्त्वदुक्तगुणोत्थाऽभूदेवमप्यनुमा न सा ॥ ४३७ ॥**

ईश्वरज्ञानस्य गुणत्वं रीत्यन्तरेणापाकर्तुं तस्य कारणत्वाकारं निर्धारयति **किञ्चेति** । ईश्वरः खलु घटं करोमीति सङ्कल्प्य घटं करोति । अतः तज्ज्ञानं, घटं प्रति, घटज्ञानत्वेन कारणम् । एवं पटं प्रति पटज्ञानत्वेन कारणम् । तथा च तत्तदर्थं प्रति तत्तद्विषयकज्ञानत्वेन तस्य कारणत्वं क्लृप्तम् । अस्त्वेवं किं प्रकृत इत्यत आह **ज्ञानधीत्वेनेति** । ज्ञानरूपकार्यं प्रति ज्ञानविषयकज्ञानत्वेन ईश्वरज्ञानस्य कारणत्वं सिद्धमित्याह **ज्ञान इति** । कारणमित्यत्राप्यन्वेति । अस्तु तर्हि तेनैव रूपेण प्रमां प्रति गुणत्वमित्यत आह **नेति** । तत्र हेतुमाह **यदिति** । यस्मादित्यर्थः । **भ्रमेऽपीति** । ज्ञानधीत्वेन कारणमिति योज्यम् । अयमाशयः । अप्रमायाः परतस्त्वसिद्ध्यर्थं यथा स्वत एव प्रमाव्यावृत्तं पित्तबाधप्रमादादिकं ज्ञानसाधारणकारणातिरिक्तं दोषरूपकारणं व्यवस्थाप्यते तथा प्रमायाः परतस्त्वं अभिलषता स्वत एवाप्रमाव्यावृत्तं ज्ञानासाधारणकारणातिरिक्तं किमपि गुणरूपकारणं व्युत्पादनीयम् । न च तव गुणाभिमतमीश्वरज्ञानं उक्तप्रकारोपेतम् । तस्य ज्ञानसाधारणकारणत्वेनाप्रमाव्यावृत्तत्वाभावात् । तथाभूतस्यापि गुणत्वाङ्गीकारे तेनैव गुणेनाप्रमाया अपि प्रमात्वापातादिति । उपसंहरति **तदिति** । **त्वदुक्तः** कार्यमात्रं प्रति तत्तत्कार्यविषयकज्ञानत्वेन कारणीभूतः ईश्वरज्ञानाख्यगुणः । **एवमपि** न केवलं अर्थसत्ताया गुणत्वानुपपत्तेः किंत्वनयाऽपि रीत्या । **सा** यादृच्छिकप्रमा ॥ ४३७ ॥

**करोमीदमिदं चेति तत्तत्कार्यं करोत्यपि ।**
**अन्यबुद्ध्याऽन्यकरणमभ्रान्तस्य कथं वद ॥ ४३८ ॥**

ईश्वरज्ञानस्य कार्यमात्रं प्रति पूर्वोक्तं कारणत्वप्रकारं व्याप्तिप्रदर्शनेन समर्थयति **करोमीति** ॥ इदमिदमिति तत्तदिति च वीप्सया व्याप्तेरव्यभिचारमाह । विपक्षे ईश्वरस्य भ्रान्तत्वापत्तिप्रसङ्गेन नाप्रयोजकतेत्याह **अन्यबुद्धयेति** ॥ तथा च ज्ञानरूपकार्यं प्रति ज्ञानविषयकज्ञानत्वेनैवेश्वरज्ञानस्य कारणत्वम् । तस्य चाप्रमासाधारण्यान्न गुणत्वमिति फलितम् ॥ ४३८ ॥

**गुणानपेक्ष एवासौ भ्रमं कुर्यात्किल प्रभुः ।**
**गुणैः किल प्रमां कुर्यान्न स्वतन्त्रेऽन्यतन्त्रता ॥ ४३९ ॥**
**भ्रमज्ञानं यथा कुर्यात्प्रमां कुर्यात्तथैव हि ।**
**द्विप्रकारतया कर्तुं किं स तार्किककिङ्करः ॥ ४४० ॥**

नन्वप्रमासाधारण्येऽपि न प्रमां प्रतीश्वरज्ञानस्य गुणत्वं विरुध्यते । विद्यमानमपि भ्रमविषयकं ज्ञानमीश्वरो न भ्रमकृतावपेक्षते । प्रमाकृतौ तु तज्ज्ञानमपेक्षत इति स्वीकारादिति तार्किकाभिमतमनूद्य सोपहासं दूषयति **गुणेत्यादि द्वाभ्याम्** । विद्यमानस्याप्येकत्र भ्रमेऽनपेक्षा अपरत्र प्रमायामेवेश्वरेणापेक्षेत्येवं प्रकारद्वयकल्पनं तदा स्याद्यदि प्रमायाः परतस्त्वं प्रामाणिकं स्यात् । तदेव नास्ति । तव दुराशापूरणाय स्वतन्त्रस्येश्वरेच्छा न नियन्तुं शक्येति भावः ॥ ४३९ ॥ ४४० ॥

**अर्थप्रमा यदि गुणः प्रमायामैश्वरीयते ।**
**भ्रान्तार्थो रजतादिस्सन्नन्यथाख्यातिवादिनः ।**
**अर्थसत्ताप्रमा चैशी तद्भ्रमेऽप्यस्ति ते मते ॥ ४४१ ॥**
**त्वदुक्तगुणसञ्जातौ द्वौ च जातौ भ्रमाभ्रमौ ।**
**गुणजत्वात्प्रमात्वं चेद्द्वयोरपि कुतो न तत् ॥ ४४२ ॥**

अतीतादिप्रमास्थलेऽभावात् प्रामाण्यशरीरान्तर्गतत्वाच्च नार्थसत्तागुण इत्युक्तम् । ऐश्वरी प्रमाऽप्यर्थसत्तापर्यवसायित्वात् भ्रमसाधारण्याच्च न गुण

इति च निरूपितम् । इदानीमुभयोरपि गुणत्वोक्तिस्तार्किकानां स्वप्रक्रिया-विरुद्धेति वक्तुं तदर्थं तदभिमतामन्यथाख्यातिमनुवदति **भ्रान्तेति** । अन्यत्र सत एवान्यत्र ख्यातिरन्यथाख्यातिरिति हि तन्मतम् । तथा च भ्रमविषयो रजतं सदेवेति भ्रमेऽपि अर्थसत्ता ऐशी प्रमा चेत्युभयोरपि विद्यमानतया तस्यापि प्रमात्वमापद्यते । अतस्तयोर्गुणत्वोक्तिः स्वव्याहतेत्याह **अर्थसत्ते-त्यादिना** ॥ ४४१ ॥ ४४२ ॥

**यदि तत्र सतोऽर्थस्य प्रमैशी ते गुणस्तदा ।**
**लघ्वी तत्रार्थसत्तैव गुणोऽभून्न तु तत्प्रमा ॥ ४४३ ॥**

ननु पुरोदेशे सतोऽर्थस्य ऐशी प्रमा गुण इत्यङ्गीक्रियते । भ्रमे च देशान्तरस्थार्थस्यैवैशी प्रमा । अतो न भ्रमसाधारण्यं दोष इत्याक्षिपति **यदीति** । समाधत्ते **तदेति** । तर्हीत्यर्थः । **लघ्वी** प्रमाशरीरान्तर्भूता । ऐशी प्रमा तु गुर्वी अर्थसत्ताघटितमूर्तिका । तद्घटितापेक्षया तस्य घटकस्य लघुत्वमिति भावः ॥ ४४३ ॥

**सा चानुमायां हेतुर्न गुणजा सा प्रमा कथम् ॥४४४॥**

**सा च** तत्रार्थसत्ता च । **अनुमायां** यादृच्छिकसंवादेन लिङ्गाभासेन जन्यायामनुमितौ । इदमुपलक्षणम् । शब्दाभासेन जन्यायां यादृच्छिक-शाब्दप्रमायां च । **न हेतुः** । परोक्षज्ञानस्य विषयाजन्यतायास्त्वयैवानभ्यु-पगमात् । वस्तुतस्तु ज्ञानमात्रस्य विषयाजन्यत्वनियमादिति ध्येयम् । 'विषयस्य क्वापि जनकताऽसंमतेरि'ति तत्त्वोद्योतटीकोक्तेः । उक्तं च तर्क-ताण्डवे प्रत्यक्षादिप्रमास्वनुगतगुणभङ्गे 'चक्षुरादिवत् कारणत्वेन धर्मिग्राहक-मानासिद्धोऽर्थः सन्निकर्षेणान्यथासिद्धत्वान्न प्रमाहेतुरि'ति । उपसंहरति **गुणजेति** । एतेन विशेष्यनिष्ठविशेषणज्ञानं अविद्यमानासंसर्गाग्रहो वाऽनित्य-प्रमामात्रेऽनुगतगुण इति पक्षद्वयमपि परास्तम् । पर्यवसाने विषयसत्त्वरूप-

त्वात् । विशेषणज्ञानस्यासंसर्गाग्रहस्य च भ्रमसाधारण्यात् । विशेष्यनिष्ठ-शब्देनाविद्यमानशब्देन च विषयसत्त्वस्यैवोक्तेः ॥ ४४४ ॥

**गुणस्य सत्त्वमात्रेण प्रामाण्यं भण्यते यदि ।**
**तदा सामान्यसामग्रीमात्रजन्या प्रमा मम ।**
**सर्वाऽप्यभूत्स्वतस्त्वस्य केन वा हानिरुच्यताम् ॥४४५॥**

ननु विषयसत्त्वस्य गुणस्य प्रमां प्रति कारणत्वं नोच्यते । येन पूर्वोक्तदोषः । किं नाम तस्य सत्त्वमात्रेणैव प्रामाण्यं भण्यत इति संभावितं पक्षान्तरमनुवदति **गुणस्येति** ॥ एवं सति परतस्त्वपक्षो दत्तजलाञ्जलिरिति परिहरति **तदेति** । गुणस्य कारणत्वानङ्गीकारे ज्ञानजनकमात्रजन्मवत्त्वं प्रामाण्यस्याभ्युपेतं स्यात् । ओमिति चेदेतत्पक्षस्य स्वतस्त्वपक्षस्य चानर्थान्तर-त्वेनाऽनुज्ञया वर्तामह इत्याह **स्वतस्त्वेति** ॥ ४४५ ॥

**ईदृग्गुणात् श्रुतीनां च मानता जानतां भवेत् ।**
**केन तासां जनिः कल्प्या तेन ते हीनताऽप्यभूत् ॥४४६॥**

गुणस्य सत्त्वमात्रमुच्यते न तु तस्य कारणत्वमित्यनेनान्यदप्यनु-कूलितमित्याह **ईदृगिति** ॥ कारणत्वशून्येत्यर्थः । **श्रुतीनाम्** । आप्तोक्तत्व-गुणाभावेऽपीति शेषः । अपौरुषेयत्वेऽपीति यावत् । **जानतां** ज्ञानिनां मते । **जनिः** सर्गादावीश्वरान्नूतनतया रचनम् । केनेत्याक्षेपे । प्रामाण्यमेव खलु तत्कल्पकं त्वदभिमतम् । तच्चोक्तरीत्या स्वतस्त्वेनैवोपपन्नम् । अतो निर्बीजं ते तत्कल्पनम् । वृथाऽप्रामाणिकं कल्पयतस्तव **हीनता** विवेकहीनता चाभूत् इत्यर्थः ॥ ४४६ ॥

**अनुभूतारोपकाले गुर्वी साऽप्यस्ति ते मते ।**
**लघुश्च पक्षो हन्ति त्वां गुरुश्चापि निहन्त्यहो ॥४४७॥**

परतस्त्ववादिनाऽऽदौ अर्थसत्ता गुण इति पक्ष आश्रितः । तस्या-स्तन्मते भ्रमसाधारण्यदोषे स्वतस्त्ववादिनोक्ते सति तत्पक्षपरित्यागेन तत्रार्थसत्ता गुण इति गुरुभूतः पक्षः समाश्रितः । गौरवदोषमविगणय्य द्वितीयपक्षाश्रय-णेऽपि भ्रमसाधारण्यदोषस्तदवस्थ एव । गृह्यमाणारोपस्थले तत्रैवार्थस्य सत्त्वा-दित्याह **अनुभूतेति** । गृह्यमाणेत्यर्थः । **सा** तत्रार्थसत्ता पुरोदेशे आरोपितस्य विद्यमानता । **त्वां** त्वदभिमतं परतस्त्वम् । अयमभिसन्धिः । आरोपो द्विविधः । गृह्यमाणारोपः स्मर्यमाणारोपश्चेति । तत्राद्ये आरोपितं पुरतः सदेव । अधिष्ठानस्यारोपितस्य च प्रतीयमानं तादात्म्यमात्रं मिथ्या । तथा च तत्र त्वदुक्तगुणोऽविकलः । तस्य च भ्रमसाधारण्यात् न परतस्त्वसाधकत्वमिति । तदुक्तं सुधायां 'यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसत् । यथा दूरस्थयोश्चूतपनसयोः । एक एवायं चूत इति बाधोत्तरकालमपि स्वरूपद्वया-नुवृत्तिरि'ति । तथा च परस्य 'भक्षितेऽपि लशुने न शान्तो व्याधिरि'-त्याभाणकविषयतेति भावः ॥ ४४७ ॥

**उपादानापरोक्षत्वेनैव सा कारणं किल ॥ ४४८ ॥**

ऐशी अर्थसत्ताप्रमा प्रमारूपकार्यं प्रति कारणमिति पक्ष एतावताऽभ्युप-गम्य दूषितः । वस्तुतस्तु तार्किकेण स्वप्रक्रियाविरुद्धः स नाङ्गीकारार्हः । कार्यमात्रं प्रति उपादानगोचरापरोक्षज्ञानत्वे ईश्वरज्ञानं कारणमिति हि तत्प्रक्रिया । तदनुरोधेन प्रमारूपकार्यं प्रत्यपि प्रमाया उपादानभूतस्यात्मनो ज्ञानत्वेनैव तस्य कारणत्वं तेन वक्तव्यम् । न तूत्पत्स्यमानप्रमाविषयकज्ञान-त्वेन । आत्मगोचरापरोक्षज्ञानत्वेन कारणत्वं तु भ्रमसाधारण्यान्न गुण इत्युक्त-मेवेति निरूपयिष्यन् परप्रक्रियां तावदनुवदति **उपादानेति** । **सा** ऐश्वरी **प्रमा** । किलेत्यनेन तदुक्ते ईश्वरसाधकानुमाने उपादानगोचरापरोक्षज्ञान-चिकीर्षाकृतिमज्जन्यं इति प्रतिज्ञासूचनेन प्रक्रियायास्तदङ्गीकृतत्वप्रसिद्धिमाह ॥ ॥ ४४८ ॥

**कर्तृज्ञानं तथैवानुत्पन्नकार्येषु कारणम् ।**
**न चेद्घटादिकर्तृत्वं कुलालस्य न शोभते ॥ ४४९ ॥**

युक्तियुक्ता चैषा प्रक्रियेत्याह **कर्त्रिति** । अनुत्पन्नेति हेतुगर्भं विशेषणम् । अयमभिप्रायः । कुलालज्ञानं घटं प्रति तदुपादानमृदाद्यपरोक्षज्ञानत्वेनैव कारणं वाच्यम् । न पुनर्घटगोचरापरोक्षज्ञानत्वेन । घटस्येदानीमप्यनुत्पन्नत्वेन तदपरोक्षज्ञानस्य कुलालेऽसंभवादिति । **न चेत्** । कार्यगोचरापरोक्षज्ञानत्वेनैव कर्तृज्ञानस्य कार्यं प्रति कारणत्वं कल्प्यते चेदिति यावत् । **न शोभते** । कर्तृत्वस्यैवोच्छेदप्रसङ्गः ॥ ४४९ ॥

**ज्ञानोपादानमात्मा ते तद्धीत्वेनैश्वरी मतिः ।**
**कारणं स्यादर्थधीत्वेनापि हेतुत्वकल्पनम् ।**
**त्वच्छास्त्रगौरवायैव भारस्ते गौरवाय न ॥ ४५० ॥**

प्रकृतोपयोगमाह **ज्ञानेति** । ते मते इति शेषः । तेन सिद्धान्ते आत्मनो ज्ञानोपादानत्वानङ्गीकृतिं ध्वनयति । परेण ज्ञानाधिकरणमात्मेति स्वीकृतम् । ज्ञानं गुणः आत्मा च गुणी । गुणं प्रति गुणिनः समवायिकारणत्वलक्षणोपादानत्वस्य पराभ्युपगतेरिति भावः । **तद्धीत्वेन** आत्मगोचरधीत्वेन । **कारणं** प्रमां प्रतीति शेषः । अपिरुपादानगोचरापरोक्षज्ञानत्वेन हेतुत्वं समुच्चिनोति । **भारः** अप्रामाणिकार्थनिरूपणम् । **शास्त्रगौरवाय** । ग्रन्थस्यायोग्यविस्तराय । **ते गौरवाय** । किं तु हीनत्वायैवेति भावः ॥ न तु पुनस्त्वदभिमतपरतत्त्वसिद्धिः । आत्मगोचरापरोक्षज्ञानस्य भ्रमसाधारण्येन गुणत्वासंभवादिति भावः ॥ ४५० ॥

**पुंनिष्ठस्तु गुणो लोके पुंसि तज्ज्ञानधर्मिणि ।**
**गुणोऽन्यत्रानुमाऽन्यत्र चित्रं शास्त्रप्रवर्तनम् ॥ ४५१ ॥**

किंच व्यधिकरणाया ईश्वरप्रमाया जीवनिष्ठयादृच्छिकप्रमासु हेतुत्व-कल्पनमनुपपन्नमित्याह **पुंनिष्ठ इति** । तु शब्द एवार्थः व्याप्तिसूचकः । लोक इत्यनेन व्याप्तेः सर्वोपसंहारित्वमभिप्रेतम् । यदि अन्यगतो गुणः अन्यत्र स्वकार्यप्रमां जनयेत् तर्हि देवदत्तनयनगतमञ्जनं यज्ञदत्तप्रमां जन-येदित्यतिप्रसङ्गो ध्येयः । चित्रमित्यपहासः । एवं अस्मदादिनिष्ठानां संशय-प्रत्यक्षानुमितिनिर्विकल्पानांयथाक्रममीश्वरनिष्ठैर्विशेषदर्शन-लिङ्गपरामर्शवाक्यार्थ-ज्ञान-विशेषज्ञानजन्यत्वाद्यथाक्रमं निश्चयत्वानुमितित्वशाब्दज्ञानत्वसविकल्प-त्वानि स्युः इत्यादयोऽतिप्रसङ्गास्तर्कताण्डवोक्ता अनुसन्धेयाः ॥ ४५१ ॥

**सर्वज्ञेशप्रमा नृणां गुणश्चेत्क्व भ्रमो भवेत् ।**
**गुणे सति प्रमाऽवश्यंभावाद्दोषविरोधिनि ॥ ४५२ ॥**

**सर्वज्ञस्य** सर्वदा सर्वविषयकयथार्थज्ञानवत ईशस्य प्रमा व्यधि-करणत्वेऽपि गुणश्चेत्, जीवेषु जायमानायाः प्रमाया उत्पत्तिं प्रति गुणविधया ग्राह्यप्रमात्वेन कारणमित्यङ्गीक्रियते चेत् । क्वेत्याक्षेपे । भ्रमो नैव भवेदित्या-शयः । तदेवोपपादयति **गुणे सतीति** । न हि सहकारिसमवहितं कारणं कार्यं व्यभिचरतीति भावः । ननु दोषः प्रतिबन्धक इत्यत आह **दोषविरोधि-नीति** । परतस्त्ववादिना गुणस्य दोषनिरासे प्रमायां चोभयत्र कारणत्वमङ्गी-कृतम् । तथा चैशीप्रमा स्वयं व्यधिकरणाऽपि जीवेषु विद्यमानं भ्रमकारणं दोषं निरस्य तेषु प्रमां जनयेदेव । तत्कुतो भ्रमोत्पत्तिः संभाविनीति भावः । तदुक्तं तर्कताण्डवे "किंचैव सति स्थाणौ करादिविपर्ययजन्यस्य पुरुषत्वभ्रमस्ये-श्वरनिष्ठया वक्रकोटरत्वादिप्रमया जन्यत्वात्स्थाणुप्रमात्वं स्यादि"ति । तथा च भ्रममात्रोच्छेदप्रसङ्गेन भ्रमस्य परतस्त्वव्युत्पादनप्रयासनैरर्थक्यमिति भावः ॥ ४५२ ॥

**प्रसिद्धगुणसन्त्यागेनाप्रसिद्धगुणोहनम् ।**
**न गुणश्शोधितधियां सुधियां कुधियामपि ॥ ४५३ ॥**

**प्रसिद्धेति** । 'भूयोऽवयवेन्द्रियसन्निकर्षयथार्थलिङ्गसादृश्यवाक्यार्थज्ञानानां यथायथं प्रत्येकमेव गुणत्वं' इति मणिकृदुक्त्या प्रत्यक्षादिप्रमासु प्रत्येकानुगतत्वेन प्रसिद्धेत्यर्थः । **अप्रसिद्धेति** । प्रमामात्रानुगतैश्वरीप्रमेत्यादीत्यर्थः । **गुणः** उत्कर्षप्रयोजकः । अपिशब्दः किमुत सुधियामिति कैमुत्यार्थकः ॥ ४५३ ॥

**दोषे सत्यप्रमा सर्वा दोषाभावे न सा क्वचित् ।**
**तत्स्वतस्त्वं न तत्तत्त्वमिति तत्त्वविदां मतम् ॥ ४५४ ॥**

ननु यदुक्तं 'दोषाभावानपेक्षैव सेयं यादृच्छिकप्रमा' इति तत्स्वविरुद्धम् । तथा सति दोषस्याप्रमां प्रति कारणत्वभङ्गप्रसङ्गात् । दोषे सत्यपि तत्राप्रमाऽनुत्पत्तेरन्वयव्यभिचारादिति चेन्नैवम् । दोषे सत्येवाप्रमेति अन्वयप्रकारस्य प्राग्व्युत्पादितत्वेन व्यभिचारानापत्तेरित्याह **दोषे सतीति** । दोषे सत्येवेत्यर्थः । तदुक्तं तत्त्वनिर्णयटीकायाम् 'ननु यादृच्छिकसंवादिषु सत्यपि दोषेऽप्रामाण्याभावात्कथमप्रामाण्यस्य दोषान्वयव्यतिरेकानुविधायित्वमिति चेन्न । तस्य सद्भाव एवोत्पादो नासद्भाव इत्यन्वयव्यतिरेकयोः कार्यकारणभावहेतुत्वादि'ति । **सर्वेति क्वचिदिति** चाप्रमां प्रति दोषस्याभिचरितानन्यथासिद्धान्वयव्यतिरेकवत्त्वमाह । अप्रामाण्यमुत्पद्यते चेत्तर्हि दोषसद्भाव एवोत्पादो नासद्भाव इति कार्यमुखान्वयव्यतिरेकयोर्विवक्षितत्वान्न यादृच्छिकसंवादादिस्थले व्यभिचार इति भावः । **तत्स्वतस्त्वं** अप्रामाण्यस्वतस्त्वम् । **तत्** तस्मात् । **तत्त्वविदां** इन्द्रियादीनां ज्ञानजननशक्त्यैव प्रमोत्पादकत्वं, अपवादकेन दोषेणाहितशक्त्याऽप्रमोत्पादकत्वं इति यत्तत्त्वं तद्विजानताम् ॥ ४५४ ॥

**ज्ञानसामान्यसामग्री ज्ञानं सञ्जनयेद् ध्रुवम् ।**
**कार्यस्योपार्जिकामेव यत्सामग्रीं विदुर्बुधाः ॥ ४५५ ॥**

ज्ञानधर्मत्वाविशेषेऽपि प्रमात्वोत्पत्तिरुत्सर्गतः, अप्रमात्वस्य त्वपवादादित्यत्र नियामकं वक्तुमुपक्रमते **ज्ञानेत्यादिना** । अयमिहाभिसन्धिः । ज्ञानसामान्यसामग्रीतः प्रमोत्पत्तिमनङ्गीकुर्वाणः प्रष्टव्यो जायते । किं ज्ञानसामान्यसामग्री ज्ञानं न जनयतीति मतम् । उत जातमपि ज्ञानं निर्विषयकमिति । यद्वा ज्ञेयं विषयीकुर्वदपि तदवृत्तिधर्मप्रकारेण विषयीकरोतीति विकल्पान् हृदि निधाय प्रसक्ततदितरपक्षप्रतिषेधपूर्वकं परिशेषतः स्वतस्त्वं साधयति षड्भिः श्लोकैः । तत्र न तावदाद्यः । सामग्र्याः कार्याजकत्वनियमस्य ज्ञानिसंमतत्वादित्याह **कार्येति** ॥ ४५५ ॥

**ज्ञानं च ज्ञेयसापेक्षं ज्ञेयं चास्ति यथा यथा ।**
**तथैव विषयीकुर्यात्स्वयोग्यं सति साधने ॥ ४५६ ॥**

न द्वितीयः । ज्ञानस्य ज्ञेयसापेक्षत्वस्वाभाव्यात् । न तृतीयः । ज्ञेयावृत्तिधर्मस्य ज्ञानकरणग्राह्यत्वायोग्यतया तद्वृत्तिधर्मस्यैव विषयीकरणात् इति । तदाह **तथैवेति** । तत्र निमित्तमाह **सति साधन इति** । निर्दोषसाधन इत्यर्थः । दोषसद्भावे परं, करणं ज्ञेयावृत्तिधर्मं स्वायोग्यमप्यसन्निकृष्टं दोषवशाद्विषयीकुर्यात् । तदभावे तु ज्ञेयवृत्तिधर्ममेव सन्निकृष्टतया विषयीकुर्यात् । करणे दोषस्यैवासन्निकृष्टार्थग्रहोपयुक्तशक्त्यन्तराधायकत्वादिति भावः ॥ ४५६ ॥

**घटोऽयमिति हि ज्ञाने चक्षुषा च घटेन च ।**
**तत्संसर्गेणैव चालमेवमेव स्थलान्तरे ॥ ४५७ ॥**

तदेव विशदयति **घटोऽयमिति** ॥ ज्ञाने जननीय इति शेषः । निमित्तसप्तमी वा । चक्षुः, घटः, तयोः संसर्गः, इति एतैस्त्रिभिरेवालम् । न तदतिरिक्तमपेक्षितम् । तत्रापि चक्षुः साधनं, संसर्गोऽवान्तरव्यापारः । घटस्तु संसर्गेणान्यथासिद्धो न कारणमिति विवेक्तव्यम् । 'यज्जातीयानन्तरं

**नियमेन** कार्योत्पत्तिस्तदत्र साधनं विवक्षितमि'ति पद्धत्युक्तरीत्या अर्थसन्निकृष्टं चक्षूरूपं साधनं स्वकार्यस्य अयं घट इति ज्ञानस्य जनने किमप्यतिरिक्तं कारणं सहकारितया नापेक्षते । दोषाभावस्तु प्रतिबन्धकाभावरूपो न कारणमिति प्रसिद्धमेव । तदिदमाह **अलमिति** ॥ उक्तं नियमं सर्वत्रातिदिशति **एवमेवेति** ॥ इदमुक्तं भवति । अयं घट इति ज्ञाने, घटः घटत्वं, तद्वैशिष्ट्यं चेति खलु त्रीणि विषयाः । त्रीण्यपि चक्षुस्सन्निकृष्टान्येव । अतः तज्ज्ञानजनने औत्सर्गिकशक्तिमतश्चक्षुषो नातिरिक्तकारणापेक्षेति ॥ ४५७ ॥

**सेयं ज्ञानस्य सामान्यसामग्री सा च धीः प्रमा ।**
**तन्न प्रमाऽऽख्यबोधस्य साधनेऽन्यानुधावनम् ॥ ४५८ ॥**

अस्त्वेवं ज्ञानजनने । प्रमाजनने त्वतिरिक्तकारणापेक्षा भवेत् । तथा च न स्वतस्त्वसिद्धिरित्यत आह **सा चेति** । स्यादेतदेवम् यदि घटज्ञानघटप्रमयोराकारौ भिन्नौ स्याताम् । नैतदस्ति । उभयोरपि, अयं घटः इति, घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वलक्षण एक एवाकारः । अतस्तयोः सामग्रीभेदकल्पनं निर्मूलमिति परिशेषतः स्वतस्त्वसिद्धिरित्याह **तन्नेति** ॥ ४५८ ॥

**गोवत्सजनने गोभिर्गोवृषैरेव पूर्यते ।**
**विजातीयस्य वत्सस्य तत्सदृक्षोऽपरोऽपि च ॥ ४५९ ॥**
**महिषो वा पिशाचो वा कश्चिन्निश्चीयते यतः ।**
**अतस्स्वयोग्यार्थबोधे चक्षुषाऽन्यन्न मान्यते ॥ ४६० ॥**

औत्सर्गिककार्यजनने नातिरिक्तापेक्षा साधनानामित्येतद्दृष्टान्तोक्त्या द्रढयति **गोवत्सेति** । अत्र **गौः** साधनं चक्षुः । **वृषसंसर्गः** अर्थसंसर्गोऽवान्तरव्यापारः । **गोवत्सः** प्रामाण्यमिति विवेकः । ज्ञानप्रमयोः सजातीयत्वं च पूर्वोक्तदिशा तद्वद्विशेष्यकत्वेन । घटत्वाभाववद्विशेष्यिका त्वप्रमा

अयं घट इति ज्ञानेन घटवद्विशेष्यकेण न सजातीया । विजातीयस्य अप्रामाण्यस्य जननेऽतिरिक्तस्य दोषरूपकारणस्यापेक्षा नियता । अत्रापि दृष्टान्तमाह **विजातीयस्येति** । अत्र **वत्सः** अप्रामाण्यम् । महिषपिशाचादि-र्दोषस्थानीय इति विवेक्तव्यम् । निगमयति **अत इति** ॥ **अन्यत्** अतिरिक्तं कारणम् । तथा च परिशेषात्स्वतस्त्वसिद्धिः । अयमत्र प्रयोगोऽभिप्रेतः । अनित्ययथार्थज्ञानत्वं अनित्यज्ञानत्वानवच्छिन्नकार्यताऽनवच्छेदकं अनित्यज्ञाना-वृत्तित्वरहितत्वात् ज्ञानत्ववदिति । विस्तरस्तर्कताण्डवे ॥ ४५९ ॥ ४६० ॥

**स्वायोग्यविपरीतार्थधीषु दोषोऽप्यपेक्ष्यते ॥ ४६१ ॥**

अप्रामाण्यस्य परतस्त्वं हेतूक्त्या निरूपयति **स्वायोग्येति** । भ्रमे प्रकारीभूतधर्मवैशिष्ट्यं विशेष्ये भासते । तच्चासत्त्वान्न चक्षुस्सन्निकर्षयोग्यम् । तद्विषयीकरणे दोषापेक्षा नियतेति भावः । तदुक्तं तर्कताण्डवे 'भ्रमेऽर्थस्या-सत्त्वेन सन्निकर्षासम्भवेन तत्स्थानीयस्य दोषस्यावश्यकत्वात् । पित्तादिदोषेण भ्रमोत्कर्षदर्शनात् । अनन्यथासिद्धान्वयव्यतिरेकित्वाच्चाप्रमायां दोषो हेतुरिति अप्रामाण्यं परत एवे'ति ॥ ४६१ ॥

**इन्द्रियस्यार्थसंबन्धो ज्ञानसामान्यकारणम् ।**
**यच्चक्षुश्शुक्तिसंयोगि सा च रूप्योपमा रुचा ।**
**प्रतीत्या व्यवहृत्या चारोप्यं रूप्योपमं किल ॥ ४६२ ॥**

ननु यदुक्तं ज्ञानसामान्यसामग्री प्रमासामग्री चैकरूपैवेति न तद्युक्तम् । तथा सति भ्रमस्यापि ज्ञानविशेषत्वेन भ्रमप्रमासामग्र्योरेकरूपत्व-मुक्तं स्यात् । तच्च न संभवति । इदं रजतं इति भ्रमस्थले विशेषणेन रजतेन सन्निकर्षो नास्ति । तस्यासत्त्वेन सन्निकर्षानुपपत्तेः । प्रमायां तु रजतेनापि सन्निकर्षः । तस्य सत्त्वेन तत्संभवात् । एवं च न सामग्र्योरेक-रूपतेति शङ्कां निराह **इन्द्रियस्येति** । स्यादेतदेवं यदि सन्निकर्षशब्देन

**संयोगादिरेव** विवक्षितः स्यात् । नैतदस्ति । किन्तु प्रत्यासत्तिमात्रम् । तच्चोभयत्र सममिति वक्तुं भ्रमे चक्षुषो रजतस्य च प्रत्यासत्तिमुपपादयति **यदिति** । **यत्** यस्मात् **सा च** शुक्तिः । **रूप्योपमा** रजतसदृशी । प्रधानेन रजतेन सादृश्योपेता । आरोप्यं रजतं च रूप्योपमम् । प्रधानरजतसदृशम् । प्रधाने आरोप्ये चेत्युभयत्र रजतमिति प्रतीतेर्व्यवहारस्य च सामान्यात् । तथा च चक्षुषो भ्रमप्रतीतरजतस्य च स्वसंयुक्ताधिष्ठानभूतशुक्तिसदृशप्रधानभूतरजतसादृश्यरूपप्रत्यासत्तिरविकलेति नोक्तानुपपत्तिः ॥ ४६२ ॥

**इत्थं रूप्यभ्रमस्तस्यां मष्यादेर्न भ्रमोऽत्र तत् ॥ ४६३ ॥**

'न हि सत्यशुक्तेः सत्यरजतस्य तयोः सादृश्यस्य चाभावे भ्रान्तिर्भवती'ति तत्वनिर्णयोक्तां सादृश्यस्यावश्यकतां विपक्षे बाधकोपदर्शनेन द्रढयति **इत्थमिति** । इमावत्रातिप्रसङ्गावभिप्रेतौ । यदि प्रधानमधिष्ठानसदृशं न स्यात् तदाऽधिष्ठानदर्शनानन्तरं संस्कारोद्बोधकोपायाभावेन प्रधानस्मृतिर्न स्यात् । सादृश्यस्यैव संस्कारोद्बोधहेतुत्वात् । तदनङ्गीकारे विसदृशमषीखण्डस्यापि स्मरणं स्यात् । न च तदस्ति । अतोऽधिष्ठानप्रधानयोः सादृश्यमावश्यकमिति । यद्यधिष्ठानप्रधानयोरारोपितेन सादृश्यं न स्यात् तर्हि अधिष्ठानप्रधानयोरभेदग्रहलक्षण आरोप एव न सिद्ध्येदिति रजतस्यारोपितत्वमेव न स्यात् । न हि दोषोऽपि विसदृशयोः शुक्तिमषीखण्डयोरभेदग्रहजननस्येष्टे । अत **इत्थं** उक्तसादृश्यमावश्यकमिति । ननु आरोप्यस्यात्यन्तासत्त्वेन निर्धर्मकत्वात्कथं तत्सादृश्यमधिष्ठानप्रधानयोरिति चेन्न । आरोप्यस्य किञ्चित्प्रतियोगिकसादृश्यानाश्रयत्वेऽपि किञ्चिन्निष्ठसादृश्यप्रतियोगित्वाङ्गीकारात्तस्य च रूप्यादिवद्धर्मिसत्तासापेक्षत्वाभावात् । एवं न तद्गतभूयोधर्मवत्त्वं तत्सादृश्यं किन्तु 'सादृश्यं हि पदार्थान्तरमि'ति सुधोक्तरीत्याऽखण्डधर्म एव । अतो न कश्चित्क्षुद्रोपद्रव इति ॥ ४६३ ॥

**चक्षुस्थपीतपित्तेन योगाच्छङ्खेऽपि पीतधीः ।**
**अतः पारम्पर्यतोऽर्थसंबन्धोऽस्ति भ्रमेऽपि च ॥ ४६४ ॥**

भ्रमो द्विविधः सोपाधिको निरुपाधिकश्चेति । सोपाधिकः उपाधिनिमित्तको विशेषदर्शनानिवर्त्यः शङ्खः पीत इत्यादिः । तत्र चक्षुर्गतपित्तपीतिमोपाधिः । निरुपाधिकः इदं रजतमित्यादिः । एतावता निरुपाधिकभ्रमे आरोपितेन चक्षुषः प्रत्यासत्तिरुपपादिता । इदानीं सोपाधिकभ्रमेऽपि तां दर्शयति **चक्षुःस्थेति** । अत्रारोपितः पीतिमा । चक्षुर्गतं पीतिमोपेतं पित्तद्रव्यं रश्मिद्वारा शङ्खेन संबध्यते । वस्तुगत्या पित्तद्रव्यगतः पीतिमा तत्सम्बद्धे शङ्खे आरोप्यते । तथा च चक्षुस्संयुक्तशङ्खसंबद्धपित्तद्रव्यवृत्तित्वमेव चक्षुःपीतिम्नोः प्रत्यासत्तिरिति भावः । तथा च विशेषणप्रत्यासत्तिरपि प्रमायामिव भ्रममात्रसाधारणीति भावः ॥ ४६४ ॥

**सादृश्यं सदृशान्यार्थज्ञापनाय स्वयं पटु ।**
**तदेकत्वज्ञापनाय दोषाऽऽश्लेषमपेक्षते ॥ ४६५ ॥**
**अतोऽन्यस्यान्यताबोधे दोषोऽप्यन्विष्यते बुधैः ।**
**अत्यन्तमसतोऽर्थस्य सत्ताधीः कथमन्यथा ॥ ४६६ ॥**

नन्वेवं सादृश्येनासन्निकृष्टस्य प्रधानभूतस्य रजतस्योपस्थितिरित्युक्तम् । तर्हि तेनैव भ्रमनिर्वाहे दोषस्य कोपयोगः । येनाप्रामाण्यस्य परतस्त्वं सिध्येदित्यत आह **सादृश्यमिति** । स्वयं दोषनिरपेक्षम् । अपेक्षते चक्षुरिति शेषः । तच्च कर्तृवाचकम् । इदमुक्तं भवति । सत्यमेवं सादृश्येनैव प्रधानस्योपस्थितिरिति । न तावन्मात्रेण भ्रमः । इयं शुक्तिरिति प्रमास्थलेऽपि रजतोपस्थितिसम्भवात् । किं नामाधिष्ठानप्रधानयोरभेदस्यात्यन्तासतो विद्यमानत्वेन ज्ञानमेव भ्रमः । न च तद्दोषं विना सम्भवतीति भ्रमस्य नियमेन दोषापेक्षत्वात् परतस्त्वमेवेति ॥ ४६५ ॥ ४६६ ॥

**विशेषणाभेदबोधे विशेष्येन्द्रियसङ्गमः ।**
**प्रमास्वलं मे सामान्यसामग्री सा भ्रमेऽपि यत् ॥ ४६७ ॥**

एवं विशेषणविशेष्योभयसन्निकर्षः इन्द्रियस्य ज्ञानसामान्यसामग्रीत्युपेत्य भ्रमेऽपि विशेषणेन परम्परया सादृश्योपाधिकः सन्निकर्ष उपपादितः । इदानीं तादात्म्यप्रमायां घटोऽयमित्यादिरूपायां विशेष्यविशेषणयोरभेदेन विशेष्येन्द्रियसन्निकर्ष एव सामग्री । सैव भ्रमसाधारण्याज्ज्ञानसामान्यसामग्रीति वर्णनेन एवमपि प्रमाया ज्ञानसामान्यसामग्रीजन्यत्वं निराबाधमिति तत्स्वतस्त्वं प्रकारान्तरेण निरूपयति **विशेषणेति** ॥ ४६७ ॥

**अतो घटोऽयमित्याद्या घटाद्यैक्यप्रमा मम ।**
**साक्षात्कारेज्ञानहेतुमात्रजन्याऽखिलाभवत् ॥ ४६८ ॥**
**भ्रमे विशेष्यशुक्त्यक्षिसंयोगोऽस्ति विशेषणम् ।**
**रजतं तु न तत्सङ्गि भिन्नत्वात्तन्न तस्य धीः ॥ ४६९ ॥**

साक्षात्कारश्च तज्ज्ञानं चेति विग्रहः । अयं घट इति प्रमायां इदंपदार्थो विशेष्यः । घटो विशेषणम् । उभयोरभेदेन विशेष्येन्द्रियसन्निकर्षातिरिक्तो न विशेषणेन्द्रियसन्निकर्षो नामास्ति । इदं रजतमिति भ्रमे तु विशेष्यादिदंपदार्थाद्विशेषणंरजतं भिन्नम् । तेन विशेषणेन्द्रियसंयोगोऽपि पृथगपेक्षितः । **तत्** तस्मात् । **तस्य** रजतस्य । **न धीः** । उरत्तश्लोकस्थभवेदित्यनेनान्वयः ॥ ४६८ ॥ ४६९ ॥

**प्रमायां क्लृप्तसामान्यसामग्रीमात्रतो भवेत् ।**
**असन्निकृष्टतद्दृष्ट्यै दोषोऽप्येष्टव्य एव हि ॥ ४७० ॥**

**क्लृप्तेति** । विशेष्येन्द्रियसन्निकर्षरूपादित्यर्थः । **असन्निकृष्टेति** असत्त्वाच्चक्षुस्संयोगायोग्येत्यर्थः । **तद्दृष्ट्यै** रजतोल्लेखिज्ञानाय। **दोषोऽपीति** । तथा च अप्रमायाः परतस्त्वं अस्मिन्नपि प्रकारे निष्प्रत्यूहमित्यर्थः ॥ ४७० ॥

**विशेषणस्य भेदेऽक्ष्णा तत्संसर्गोऽप्यपेक्ष्यते ।**
**साऽपि सामान्यसामग्री यद्भ्रमेऽप्यस्ति तादृशि ॥ ४७१ ॥**

एवं विशेषणतादात्म्यप्रमायां स्वतस्त्वं, तादृशभ्रमे परतस्त्वं च व्युत्पाद्य विशेषणसंसर्गप्रमायां तादृशभ्रमे च ते उपपादयति **विशेषणस्येति** । **तत्संसर्गः** विशेषणसंसर्गः । अपिशब्दो विशेष्येन्द्रियसंसर्गसमुच्चये । **साऽपि** उभयसंसर्गरूपाऽपि । **सामान्यसामग्री** ज्ञानसामान्यसामग्री । **यत्** यस्मात् । **तादृशि** । सप्तम्यन्तम् तथाविधे । **भ्रमे** विशेषणसंसर्गभ्रमे ॥ ४७१ ॥

**वस्तुतः काकिनि गृहे काककोकिलवत्तयोः ।**
**प्रमायां च भ्रमे चाक्ष्णः किं न काकगृहान्वयः ॥ ४७२ ॥**

काकवद्गृहमिति प्रमा । तत्रैव कोकिलवदिति भ्रमः । तयोः । प्रमायां च भ्रमे च प्रमाभ्रमयोः । काककोकिलवत्तयोरित्यनेनान्वयः । **काकगृहान्वयः** विशेषणविशेष्ययोरुभयोः चक्षुस्संसर्गः । तथा च स एव ज्ञानसामान्यसामग्रीति तन्मात्रजन्यत्वात्प्रामाण्यस्वतस्त्वसिद्धिरिति भावः । ॥ ४७२ ॥

**तत्रापि कोकिलोऽसङ्गी तद्भ्रान्तिर्दोषजैव तत् ।**
**अतश्चोक्तं समस्तं च तत्त्वमासीदनाकुलम् ॥ ४७३ ॥**

**तत्रापि** कोकिलवद्गृहमिति भ्रमेऽपि । **असङ्गी** । असत्त्वात्संयोगायोग्यः । **तत्** तस्मात् । **दोषजैवेति** । अविद्यमानकोकिलोपस्थित्यर्थं दोषो नियमेनापेक्षित इत्यर्थः । तथा चाप्रामाण्यस्य परतस्त्वसिद्धिरिति भावः । उपसंहरति **अत इति** ॥ ४७३ ॥

**यथा घटादिकार्येषु दण्डत्वेनैव लाघवात् ।**
**हेतुता दण्डदार्ढ्यादि, त्ववच्छेदकमेव ते ॥ ४७४ ॥**

दोषाभावस्य प्रमां प्रति न कारणत्वं अन्यथासिद्धेः व्यभिचाराच्चेति वक्तुमादौ अन्यथासिद्धिं पराङ्गीकृतन्यायेन व्युत्पादयति **यथेति** । दण्डस्येति शेषः । ते इत्यनेनास्य न्यायस्य पराङ्गीकृतत्वप्रसिद्धिं द्योतयति । तदुक्तं मणौ 'येन सहैव यस्य पूर्ववृत्तित्वमवगम्यते तत्तेनान्यथासिद्धमि'ति ॥ ४७४ ॥

**तथा चक्षुश्च चक्षुष्ट्वेनैव हेतुर्लघुत्वतः ।**
**अदुष्टत्वं तु तन्निष्ठमवच्छेदकमस्तु मे ॥ ४७५ ॥**

दार्ष्टान्तिके योजयति **तथेति** । तदुक्तं तर्कताण्डवे प्रमायां दोषाभावस्य हेतुत्वभङ्गे 'क्लृप्तकारणं चक्षुरादिकमादायैव दोषाभावस्य प्रमां प्रति नियतपूर्वभावित्वग्रहणेन दण्डत्ववद्दण्डगतदार्ढ्यवत् – – – चक्षुरादिनिष्ठकारणतावच्छेदकत्वमात्रेणान्वयव्यतिरेकयोरुपपत्तौ दोषाभावे कारणतायाः दोषाभावत्वे कारणतावच्छेदकतायाश्च कल्पने गौरवादि'ति । अस्तु मे इत्यनेन इदं सूचयति । 'अदुष्टमिन्द्रियं त्वक्षं' इत्यादौ ब्रह्मतर्केऽन्यत्र च यत्र दोषाभावस्य लक्षणशरीरे प्रवेशस्तत्रापि न तस्य प्रमां प्रति कारणत्वमभिप्रेतम् किन्तु कारणतावच्छेदकप्रतिबन्धकाभावादिसाधारणं प्रयोजकत्वमात्रम् । अन्यथा 'दोषाभावोऽपि न कारणमि'ति तत्त्वनिर्णयटीकया 'तर्हि दोषाभावः कारणमित्यायातमिति चेन्न । तथा सति उत्सर्गापवादयोः क्वाप्यभावप्रसङ्गात्' इति सुधया च विरोधापत्तेः । 'दोषाभावस्य कारणत्वेन च नास्माकमनिष्टम् । तावता वेदापौरुषेयत्वाव्याघातादि'ति भाष्यटीकाऽपि प्रयोजकत्वाभिप्रायेणैव नेया इति ॥ ४७५ ॥

**अभावगुणजाऽप्येवं या न सा न गुणान्तरात् ॥ ४७६ ॥**

प्रयोजकत्वोक्तेः प्रकृतोपयोगमाह **अभावेति** ॥ या सा इति प्रमापरामर्शः । गुणान्तरात् उत्पन्नेति शेषः ॥ ४७६ ॥

**भ्रमे त्वत्यन्तासतोऽपि सत्ताया बोधसाधने ।**
**दोषस्य हेतुताऽवश्यं वाच्या तत्परतोऽप्रमा ॥ ४७७ ॥**

'अत्यन्तमसतोऽर्थस्य सत्ताधीः कथमन्यथा' इति हेतुपुरस्सरं प्राग्व्युत्पादितमप्रामाण्यस्य परतस्त्वं स्मारयति **भ्रमेत्विति** ॥ ४७७ ॥

**यद्वा चक्षुः प्रमाहेतुर्दोषस्तु प्रतिबन्धकः ।**
**प्रतिबन्धस्य चाभावो न हेतुरिति साधितम् ॥ ४७८ ॥**

कारणताऽवच्छेदकत्वोक्त्याऽन्यथासिद्धिं व्युत्पाद्य प्रकारान्तरेणापि दोषाभावस्यान्यथासिद्धिं वर्णयति **यद्वेति** । प्रमाहेतुः उत्सर्गतः । **साधितमिति** 'अतो न कारणीभूताभावस्य प्रतियोगिता' इत्यादिना प्राक् । ननु परनिरूपितान्यथासिद्धिविभागेषु अयं प्रतिबन्धकाभावलक्षणोऽन्यथासिद्धिप्रकारो नान्तर्भवतीति चेत् मा भूत् । नायं अन्यथासिद्धशब्दो यौगिक इति परोऽपि मन्यते । आत्माश्रयापत्तेः । किं नाम लोकव्यवहारानुसारेण पारिभाषिक इत्येव । तथा च दण्डत्वादौ लौकिकानां कारणत्वव्यवहाराभावेन तत्र यथाऽन्यथासिद्धिः परिभाषिता तथा प्रतिबन्धकाभावेऽपि तथा व्यवहाराभावेनान्यैवान्यथासिद्धिः औत्सर्गिककार्यापवादकनिरासकत्वरूपा परिभाष्यतामिति यत्किञ्चिदेतत् ॥ ४७८ ॥

**यादृच्छिकार्थनिर्बाधबोधेऽस्मिन्दृष्टिलिङ्गजे ।**
**व्यभिचारात्प्रमाहेतुर्दोषाभावो न कुत्रचित् ॥ ४७९ ॥**
**गुणान्तरं च सल्लिङ्गपरामर्शादिशब्दितम् ।**
**यतोऽत्रैव न तच्चातो न प्रमाकारणं क्वचित् ॥ ४८० ॥**

एवं प्रकारद्वयेनान्यथासिद्धिं निरूप्य दोषाभावस्य गुणस्य च कारणत्वं व्यभिचारनिरूपणेनापि प्रत्याचष्टे **यादृच्छिकेति** । अर्थस्य निर्बाधबोधः

प्रमा । अस्मिन्निति प्रागुक्तधूमभ्रमादिनिदर्शनानि परामृशति । दृष्टीत्यनेन मणिप्रभायां मणिभ्रम उदाहर्तव्यः । यादृच्छिकेत्युपलक्षणम् । नियमेन प्रमास्वपि दोषाभावप्रमयोर्व्यभिचारो ध्येयः । यथोक्तं तर्कताण्डवे 'किञ्च करादौ चरणादिभ्रमजन्ये संशयानन्तरभाविनि नियमेन प्रमारूपे पुरुषसाक्षात्कारे विशेषप्रमारूपस्य, वह्न्यालोके धूमभ्रमजन्यायां नियमेन प्रमायामनुमितौ यथार्थलिङ्गपरामर्शरूपस्य, भ्रान्तविप्रलम्भकवाक्यजन्यायां नियमेन प्रमायां शाब्दप्रतीतौ यथार्थवाक्यार्थज्ञानरूपगुणस्याभावेऽपि प्रमात्वदर्शनेन व्यतिरेकव्यभिचारोऽपी'ति । अत्र गुणस्येत्युपलक्षणम् । दोषाभावस्येत्यपि विभाव्यम् । अत्रैव उक्तनिदर्शनेष्वेव ॥ ४७९ ॥ ४८० ॥

**तस्माद्द्विरूपज्ञानस्य सामग्री च द्विरूपिणी ।**
**सामान्या प्रायिके ज्ञाने यतस्सर्वत्र सर्वदा ॥ ४८१ ॥**

**प्रमैव प्रायशो नृणां काचित्के तु ततोऽपरा ।**
**काचादिदोषजा भ्रान्तिर्न हि सर्वस्य सर्वदा ॥ ४८२ ॥**

तार्किका ज्ञानसामान्यसामग्री प्रमासामग्री भ्रमसामग्री चेति त्रिरूपां सामग्रीमाहुः । तदयुक्तम् । ज्ञानसामान्यसामग्रीप्रमासामग्र्योरभेदस्य समर्थितत्वेन द्विरूपैव सामग्रीत्याह **द्विरूपेति** । हेतुगर्भं विशेषणम् । प्रमा भ्रमश्चेति ज्ञानं द्विरूपमेव । अतः तत्सामग्र्या अपि द्विरूपत्वमेव । उपपादयति **सामान्येति** । **प्रायिके** उत्सर्गतो जायमाने । **ज्ञाने** प्रमारूपे । सामान्या ज्ञानसामान्यसामग्री एव हेतुः । न हि वेत्रबीजेनोत्सर्गतो जायमाने वेत्राङ्कुरेऽतिरिक्तहेत्वपेक्षाऽस्तीति भावः । काचित्केऽपवादेन कदलीकाण्डजनन एव दावदहनस्यातिरिक्तस्य हेतुत्वम् । प्रमाया औत्सर्गिकत्वं सर्वानुभवसिद्धमित्याह **प्रमैवेति** । नृणामित्युपलक्षणम् प्राणिमात्राणामिति ध्येयम् । अपवादस्य काचित्कत्वमभिनीय दर्शयति **काचेति** । करणानां

प्रामाण्यजननशक्तेः सहजत्वं अप्रामाण्यजननशक्तेरन्याहितत्वमित्येतावन्मात्रेण स्वतस्त्वपरतस्त्वविभाग इति निष्कर्षः ॥ ४८१ ॥ ४८२ ॥

**उत्पत्तावपि च ज्ञप्तौ तस्मात्सद्भिरुदीरितम् ।**
**स्वतस्त्वं परतस्त्वं च तत्वं विस्त्वस्य साधकम् ॥ ४८३ ॥**

निगमयति **उत्पत्ताविति** । सद्भिः विस्त्वस्य चेत्युक्त्या उक्तं तस्त्वमनङ्गीकुर्वाणाः असन्तः अज्ञानिनश्चेत्यभिप्रैति ॥ ४८३ ॥

**विमता सन्निकृष्टापूर्वार्थादोषजदृष्टिदृक् ।**
**ज्ञानप्रामाण्यार्थसत्त्वोल्लेखेन नियता मता  ॥ ४८४ ॥**

दोषाद्यप्रतिरुद्धेनेत्यादिना प्राक् ज्ञानप्रामाण्यस्य स्वतस्त्वं निरुक्तम् । तदिदानीं अनुमानेन साधयति । **विमतेति** । अत्र श्लोकद्वयेन संक्षिप्योक्तस्य प्रयोगस्य परिष्कारस्तर्कताण्डवे 'स्वतस्त्वेऽनुमानानि' इति भङ्गे वर्णितदिशाऽनुसन्धेयः । तद्यथा– दोषशङ्काद्यकलङ्कितज्ञानस्यानुव्यवसायः सत्तया स्वग्राह्यज्ञानप्रामाण्यविषयकः तद्विरुद्धाविषयकत्वे सति तद्व्याप्यत्वाविषयकत्वे सति तत्संशयविरोधिप्रत्ययत्वात् प्रामाण्यानुमितिवत् इति । विमतेति प्रतिज्ञादोषनिराससूचनार्थम् । सन्निकृष्टेति अर्थविशेषणम् । एवमपूर्वेत्यपि । अदोषजेति दृष्टेर्विशेषणम् । दृक्शब्देनानुव्यवसायो ग्राह्यः । सन्निकृष्टेत्यनेनार्थगतदूरस्थत्वादिसर्वदोषराहित्यं उपलक्षितम् । अदोषजेत्यनेन तदितरसर्वदोषराहित्यम् । तथा च दुष्टकरणजन्यत्वशङ्का-तन्निश्चय-अप्रामाण्यादिशङ्का-तन्निश्चयाद्यनास्कन्दितत्वं दृष्टिरूपव्यवसायस्य ज्ञाप्यते । अनुव्यवसायत्वं च व्यवसायप्रकारप्रकारतया व्यवसायप्रकारवद्विशेष्यकतया च व्यवसायविषयकप्रत्यक्षत्वं वा ज्ञानांशे लौकिकप्रत्यक्षत्वं वेति पूर्वोक्तं ध्येयम् । **ज्ञानेति** । प्रामाण्यस्यानुव्यवसायेनोल्लेखो द्वेधा । ज्ञानं नदोषं चेत्प्रमाणमित्येवं संमुग्धाकारेण, प्रमाणं भवत्येवेत्येवं अर्थसत्तानिश्चयरूपेण चेति । अत्र द्वितीय एव साध्यत्वेनाभिमत इति भावः ॥ ४८४ ॥

**प्रामाण्यसंशयघ्नाप्रामाण्याग्राहिप्रमात्वतः ।**
**यथा तवानुमेत्युक्तस्वतस्त्वेऽस्त्यनुमाऽपि मे ॥ ४८५ ॥**

**संशयघ्नेति** । संशयविरोधीत्यर्थः । **अप्रामाण्याग्राहीति** । अत्र अप्रामाण्यपदेन प्रामाण्यविरोध्येव भण्यते इति स्वयमुत्तरश्लोके विशदयति । प्रामाण्यविरुद्धाविषयकेत्यर्थः । प्रामाण्यविरुद्धं च अप्रामाण्यं अप्रामाण्यव्याप्यं प्रामाण्याभावः तद्व्याप्यं चेति चतुष्टयम् । **यथा तव अनुमा** प्रामाण्यानुमितिः समर्थप्रवृत्त्यादिलिङ्गजन्या । सामान्यव्याप्तौ वह्निमत्त्वाविषयके तत्संशयविरोधिनि तद्व्याप्यतया धूमनिश्चये व्यभिचारवारणाय, प्रामाण्यव्याप्यत्वाविषयकत्वेति हेतुविशेषणमधिकं तर्कताण्डवे निवेशितम् । समानप्रकारकयोरेव निवर्त्यनिवर्तकभावमङ्गीकृत्यात्र तदनिवेशः । पक्षे विशेषणानुपादाने प्रतिबन्धदशायां बाधः । दृक्शब्देन अनुव्यवसायेत्यनुक्तौ शब्द-सामान्यप्रत्यासत्त्यादिजन्यं तादृशज्ञानविषयकज्ञानमादाय बाधः । अपूर्वेत्यनुक्तौ अभ्यासदशापन्नज्ञानानुव्यवसायमादाय सिद्धसाधनता । साध्ये सत्तयेत्यनुक्तौ प्राचीनतार्किकमते वैशिष्ट्यविषयकत्वस्यानुव्यवसायेऽभ्युपगमेन सिद्धसाधनता स्यात् । सत्तया तद्विषयकत्वं तु नाङ्गीकृतमिति न तद्दोषावकाशः । न चैवं नवीनतार्किकमते तद्व्यर्थम् । उद्देशसिद्ध्यर्थत्वात् । विशेषणत्वे प्रयोजनवत्त्वं तन्त्रम् । न तु व्यावर्त्यस्योभयसिद्धिः । हेतौ, तद्विरुद्धाविषयकेत्यनुक्तौ प्रामाण्यविरुद्धाप्रामाण्यनिश्चये तत्संशयविरोधीत्यनुक्तौ घटादिज्ञाने प्रत्ययेत्यनुक्तौ धर्म्यज्ञाने कोट्यस्मरणे च व्यभिचारः । अतः सर्वं सार्थकम् ॥ ४८५ ॥

**प्रामाण्यस्य विरोध्येवाप्रामाण्यं भण्यते यतः ।**
**तत्सा कुत्सितशङ्कां च हुङ्कारेणैव वारयेत् ॥ ४८६ ॥**

**कुत्सितशङ्कां** प्रामाण्याभावादिग्राह्यनुव्यवसाये व्यभिचारशङ्काम् । यथा चैतत्तथा विवृतं प्राक् ॥ ४८६ ॥

**जानामि घटमेवाहमित्याकृत्यैव कीर्त्यते ।**
**यत्सा तत्साधयेदेव कृत्स्नाऽपि ज्ञानमानताम् ॥ ४८७ ॥**

अप्रयोजकतां अनुकूलतर्कोक्त्या निराकरोति त्रिभिः । यदि उक्त-रूपोऽनुव्यवसायः सत्तया नियमेन प्रामाण्यविषयको न स्यात् तर्हि घटमेव घटत्वेन जानामि इत्येवार्थसत्तोल्लेखी न स्यात् । अत्र प्रामाण्यशब्दानुल्लेखेऽपि तदर्थस्य तद्वति तत्प्रकारकत्वरूपस्य प्रामाण्यस्योल्लेखात् । अस्ति चार्थसत्तो-ल्लेखोऽवधारणरूपः । अतः प्रामाण्यविषयकत्वमेष्टव्यमिति भावः ॥ ४८७ ॥

**दूरस्थे तु घटं जानामीति धीर्जायते परम् ।**
**न तु सावधृतिस्तत्र मानत्वावधृतिश्च न ॥ ४८८ ॥**

पूर्वोक्ततर्के आपाद्यापादकयोर्व्याप्तिं दृष्टान्तप्रदर्शनेन स्थिरीकरोति । **दूरस्थे त्विति** । तत्र प्रामाण्यावधारणाभावः तत एव अर्थसत्तावधारणा-भावश्चेति भावः ॥ ४८८ ॥

**व्यवहारस्य वैचित्र्ये कथं न ज्ञानचित्रता ।**
**अतोऽनुकूलस्तर्कोऽपि कर्कशीकुरुतेऽनुमाम् ॥ ४८९ ॥**

**व्यवहारस्येति** । अभिलपनरूपस्येत्यर्थः । **वैचित्र्ये** निरवधारण-सावधारणत्वरूपे । सतीति शेषः । कथमित्याक्षेपे । **ज्ञानेति** । विचित्र-व्यवहारहेतुभूतानुव्यवसायात्मकज्ञानेत्यर्थः । **चित्रता** प्रामाण्यस्य सत्तयाऽनु-ल्लेखित्व-तदुल्लेखित्वरूपा । अन्यथा कार्यवैचित्र्यस्याकस्मिकत्वप्रसङ्गो बाधकः । ॥ ४८९ ॥

**प्रमा न गुणतोजन्या ज्ञानत्वादप्रमा यथा ।**
**इत्युत्पत्तौ चानुमितिर्बाधाभावाद्भवेद्धि नः ॥ ४९० ॥**

ज्ञानप्रामाण्यस्योत्पत्तौ स्वतस्त्वेऽनुमानमाह **प्रमेति**। अनित्यप्रमेत्यर्थः। अन्यथेश्वरप्रमायां सिद्धसाधनतापत्तेः। **गुणेति** दोषाभावोऽप्युपलक्षणीयः। ज्ञानसामान्यसामग्र्यतिरिक्तकारणाजन्येति पर्यवसितम्। ज्ञानप्रमासामग्र्योरेकरूपता तु प्राक् साधिता। अतो न बाधशङ्काप्रसरोऽपि इत्याह **बाधाभावादिति**। प्रतिपक्षाभावाच्चेत्यपि ग्राह्यम् ॥ ४९० ॥

**दोषाभावोऽपि यद्दोषी कोऽसावत्र गुणो गुणी ॥ ४९१ ॥**

**दोषाभावोऽपि** स्वयं दोषविरोधी सन्नपि। **दोषी** व्यतिरेकव्यभिचारवान् औत्सर्गिककार्यापवादकविरोधित्वरूपान्यथासिद्धिमांश्च। **अत्र** प्रामाण्योत्पत्तौ। **गुणी** कारणत्वसाधकान्वयव्यतिरेकादिगुणवान्। दोषो दोषाभावश्चेति भावाभावरूपौ अतिविरोधिनौ। दोषो गुणश्चेति भावरूपौ न तथाऽतिविरोधिनौ। दोषाभावेऽपि दोषित्वं व्युत्पादितं स्वतस्त्ववादिना। तादृशशक्तिमतो मम गुणस्य दोषित्वव्युत्पादने को वा प्रयासो भवेदिति ध्वनिः। तथा च स्वतस्त्वसिद्धिर्निष्प्रत्यूहेति भावः ॥ ४९१ ॥

**विस्तरस्त्वस्य सर्वस्य मूलशास्त्रमहार्णवे।**
**द्रष्टव्यस्तत्तटस्थाणुमणिसंग्राहिणो वयम् ॥ ४९२ ॥**

विस्तरः परोपन्यस्तपरतस्त्वसाधकलिङ्गानां विशिष्यापाकरणं, करणप्रमाणानां उत्पत्तौ ज्ञप्तौ स्वतस्त्वविचार इत्यादिकः। **मूलशास्त्रेति** तत्त्वनिर्णयसुधादिकेत्यर्थः। सद्युक्तिप्रचुरस्यापि स्वग्रन्थस्याणुमणिनिभत्वोक्त्या मूलग्रन्थस्यापरिमितमणिगणोच्चरत्नाकरवैभवं ध्वनयति ॥ ४९२ ॥

**॥ प्रामाण्यवादः ॥**

**अत्र प्रतीतरजतस्यात्र सत्त्वं न बाधकात् ।**
**साधकाभावतश्चान्यत्रापि सत्ता न सेत्स्यति ॥ ४९३ ॥**

भ्रमस्वरूपं वैशेषिकादयोऽन्यथैव वर्णयन्ति । तद्दूषणेन स्वाभिमतं तत्स्वरूपं समर्थयति **अत्रेत्यादिना** । **अत्र** पुरोदेशे । **बाधकात्** 'असदेव रजतं प्रत्यभादित्युत्तरकालीनानुभवात् । शुक्तिरेवात्यन्तासद्रजतात्मना प्रतिभातीत्याचार्याः' इति पद्धतिप्रदर्शितबाधानुभवात् । अत्र 'असदेवे'त्यनेन, न देशान्तरे सत्, नापि ज्ञानस्वरूपं, नापि तात्कालिकमुत्पन्नं, नापि सदसद्विलक्षणं इति मतान्तरनिरासः सूचितो भवति । बाधकादित्युपलक्षणं साधकाभावतश्चेत्युत्तरत्रोक्तमत्राप्यनुकर्षणीयम् । न चेदं रजतमत्रास्तीति प्रतीतिरेव पुरोदेशे सत्त्वे मानमिति वाच्यम् । तस्या विषयसत्त्वावेदकत्वेऽपि बाधकसाक्ष्यनुभवपराहताया स्वविषयव्यवस्थापकत्वायोगात् । अन्यथाऽतिप्रसङ्गात् ॥ ४९३ ॥

**न ह्यत्र दृष्टं रजतमन्यत्रास्तीति धीर्नृणाम् ।**
**प्रतीतिरेव हि गतिस्तत्तदर्थव्यवस्थितौ ॥ ४९४ ॥**

देशान्तरे सदिति पक्षे बाधकमुक्त्वा साधकाभावमप्याह **न हीत्यादिना** ॥ **प्रतीतिरेवेति** । यथोक्तं 'भगवती संविदेव हि विषयसत्त्वोपगमे नः शरणमि'ति ॥ ४९४ ॥

**इन्द्रियस्यैव संबन्धाद्विशेषणविशेष्ययोः ।**
**द्वयोश्च धीर्भवेत्तत्र प्राग्विशेषणधीर्वृथा ॥ ४९५ ॥**

नन्वन्यत्र रजतं सदित्याकारकप्रतीतेरभावेऽपि इदं रजतमिति विशिष्टप्रतीतिरेव विशेषणस्य रजतस्यान्यत्र सत्तां गमयति । विशिष्टज्ञानं विशेषणज्ञानजन्यमिति नियमात् । न च विशेषणस्यासत्त्वे तज्ज्ञानं संभवति ।

सन्निकर्षासंभवात् । पुरोदेशे सत्त्वं तु प्रमाणबाधितम् । अतो विशिष्टप्रतीतिनिर्वाहायान्यत्र सत्त्वं स्वीकार्यमेवेति कथं तत्र साधकाभाव इत्यतः किमेष विशेषणज्ञानजन्यत्वनियमः प्रत्यक्ष एवोतानुमित्यादावपि । नाद्य इत्याह **इन्द्रियस्यैवेति** । दण्डपुरुषयोर्युगपदिन्द्रियसंबन्धे असंसर्गाग्रहे च सति विनैव दण्डज्ञानं दण्डीति ज्ञानोत्पादानुभवात् ॥ ४९५ ॥

**पूर्वं ज्ञातोऽप्यनुमितौ विशेष्यः पर्वतो यतः ।**
**प्राग्विशेषणधीरर्थसाक्षात्कारे वृथैव तत् ॥ ४९६ ॥**

नापि द्वितीय इत्याह **पूर्वमिति** । अनुमितेः पूर्वम् । **विशेष्यः** धर्मी । **विशेषणधीः** साध्यप्रसिद्धिः । तदुक्तमनुव्याख्याने । 'असिद्धसाधने दोषः को व्याप्तिर्यदि विद्यते' इति । इदमुपलक्षणम् । शाब्दबोधात्प्राक् पदार्थस्मृतिरपि नापेक्षितेत्यपि ग्राह्यम् । न हि व्याप्तिज्ञाने सति साध्योपस्थितिविलम्बेन अनुमितिविलम्बः दृष्टः । न वा शक्तिस्मृतौ सत्यां पदार्थोपस्थितिविलम्बेन शाब्दबोधविलम्बः । येन तयोः कारणत्वापत्त्या विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वं कल्प्येतेति भावः ॥ ४९६ ॥

**व्याप्तिज्ञानाय वह्न्यादेर्व्यापकत्वेन धीः पुरा ।**
**अपेक्ष्यते परं साध्यवैशिष्ट्ये धीर्न सिद्धधीः ॥ ४९७ ॥**

ननु व्याप्तिरूपसंबन्धज्ञानार्थमेव संबन्धिभूतसाध्योपस्थितिः, एवं शक्तिस्मरणार्थं पदार्थस्मृतिश्च अपेक्षिते एवेत्यतः तावतापि तयोर्हेतुहेतुत्वेनान्यथासिद्धत्वान्नानुमित्यादिहेतुता सेत्स्यतीत्याह **व्याप्तीति** । यदि नाम प्रागनुमितेः पक्षसाध्ययोर्वैशिष्ट्यं सिद्धं स्यात्तर्हि सिद्धसाधनताऽऽपत्त्याऽनुमानवैफल्यमेव स्यादित्याह **सिद्धधीः इति** । सिद्धसाधनत्वेन प्रतिज्ञाऽसङ्गतिर्दोषः प्राप्नुयादिति भावः ॥ ४९७ ॥

**असन्निकृष्टदृष्टिं च यो दोषस्साधयेद्भ्रमे ।**
**स तस्याज्ञाततामात्रान्न बिभेतीति मे मतिः ॥ ४९८ ॥**

यच्चोक्तं विशेषणस्यासत्त्वे सन्निकर्षायोगात्तत्सत्त्वं स्वीकर्तव्यमिति तन्निराह **असन्निकृष्टेति** । सन्निकर्षस्थानीयो दोषोऽसन्तमप्यर्थमुपस्थापयतीति न तदर्थं विशेषणस्य सत्त्वाङ्गीकारो युक्त इति भावः । **सः** असतोऽसन्निकृष्टस्याप्यर्थस्य रजतादेरुपस्थापनसमर्थः । **अज्ञाततामात्रात्** पूर्वं ज्ञानाभावमात्रात् । **न बिभेतीतीति** । अयमाशयः । रजतस्यासत्त्वे द्वे अनुपपत्ती परेणाशङ्किते । सन्निकर्षायोगेन विशेषणस्य रजतस्य ज्ञानस्यैवानुपपत्तिरिति एका । तदभावे च विशेषणज्ञानरूपकारणाभावेन विशिष्टज्ञानोत्पादानुपपत्तिरिति द्वितीया । तत्राद्या सदला । प्रमायां सन्निकर्षस्य कारणत्वस्य क्लृप्तत्वात् । भ्रमस्थले दोषस्य सन्निकर्षस्थानीयत्वोक्त्या सा परिहृता । द्वितीया तु निर्दला । विशिष्टज्ञानं प्रति विशेषणज्ञानं कारणमित्यस्य प्रमायामप्यक्लृप्तत्वेन तदभ्युपगमेन कृताया विशिष्टज्ञानोत्पादानुपपत्तिशङ्काया गर्भस्रावेणैव निरस्ततया न तन्निरासाय कोऽप्यायास इति ॥ ४९८ ॥

**सर्वत्राप्यसतो ज्ञानं यदि चैकत्र नेष्यते ।**
**तर्हि तत्रासतो ज्ञानं कथं तत्रेति चिन्त्यताम् ।**
**दोषाच्चेत्तद्बलादेव सर्वत्राप्यसतोऽस्तु धीः ॥ ४९९ ॥**

**सर्वत्राप्यसतः** अत्यन्तासतः । **नेष्यते** सन्निकर्षाभावादिति भावः । **तर्हि** तत एव हेतोः । **तत्र** पुरोवृत्तिदेशे । **कथं** केन निमित्तेन । चोद्यप्रतिचोद्ययोः साम्यमुक्त्वा परिहारस्यापि तदाह **दोषादिति** । तथा च, 'यत्रोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे' इति न्यायात् अत्यन्तासतः कथं प्रतीतिरिति पर्यनुयोग एवायुक्त इति भावः ॥ ४९९ ॥

**असत्प्रतीतौ मानं च प्रतीतिरियमेव नः ।**
**अत्र प्रतीतं यन्मूर्तमिदं नान्यत्र नात्र च ॥ ५०० ॥**

**इयमेव** इदं रजतमित्यादिरूपैव । इदं च रजतं च तत्तादात्म्यं चेति त्रितयं खल्वत्र प्रतीतावभासते । तत्रेदङ्कारास्पदं रजतं चोभे सती तादात्म्यमात्रमसदिति तव सिद्धान्तः । तथा च रजतस्यासत्त्वाभावान्नेयं प्रतीतिरसत्प्रतीतिविषये मानमिति च । अत्र विचारणीयम् । किं रजतस्य सर्वत्र सत्त्वमिति पक्षः उत पुरोदेशे आहोस्विदन्यत्र देशान्तरे । न तावदाद्य इत्याह **मूर्तमिति** । न द्वितीय इत्याह **नात्रेति** । बाधानुभवविरोधादित्याशयः । अत एव न तृतीयोऽपीत्याह **नान्यत्रेति** । अत्यन्तासदेव रजतं प्रत्यभादिति बाधानुभवस्तस्यात्रेवाऽन्यत्रापि सत्त्वं प्रतिक्षिपति । एवं चानुभवबलाद्रजतस्यासत्त्वे स्थिते, इदं रजतमिति प्रतीतिरसत्प्रतीतिविषये मानमेव । एवकारो मानमित्यनेन संबध्यते । तेन बाधानुभवप्रमाणस्य निरवकाशतामभिप्रैति । यद्वेयमेवेति यथान्यासं योजना । नात्र प्रमाणान्तरं गवेषणीयमिति भावः । **नः** अनुभवानुसारिणाम् । तेनानानुभविकः परेषां देशान्तरे रजतस्य सत्त्वाभ्युपगम इति ध्वन्यते ॥ ५०० ॥

**किं च रूप्यस्य शुक्तेश्च तादात्म्यमसदीक्ष्यते ।**
**न चेत्प्रवृत्तिरभिलापो वा तत्र कथं नृणाम् ॥ ५०१ ॥**

'किञ्चासतः प्रतिभासासंभवे तादात्म्यमपि न प्रतिभासेत । तस्य कुत्राप्यभावात् । धर्मधर्मिभावस्तु वैधर्म्यमात्रमि'ति सुधोक्तं समर्थयते **किं चेति ॥ तादात्म्यमसदिति** । अस्य च परेणैवाभ्युपगमान्न पूर्ववदुपपादनक्लेश इति भावः । असतोऽपि तादात्म्यस्य प्रतीतिर्नाङ्गीक्रियत इत्यत आह । **ईक्ष्यत इति** । न प्रत्यक्षमपलापार्हमिति भावः । तथा च प्रयोगः । इदं रजतमिति प्रत्यक्षं असद्भूतरजततादात्म्यविषयकं तद्विषयकव्यवहारजनकत्वात् ।

यज्ज्ञानं यद्विषयकव्यवहारजनकं तत्तद्विषयकं यथा संमतमिति । व्यवहारश्च प्रवृत्तिर्वाऽभिलापो वेति भावः । वेत्यनेन हेतुद्वयमभिप्रैति । विपक्षे हेतूच्छित्तिं बाधकमाह **न चेदिति** । व्यवहारव्यवहर्तव्यज्ञानयोः कार्यकारण-भावभङ्गप्रसङ्ग एव बाधक इत्याशयः ॥ अत्र अभिलाप इत्यत्र यतिभङ्गः शास्त्रत्वेन समाधेयः । एवमुत्तरत्रापि ॥ ५०१ ॥

**व्याश्रयस्यापि रूप्यस्य शुक्त्यभिन्नत्वधीर्भ्रमे ।**
**न चेत्तर्हि भवेद्रूप्यस्मरणं च भ्रमस्तव ॥ ५०२ ॥**

ननु व्यवहारं प्रति उक्ततादात्म्यज्ञानस्य हेतुत्वं नाङ्गीक्रियते । किं नाम व्यधिकरणरजतज्ञानमात्रस्येत्याशङ्कते **व्याश्रयस्येति** । अपेर्धीरित्यनेनान्वयः । तेन रजतधीमात्रं भ्रमश्चेदित्यर्थलाभः । परिहरति **रूप्येति** । भ्रम इत्यनन्तरं स्यादित्युत्तरश्लोकस्थमुत्कृष्यते । नेष्टापत्तिरित्याह **तवेति** । अन्यथाख्याति-वादिन इत्यर्थः । अन्यत्र सतोऽन्यत्र धीरिति हि अन्यथाख्यातिलक्षणं तवाभिमतम् न तु पुनरन्यत्र सतो रजतस्य धीरित्येतावन्मात्रमित्यर्थः । रजत-स्मरणमात्रस्य भ्रमत्वे इदं रजतमिति भ्रमस्याकारो न स्यात् पुरोवर्तिनि प्रवृत्तिश्च न स्यादिति भावः ॥ ५०२ ॥

**पुरोवर्त्युल्लेखिनी च यदि व्याश्रयधीर्भ्रमः ।**
**इदं च रजतं चेति शाब्दी धीस्स्यात्तदा भ्रमः ॥ ५०३ ॥**

ननु पुरोवर्ति-शुक्त्यादिकं व्यधिकरणरजतादिकं चेत्युभयं उल्लिखन्ती एका समूहालम्बना धीर्भ्रम इत्युपेयते । रजतस्मरणं तु न तथेति न पूर्वोक्त-दोष इति प्रकारान्तरमाशङ्क्य परिहरति **पुरोवर्तीति** । शाब्दी धीरित्युप-लक्षणम् । गृह्यमाणारोपस्थले चाक्षुषीत्यपि ग्राह्यम् । अयमाशयः । समूहा-लम्बनज्ञाने शुक्तिरजतयोर्द्वयोरपि मुख्यविशेष्यतैव । न तु शुक्त्यंशे रजतस्य

अभेदसंबन्धेन प्रकारतया भानम् । तथा चेदं रजतमिति सामानाधिकरण्येन निर्देशो नोपपद्येत । रजतार्थिनः शुक्तिकायां प्रवृत्तिश्च न घटेत । न हि घटपटाविति ज्ञानेन पटार्थिनो घटे प्रवृत्तिः संभाविनीति ॥ ५०३ ॥

**असंसर्गाग्रहं चापि यदि भ्रान्तावपेक्षसे ।**
**तदा मीमांसकाचार्यस्यान्तेवासी त्वमप्यभूः ॥ ५०४ ॥**

नन्वेवं तर्हि इदमिति रजतमिति च ज्ञानद्वयं भ्रम इत्यङ्गीक्रियते । तयोर्ज्ञानयोर्भेदाग्रहेणैव व्यवहारः संपत्स्यत इत्याशङ्क्य समाधत्ते **असंसर्गेति** । इदं च संसर्गारोपाभिप्रायेण । तादात्म्यारोपस्थले भेदाग्रहमिति ज्ञेयम् । **मीमांसकाचार्यस्येति** । अगृहीतभेदं ज्ञानद्वयमेव व्यवहारहेतुरित्यभ्युपगन्तुः प्राभाकरस्येत्यर्थः । **अन्तेवासी** तन्मतप्रवेशवान् । अन्यथाख्यातिमनङ्गीकुर्वाणः प्राभाकरस्तथाऽभ्युपगच्छतु नाम । त्वं तु तदङ्गीकारवान् 'अतस्मिंस्तदिति प्रत्ययो भ्रमः' इति पूर्वाचार्यवचनमनादृत्य परमतं कस्माच्छरणीकुरुषे इति भावः ॥ ५०४ ॥

**यदा क्षीरस्थनीरस्य क्षीरेणैक्यं प्रतीयते ।**
**तदा तादात्म्यमात्रस्यासत्त्वं ते द्वे च नासती ॥ ५०५ ॥**

'यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसत् । — — — । यत्र पुनरसन्निहितमारोप्यं तत्र तत्तत्तादात्म्यं चेत्युभयमप्यसत्' इति सुधोक्तं हृदि कृत्वाऽऽह **यदेति** । **ते द्वे** क्षीरनीरे । **नासती** बाधोत्तरकालमपि स्वरूपद्वयानुवृत्तेः ॥ ५०५ ॥

**यतः क्षीरं च तत्रास्ति नीरं चास्ति निगूहितम् ।**
**अतस्तादात्म्यमात्रस्यासत्त्वं तत्र तयोस्तु न ॥ ५०६ ॥**

विवृणोति **यत इति** । **तत्र** पुरोदेशे । **अस्ति** बाधोत्तरमप्यनुवर्तते । **तयोः** तादात्म्यप्रतियोग्यनुयोगिनोः क्षीरनीरयोः । अयमाशयः । क्षीरनीरयोः मेलने सति समानद्रव्याभिघातरूपार्थदोषान्नीरं निगूहितं भवति । तदा नीरे सन्निहितं क्षीरमारोप्यते । तत इदं क्षीरमेवेति भ्रमो जायते । बाधस्तु नेदं क्षीरमेकमेव किं तु नीरमपीत्युत्पद्यते । न पुनरसदेव क्षीरं प्रत्यभादिति । क्षीरस्यापि नीरवदनुवृत्तेः । तत्र क्षीरनीरे उभे अपि सत्ये तादात्म्यमात्रमसदिति निश्चीयत इति । गृह्यमाणारोपस्थले सर्वत्रायं न्यायः ॥ ५०६ ॥

**यदि तादात्म्यवत्तस्य प्रतियोगी च तत्र न ।**
**तदा तस्यापि चासत्त्वमिति तत्वविदो विदुः ॥ ५०७ ॥**

स्मर्यमाणारोपस्थले तु नैवमित्याह **यदीति** । **तत्र** पुरोदेशे । **तत्त्वविदः** असदेव रजतं प्रत्यभादिति रजततत्तादात्म्ययोरुभयोरप्यसत्त्वमावेदयतो बाधकानुभवस्य तत्त्वं निश्चिन्वानाः ॥ ५०७ ॥

**अतस्सतासंवलितमसच्चेक्ष्यं न संशयः ।**
**अधिष्ठानस्य चासत्त्वं यो वदेन्न स युक्तिमान् ॥ ५०८ ॥**
**इदन्ताधारशुक्त्यादिर्यतस्सर्वत्र चार्थकृत् ।**
**रूप्यादिर्न तथा तस्मात्तन्मात्रमसदीर्यते ।**
**यथाऽवस्थितसर्वार्थवादिभिस्तत्त्ववादिभिः ॥ ५०९ ॥**

'असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वादि'ति तत्त्वनिर्णयोक्तं भ्रान्तिस्वरूपमनूद्योपसंहरति **अत इति** । **सता** विशेष्येणाधिष्ठानेन । **संवलितं** प्रकारतया संबद्धं **असच्च** रजतं रजतत्वं वा । प्रकारताऽवच्छेदकतया संबद्धं रजततादात्म्यं रजतत्वसंसर्गो वा । **ईक्ष्यं** अपरोक्षतया सत्त्वेन प्रतीतिविषयः । **न संशयः** मतान्तरेषु भ्रान्ति-

बाधयोरनुपपत्तेर्व्युत्पादितत्वादिति भावः । 'यदि पुनरिदं रजतमित्यवभासे चकासदसदेवाखिलमिति तदसत् । इदङ्कारास्पदस्य शुक्तिकाशकलस्य प्रागूर्ध्वं सत्त्वावगमात्' इति सुधोक्तदिशाऽसत्ख्यातिवादिनां मतमपाकरोति **अधिष्ठानस्येत्यादिना** । न केवलं आरोपितस्येति चार्थः । नञोऽभावो विरोधश्चार्थः । **स न युक्तिमान्** तत्पक्षो युक्तिरहितो युक्तिविरुद्धश्चेति यावत् । विमतं अधिष्ठानमसत् भ्रान्तिविषयत्वात् तादात्म्यवत् इत्यस्य प्रत्यक्षविरोधेन बाधितत्वात् । हेतौ विषयत्वं प्रकारत्वं चेदसिद्धिः । विशेष्यत्वं चेत् विरोधः । विमतं इदन्ताधारशुक्त्यादिकं सत्यं अर्थक्रियाकारित्वादिति युक्तिविरुद्धं च । तदाह **सर्वत्र चार्थकृदिति** । न च वाच्यं शुक्त्यादिकं नेदन्ताऽऽधार इति । 'यदि च न तदिदङ्कारास्पदं तदा न भ्रान्तिबाधयोरङ्गुल्यग्रेण निर्दिशेत् नोपादद्यान्न परित्यजेदि'ति सुधोक्तदोषापत्तेरित्यवधेयम् । तत्किं भ्रान्तौ प्रतीयमानं सर्वं सदेव । नेत्याह **रूप्यादिरिति** । **तथा** अर्थक्रियाकारी । तथा च बाधतदभावाभ्यामेवासत्त्वस्य सत्त्वस्य च व्यवस्थेति निष्कर्षः । यथावस्थितेति विशेषणं तत्ववादित्वोपपादकम् । सर्वेत्यनेनान्यथाख्यातिमङ्गीकृत्यापि देशान्तरे सत्त्वादिकमारोपितस्यायथावस्थितमेव वदन्तस्तार्किकादयो व्यवच्छिन्नाः । तत्त्ववादित्वं च यावत्प्रमाणदृष्टं तावत एव वक्तारस्तत्त्ववादिन इति सुधोक्ताप्तलक्षणानुसारेणावगन्तव्यम् ॥ ५०९ ॥

**यद्गुणो न प्रमाहेतुर्दोषाभावश्च नेष्यते ।**
**अनाप्ततार्किकोक्तत्वादाप्तोक्तत्वं गुणो न तत् ॥ ५१० ॥**

**यत्** यस्मात् । **गुणः** ऐशी प्रमा, विशेष्यनिष्ठविशेषणज्ञानमित्यादिरूपः प्रमामात्रानुगतत्वेन पराभिमतो वा, प्रत्यक्षप्रमायां सन्निकर्षार्थौ, अनुमितिप्रमायां यथार्थलिङ्गपरामर्शः, शाब्दप्रमायां यथार्थवाक्यार्थज्ञानं इति तत्तत्प्रमासु प्रत्येकानुगतत्वेन तदभिमतो वा । दोषाभावश्च प्रमाहेतुर्नेष्यते प्रामाणिकैरिति शेषः । व्यभिचारादन्यथासिद्धेश्चेति भावः । **तत्** तस्मात् ज्ञानप्रामाण्यस्यो-

त्पत्तौ स्वतस्त्वस्य सिद्धत्वात्, तत्सिद्ध्यधीनं प्रकृतेऽपेक्षितं वेदरूपकरणप्रामाण्यस्याप्युत्पत्तौ स्वतस्त्वं सुलभम् । तदुक्तं वाक्यार्थचन्द्रिकायां 'ज्ञानप्रामाण्यस्वतस्त्वव्युत्पादनेन करणप्रामाण्यस्वतस्त्वव्युत्पादने सौलभ्यमि'ति । एवं तर्कताण्डवेऽपि 'वेदरूपकरणस्य तज्जन्यज्ञानप्रामाण्योत्पत्तिस्वतस्त्वसिद्ध्यधीनोत्पत्तिस्वतस्त्वमि'ति । सत्यप्येवं वेदरूपकरणप्रामाण्यस्य स्वतस्त्वे, तद्विरुद्धं आप्तोक्तत्वस्य गुणत्वं वदंस्तार्किकोऽनाप्तः । तद्वाक्यं चाप्रमाणं अनाप्तवाक्यत्वाद्विप्रलम्भकवाक्यवदिति भावः ॥ ५१० ॥

**तस्मान्नित्यैव वेदाख्यविद्या विद्यावतां मते ।**
**नित्यायां च कथं द्वैतमद्वैतं किल ते प्रियम् ॥ ५११ ॥**

फलितमाह **तस्मादिति** । **नित्या** अपौरुषेया । यथोक्तं 'अपि वेदानामङ्गीकार्या हि नित्यता' इत्यनुव्याख्यानव्याख्यानसुधायां 'अत्र नित्यताशब्देनापौरुषेयता विवक्षिता । नित्यताया बौद्धागमेष्वपि सत्त्वात्' इति । पूर्वविद्याशब्दः करणे व्युत्पन्नः । उत्तरः भावे । तथा च ज्ञानिनां मत इत्यर्थः । नित्यायामित्युपलक्षणम् नित्यानुसारेषु पञ्चरात्रादिष्वित्यपि ध्येयम् । **द्वैतं** तत्त्वावेदकत्वातत्त्वावेदकत्वलक्षणो वाक्यभेदः । तदुक्तं तत्त्वनिर्णयटीकायां 'श्रुतिस्मृतिलक्षणो हि सर्वोऽप्याम्नायस्तावदेकमेव शास्त्रम् । भेदे प्रमाणाभावात्' इति । किलेति अपहासे । भेदापलापव्यसनिनः शास्त्रे वाक्यभेदकल्पनमपहसनीयमिति । अनेन 'मानत्वस्य स्वतस्त्वेन सा नातत्त्वं वदेत्क्वचित् । दोषश्च वेदे नानादौ' इति प्रागुक्तस्योपसंहारः कृतो ध्येयः । ॥ ५११ ॥

**तत्स्वतस्त्वेन सर्वत्र प्रामाण्यं गृह्यते श्रुतौ ।**
**पुंदोषमूलदोषस्याभावात्तच्च न चाल्यते ॥ ५१२ ॥**

**न चाल्यते** नापोद्यते । किंत्वविरुद्धेऽर्थान्तरे श्रुतिरेव व्यवस्थाप्यते । तदुक्तं 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इति । तथा च तत्त्वमस्यादिवाक्यं सादृश्यैक्याद्यर्थान्तरपरत्वेनैव व्यवस्थाप्यम् । न तु पुनः परोक्तरीत्याऽबोधकत्वेनाप्रमाणं मन्तव्यमिति निष्कृष्टार्थः । महावाक्यानां अद्वैतिभिरबोधकत्वाङ्गीकारस्तद्भाष्ये स्पष्टः ॥ ५१२ ॥

**अतत्वावेदकत्वोक्तिरतो वेदे न शोभते ।**
**अतत्वावेदकस्तस्य गुरुरेवेति मे मतिः ॥ ५१३ ॥**

तर्ह्यद्वैतभाष्येऽपि सुबहुलमुपलभ्यमानोऽन्योन्यविरोधोऽपि किमेवमर्थान्तरकल्पनेन परिहरणीयो, नेत्याह **अतत्त्वावेदक इति** । एवेति सदागमव्यवच्छेदः । अतत्त्वावेदक एवेति वा योजना । न तु तद्वाक्येऽविरुद्धार्थान्तरकल्पना । तदुक्तं 'इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि' इति । विप्रलम्भादिमूलत्वेनाप्रामाण्यमेव तद्वाक्यानामिति भावः ॥ ५१३ ॥

**अकामः काम्यविधिना कुतो वा न प्रवर्तते ।**
**लिङ्लोट्तव्यप्रत्ययान्तपदोपेतविधेर्बलात् ॥ ५१४ ॥**

द्वासुपर्णेत्यादिवाक्यानां भेदपरत्वं यदुक्तं तन्नोपपद्यते । वाक्यसामान्यस्य कार्यपरत्वात् वेदानां सिद्धार्थपरत्वायोगात् । विधिप्रत्ययाभावे कार्यबोधासम्भवात् तदभावे प्रवृत्त्याद्यनुपपत्तेः नैराकाङ्क्ष्यलक्षणवाक्यपर्यवसानस्यैवानुपपत्तेरिति प्राभाकरमतानुसारेणाशङ्क्य परिहरति चतुर्भिः **अकाम इत्यादिना** । इष्टसाधनताज्ञानाभावेऽपि विधिपदबोधितपराभिमतकार्यताज्ञानेनैव प्रवृत्तिर्यदीत्यादौ उपस्कर्तव्यम् । **अकामः** वृष्टिकामरहितः स्वर्गकामनावान् । **काम्यविधिना** कारीर्या यजेत स्वर्गकाम इत्येवंरूपेण । **कुतो वेति** । न तावत्त्वदभिमतस्य कार्यताबोधकस्य विधेर्विरहात् । यजेतेति लिङ्प्रत्ययान्तपदोक्तविधेरविकलत्वात् । तदाह **लिङिति** ॥ ५१४ ॥

**यदीष्टसाधनं तस्य तन्नेत्येवाप्रवर्तकम् ।**
**तर्ह्यावश्यकमिष्टस्य हेतुत्वं बोधयेद्धि यत् ।**
**तदेव वाक्यं मानं स्याल्लोटा युक्तं लटाऽपि वा ॥ ५१५ ॥**

अथ स्वर्गस्य तदिष्टत्वेऽपि कारीर्यास्तदसाधनत्वान्न प्रवृत्तिरिति मन्यसे तर्हि इष्टसाधनताज्ञानस्यावश्यकत्वं त्वयैवाभ्युपगतमिति तद्बोधकमेव वाक्यं मानमिति नियमसिद्धिर्निष्प्रत्यूहेत्याह **तदेवेति** । तदुक्तं भगवत्पादैः 'ज्ञात्वैव हीष्टसाधनतां प्रवर्तते निवर्तते च विपर्ययेणे'ति ॥ ५१५ ॥

**यागे विधिः कुतो वेदे क्रियान्तरविधिं विना ॥ ५१६ ॥**

उक्तं नियमं विपक्षे बाधकप्रदर्शनेन द्रढयति **याग इति** । **यागे** दर्शपूर्णमासादौ । **क्रियान्तरविधिं** स्वर्गसाधनतारहितकारीर्यादिक्रियान्तर-विधिम् ॥ ५१६ ॥

**यद्यस्ति स्वर्गहेतुत्वं याग एवेति मन्यसे ।**
**तर्हि सिद्धविधेः पृष्ठलम्बी तव विधिर्ह्यभूत् ॥ ५१७ ॥**

**याग एव** दर्शपूर्णमासादौ । एवकारेण कारीर्यादिव्यवच्छेदः । **पृष्ठलम्बी** सिद्धस्य स्वर्गस्येष्टत्वमुपजीव्य तत्साधनताबोधकत्वेनैव प्रवर्तकः । ॥ ५१७ ॥

**अतस्तेनैव विधिना वाक्सर्वा मानतां व्रजेत् ।**
**अस्त्यायुरिति वाक्यं च नोचेन्मानं भवेन्न ते ॥ ५१८ ॥**

**तेनैव** इष्टसाधनताऽवबोधकेनैव । **मानतां** नैराकाङ्क्ष्यलक्षणं पर्यव-सानम् । 'वाक्यार्थज्ञानमात्रेण क्वचिदिष्टं भवेदपि' इत्यनुव्याख्यानमनुरुध्याह **अस्त्यायुरिति** । पुत्रस्ते जातः, पिता ते राजा वर्तते इत्यादिसुधोक्तं चानुसन्धेयम् । ते इत्यनेन इदं ध्वनयति । अस्य वाक्यस्य प्रामाण्यं वैयात्येन नाङ्गीकरोषि चेत्तव सद्योमृतिरापद्यत इति ॥ ५१८ ॥

**तस्मादाचार्यतरणिसरणिश्शोभतेतराम् ।**
**यस्स्वान्वितिमिरान्कुर्वन्सदा हृद्व्योम्नि जृम्भते ॥ ५१९ ॥**

दुर्वादानुवादप्रसक्तपापापनोदाय तत्पाटनपटुं श्रीमदाचार्यं स्मरति **तस्मादिति । यः** तरणिः । **सरणिः** मार्गः । तरामित्यनेन सूचितं सूर्यादप्यतिशयं व्यनक्ति ॥ **स्वान्** भक्तवर्गानेव । सूर्यस्य तु नायं विवेकः । **सदा** नक्तं दिवम् । सूर्यस्तु दिवैव । **वितिमिरान्** । आन्तरतमोरहितान् । सूर्यस्तु बाह्यतमोमात्रनिरासकः । **हृद्व्योम्नि** हृदयाकाशे । सूर्यस्तु बाह्याकाशमात्रगः । **जृम्भते** त्रिलोक्या बहिरपीति शेषः ॥ ५१९ ॥

**गृष्टयोर्मिथो विरोधे हि हत्वैकामपराङ्मुखीम् ।**
**विरोधशान्तिं कः कुर्याद्विना म्लेञ्छकुमारकान् ॥ ५२० ॥**

द्वा सुपर्णेत्यादिश्रुतयो निरवकाशतया भेदं प्रतिपादयन्ति । तत्त्वमसीत्यादयः कतिपया अभेदपरा इवापाततः प्रतीयन्ते । निर्दोषत्वेन प्रमाणानां वेदवाक्यानां न तत्त्वतो विरोधः संभवति । अतः 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना' इति भगवत्पादोदाहृतव्यासस्मृत्यनुरोधेन निरवकाशभेदवाक्यानुसारेण सावकाशैक्यवाक्यानां सादृश्यैक्याद्यर्थान्तरवर्णनेन विरोधः परिहरणीयः । अद्वैतिनस्तु भेदवाक्यानामतत्त्वावेदकत्वलक्षणमप्रामाण्यमुक्त्वा विरोधपरिहारमभिलषन्ति । तेषामेवमुक्तेरतिनिन्द्यतामनुरूपदृष्टान्तप्रदर्शनेन समर्थयति **गृष्टयोरित्यादिना । गृष्टिः** सकृत्प्रसूता गौरतिपवित्रा । **विरोधे** अस्वाभाविके । न तु अहिनकुलादीनामिव स्वरूपभूते । येन अर्थान्तरलालसतोत्पादनेनापि कलहविमोचनं दुर्घटं स्यादिति भावः । म्लेञ्छाश्च ते कुमारकाश्चेति विग्रहः । कुत्सिताश्च ते मारकाश्चेति च । नीचा गोविप्रहिंसाशीलाः इत्यर्थः । तान्विना । क इत्याक्षेपे ॥ ५२० ॥

**तृणपिण्याकदानेन कृत्वाऽर्थान्तरलालसाम् ।**
**ततः प्रच्यावयेदेकां क्रुद्धाऽप्यन्याध्वना व्रजेत् ॥ ५२१ ॥**

**एकां** स्वभावदुर्बलाम् । **ततः** मुखतः कलहात् । **क्रुद्धाऽपि** पूर्वमिति शेषः । अपिना प्रागपि प्रतीतः क्रोधरूपः कलहो न स्वभावकृत इति तस्यास्वरसतां ध्वनयति । **अन्या** स्वभावबलवती अत एवार्थान्तरा-लालसा । **अन्याध्वना** दुर्बलगृष्टिप्रक्रान्तमार्गापेक्षया अन्यमार्गेण । वस्तुतः पूर्वप्रवृत्तस्वमार्गेणैव । बलवत्याः स्वमार्गात्प्रच्युत्यभावात् ॥ ५२१ ॥

**एवं श्रुत्योर्विरोधेऽपि या वागन्यार्थवर्तिनी ।**
**तां तदर्थपरां कृत्वा मोचयेत्कलहं तयोः ॥ ५२२ ॥**

**अतत्वावेदिका त्वेका तत्वस्यावेदिका परा ।**
**इत्याद्युक्तिस्त्वमानत्वप्राप्त्याऽसुत्याजनं श्रुतेः ॥ ५२३ ॥**

दार्ष्टान्तिकं योजयति **एवमिति** । अत्र गृष्टी तत्वमसि-द्वासुपर्णवाक्ये । म्लेच्छकुमाराः वेदस्वरूपतत्प्रामाण्यादिमिथ्यात्वं ब्रुवाणा मिथ्यावादिनः । तृणापिण्याकादिकं वक्ष्यमाणं सादृश्यैक्याद्यर्थान्तरषट्कम् इत्यादिविवेको ध्येयः । बौद्धः श्रुतिसाध्व्याः प्राणापहारकः । मायी तु तन्मानभङ्गं समीहमानस्ततोऽपि निन्द्यतर इति भावः ॥ ५२२ ॥ ५२३ ॥

**सादृश्यैक्ये स्थानमत्योरैक्ये व्याप्त्यैक्यपूर्वके ।**
**सावकाशैक्यवाग्भेदवाक्तु स्वार्थपरायणा ॥ ५२४ ॥**

ऐक्यश्रुतीनां सावकाशत्वमर्थान्तरप्रदर्शनेन व्यनक्ति **सादृश्येति** । सर्वत्र निमित्तसप्तमी । सादृश्यं च तदैक्यं चेति विग्रहः । पूर्वके इत्यनेन स्वातन्त्र्यविशिष्टैक्ययोर्ग्रहणम् । तुशब्देनार्थान्तरपरत्वव्यवच्छेदः । **स्वार्थः** वाच्यार्थः **परायणं** प्रमित्युद्देश्यः यस्याः सा ॥ ५२४ ॥

**एकीभूतास्तु कुरव एकीभूतौ नृपाविमौ ।**
**ऐक्याद्वयस्य ऋभुमानित्याद्युक्तिर्विचार्यताम् ॥ ५२५ ॥**

स्थानैक्यादिनिमित्तानैक्यव्यवहारान्दर्शयति **एकीभूता इति** । तेन न स्वायत्तन्यायविरोधेनामुख्यवृत्तौ प्रयोजनापेक्षा । **एकीभूताः** एकस्थानस्थितिमन्तः । स्थानैक्ये लक्षणा । **एकीभूतौ** एकविषयकमतिमन्तौ । मत्यैक्ये दृष्टान्तः । लक्षितलक्षणावृत्तिः । व्याप्त्यैक्ये दृष्टान्तो **वयस्य ऋभुमानिति** । ऋभवो देवाः । 'आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः' इत्यमरः । **तद्वान्** देवश्रेष्ठः कृष्णः । इदं चार्जुनस्य युधिष्ठिरं प्रति वचनं भागवते प्रथमस्कन्धे । अत्र व्याप्तिर्बहुत्र सहावस्थितिः । स्थानैक्यस्यैव विशेषः । 'शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्य ऋभुमानिति विप्रलब्धः । सख्युः सखेव पितृवत्तनयस्य सर्वं सेहे महामहतया कुमतेरघं मे' इति पूर्वार्धे शय्याऽऽद्यनेकव्यापाराणामैक्येऽधिकरणत्वोक्तेरुत्तरार्धे च महामहिमत्वकुमतित्वादिविरुद्धधर्मोक्तेश्च न तन्मध्यपतितमैक्यपदं स्वरूपैक्यपरमिति स्पष्टम् । न हि स्वरूपैक्यमवस्थाविशेषनियतमिति भावः । वशीकृतग्राममधिकृत्यास्मिन्ग्रामेऽयमेव पुरुष इति स्वातन्त्र्यैक्ये, विद्याविशिष्टं ब्राह्मणमधिकृत्यायमेव ब्राह्मणोऽस्मिन्ग्रामे इति विशिष्टैक्ये च उदाहरणे ध्येये । अनेन 'स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि । सादृश्ये चैक्यवाक् सम्यक्सावकाशा यथेष्टतः' इति भगवत्पादोक्तिर्विवृता ध्येया ॥ सादृश्यैक्ये गौणीवृत्तिर्विशिष्टैक्ये च लक्षणावृत्तिश्च ज्ञेये । एतान्युदाहरणान्युपलक्षणानि । व्याप्त्यैक्ये सर्वं जलं लवणमिति, निमित्तैक्ये 'आयुर्वै घृतमि'ति, तत्सिद्ध्यैक्ये 'यजमानः प्रस्तर' इत्यादीनि न्यायामृते 'इदं सर्वं यदयमात्मा' इति श्रुत्यर्थविवरणभङ्गे उदाहृतान्यनुसन्धेयानि ॥ ५२५ ॥

**लिङ्गानुशासनं यस्मादेके मुख्यान्यकेवलाः ।**
**इत्याह भेद एवैक्यं मुख्यता वा ततो भवेत् ॥ ५२६ ॥**

एकशब्दार्थमुपजीव्यैव खलु मायावादिनैक्यं साधनीयम् । न च तत्संभवति । तच्छब्दस्य ऐक्यविरोधिभेदाद्यर्थकत्वेनानुशिष्टत्वादित्याह **लिङ्गेति । ततः** तस्मात् कारणात् । यस्मादित्यनेनान्वयः । **ऐक्यम्** 'एकमेवाद्वितीयमि'त्यत्र श्रूयमाणैकशब्दप्रवृत्तिनिमित्तम् । एवेति स्वरूपैक्यव्यवच्छेदः । ॥ ५२६ ॥

**यदा तवैक्यशब्दोऽयं भेदं वक्त्यखिलेशितुः ।**
**वक्ति सर्वोत्तमत्वं वा प्रतिवक्ति कथं भवान् ॥ ५२७ ॥**

तव, ऐक्यसाधकत्वेन त्वदभिमततया त्वत्संबन्धी । **सर्वोत्तमत्वमिति ।** 'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते । तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे ॥' इति निर्वचनानुसारेण केवलेत्यस्य सर्वोत्तमार्थकत्वं च सूचितम् । लिङ्गांनुशासनमुपलक्षणम् । 'एको गोत्रे इत्यत्रैकशब्दोऽयमन्यप्रधानासहायसंख्याप्राथम्यसमानवाची'ति कैयटोक्तिर्न्यायामृतोदाहृताऽपि ग्राह्या । **प्रतिवक्ति** भेदं प्रत्याख्याति । त्वदभिमतमानस्यैव त्वत्प्रतिकूलत्वादिति भावः ॥५२७॥

**एवं निर्गुणवाक्यं च सामान्यवचनत्वतः ।**
**दोषरूपगुणाभावपरं कर्तुं हि शक्यते ॥ ५२८ ॥**

**निर्गुणवाक्यं** निर्गुणपदघटितं 'साक्षी चेता केवलो निर्गुणश्चे'ति वाक्यम् । यद्वा यौगिकत्वेन वाक्यतुल्यं निर्गुणेतिपदम् । **वचनत्वतः** उच्यतेऽर्थोऽनेनेति व्युत्पत्त्या वाक्यत्वतः पदत्वतो वा । **सामान्येति ।** अर्थान्तरपरतया नेतुं शक्येत्यर्थः । गुणशब्दस्योत्कर्षप्रयोजकधर्मेष्विव प्रकृतिकार्येषु सत्वादिष्वपि प्रयोगात् ॥ ५२८ ॥

**एष सर्वेश इत्यादिविशेषवचनं तु यत् ।**
**अन्यार्थशून्यं तत्स्वार्थं प्राणत्यागेऽपि न त्यजेत् ॥ ५२९ ॥**

**यत्** यस्माद्विशेषवचनं **तत्** तस्मादन्यार्थशून्यमिति योजना । **प्राणत्यागेऽपि** अवान्तराभिमानिनामिति शेषः प्रलयेऽपीति यावत् । **न त्यजेत्** । अर्थान्तरस्यानवकाशादस्यापि स्वार्थस्य परित्यागे नैरर्थक्यलक्षणाप्रामाण्यप्रसङ्गादिति भावः ॥ ५२९ ॥

**न हिंस्यादिति वाक्यं हि क्रतोरन्यत्र मान्यते ।**
**तद्बह्वर्थविभक्त्यन्तसर्वशब्दान्वितां श्रुतिम् ।**
**श्रौतादन्यत्र नयता तच्छून्या किं न नीयते ॥ ५३० ॥**

निषेधवाक्यानां सर्वत्र प्रमितेतरनिषेधपरत्वमित्यत्र संप्रतिपन्नं दृष्टान्तमाह **नेति** । निषेधवाक्यानां बहुवचनान्तसर्वपदघटितत्वेऽप्ययं न्यायोऽप्रतिबद्धप्रसर इत्याह **बह्वर्थेति** । **बह्वर्थविभक्तिः** बहुवचनम् । तदन्तश्चासौ सर्वशब्दश्च तेनान्वितां श्रुतिं सर्वा भूतानीति श्रुतिम् । अन्यत्रेत्यतः पूर्वं क्रतोरित्यनुषज्यते । **तच्छून्या** सर्वशब्दशून्या निर्गुणश्रुतिः । अत्र बहुवचने न भरः । प्रकृतिगुणानामपि बहुत्वात् । एतेन निर्गुणश्रुतिर्निषेधरूपत्वात्प्रबलेत्यपि परास्तम् । न हिंस्यादिति निषेधस्यैव विशेषविधिना बाधस्योदाहृतत्वादित्याकूतम् ॥ ५३० ॥

**अतस्सामान्यतो यत्तु निषेधवचनं श्रुतौ ।**
**विशेषवाक्यविहितं न हि तत्प्रतिषेधति ॥ ५३१ ॥**

**अतः** निरवकाशत्वस्यैव बाधकत्वे तन्त्रत्वात् निषेधवाक्यत्वस्याप्रयोजकत्वात् । **सामान्यतो वचनम्** सावकाशवाक्यं निर्गुणश्रुतिः । **विशेषवाक्यविहितम्** निरवकाशेन 'एष सर्वेश इति अनेन विहितं सर्वेशत्वादिकम् । हीत्यनेनास्य न्यायस्य सुदृढतामाह ॥ ५३१ ॥

**योऽसौ निर्गुण इत्युक्तश्शास्त्रेषु जगदीश्वरः ।**
**प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते ।**
**इति पाद्मे त्रयस्त्रिंशाध्याये रुद्रस्य वागियम् ॥ ५३२ ॥**

प्राकृतगुणानामेव निषेध इत्यत्र समाख्यां पठति **योसाविति । शास्त्रेषु** श्रुतिस्मृतिषु सर्वत्र । **प्राकृतैः** बन्धहेतुभिः । 'सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम्' इति गीतोक्तेः । अत एव हेयसंयुक्तैः हेयत्ववद्भिः हेयैरिति यावत् । **हीनत्वं** तन्नियामकत्वेन तत्कृतलेपाभावः । 'गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति' इत्युक्तेः ॥ असावित्यनेन विष्णोः वक्तू रुद्राद्भिन्नत्वं, जगदीश्वर इत्यनेन रुद्रस्य तथात्वाभावः स्वयं प्रकृतिबद्धत्वं च ज्ञाप्यन्ते ॥ ५३२ ॥

**शब्दस्य लब्ध्वा योग्यार्थमयोग्यार्थो न मृग्यते ।**
**दुग्धार्थी बुद्धिमान्दोग्धि कस्तं बस्तगलस्तनम् ॥ ५३३ ॥**

**शब्दस्य** एकीभवन्ति निर्गुणः इत्यादिकस्य । **योग्यार्थं** प्रामाणिकं प्रमाणाविरुद्धं च स्थानमत्यैक्यादिकं प्राकृतगुणरहित इत्यादिकम् । **लब्ध्वा** स्वरसतः अधिगम्य । **अयोग्यार्थः** अप्रामाणिकः सकलप्रमाणविरुद्धश्च स्वरूपैक्यं सद्गुणरहित इत्यादिरूपः । **न मृग्यते** दुरभिनिवेशनिमित्तेन न कल्प्यते । अत्रैव दृष्टान्तमाह **दुग्धार्थीति ।** कामधेनौ सत्यामित्यादावुपस्कर्तव्यम् । **बस्तः** छागः । अयं पुनर्विशेषः । छागगलस्तनदोहनं क्लेशमात्रफलकम् । श्रुतेरपार्थाभिधानं तु तमःफलकमिति ॥ ५३३ ॥

**सन्ध्यायां वन्दते योगी सन्ध्यां भोगी तु सुन्दरीम् ।**
**युगपन्मतिभेदस्तद्भिन्नयोरेव नान्यथा ॥ ५३४ ॥**

कश्चिदाह, ऐक्यवाक्यं यथा मत्यैक्यपरमित्युच्यते तथा द्वासुपर्णेत्यादिभेदवाक्यं मतिभेदपरं किं न स्यादिति । तद्दूषयति **सन्ध्यामिति ।**

अयमभिसन्धिः । द्वासुपर्णेतिवाक्यस्य स्वरूपभेदपरत्ववारणाय खलु मतिभेदपरत्वं परेणाङ्गीकृतम् । न तावता तस्येष्टसिद्धिः । स्यादपि तथा **कथञ्चित्** यदि जीवपरमात्मनोर्जीवानां वा कालभेदेनैव मतिभेदः स्यात् । न तु तथाऽस्ति । युगपदेव मतिभेदस्यानुभूयमानत्वात् । स च स्वरूपभेदेनाविनाभूत एवोपलब्धः । योगिभोगिनोस्तथा दृष्टेः । तथा च मतिभेदाङ्गीकारोऽपि स्वरूपभेदाङ्गीकार एव पर्यवसन्न इति घट्टकुटीप्रभातन्यायः । अयमत्र प्रयोगः । जीवपरमात्मानौ, स्वरूपतो भिन्नौ, युगपद्भिन्नविषयकमतिमत्त्वात् योगिभोगिवत् । न चासिद्धिः परेणैव भेदश्रुतेस्तत्परत्वाङ्गीकारात् । न च दृष्टान्तः साधनविकलः । सन्ध्यायामेकस्मिन्काले योगिना सन्ध्यावन्दनस्य भोगिना तु सुन्दरीवन्दनस्य करणात् । नैमित्तिकव्यवहारभेददर्शनेन तन्निमित्तमतिभेदकल्पनासौलभ्यात् । **भिन्नयोरेवेति** एवकारपुरस्सरं व्याप्तिप्रदर्शनेन भेदस्य व्यापकत्वं मतिभेदस्य व्याप्यत्वं ज्ञायते । नान्यथेत्यनेन व्याप्तेः सुदृढता चावगम्यते ॥ ५३४ ॥

**सखायौ सयुजौ चेति मतिस्थानभिदे स्फुटम् ।**
**यत्प्रत्याह ततोऽप्याह भेदवाग्भेदमेव हि ॥ ५३५ ॥**

अङ्गीकृत्य परोक्तं श्रुतेर्मतिभेदपरत्वं स्वरूपभेदपर्यवसायित्वं समर्थितम् । वस्तुतः सखायौ इति पदसद्भावेन तेन च मत्यैक्यस्यैवागमनेन न मतिभेदपरत्वं श्रुतेः कल्पनार्हमित्याह **सखायाविति** । इदमुपलक्षणम् । सयुजाविति स्थानैक्यस्यापि निर्देशात् स्थानभेदपरताऽप्यपास्ता वेदितव्या । **ततोऽपि** अर्थान्तरासंभवादपि । न केवलं प्रागुक्तेन पर्यवसानप्रकारेणेत्यपेरर्थः ॥ ५३५ ॥

**ऐक्योक्तेस्स्वविरोधिन्यास्सख्यस्थानैक्यवादिनी ।**
**यद्गती चाह तद्वाणी कृपाणीयं विरोधिनाम् ॥ ५३६ ॥**

द्वा सुपर्णेति श्रुतिर्न केवलं स्वपक्षं भेदं साधयति किं तु परपक्षं प्रतिक्षिपत्यपीत्याह **ऐक्येति** । यदि जीवब्रह्मणोर्भेदस्तर्हि 'विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' । 'यावन्मोक्षस्तु भेदः स्याज्जीवस्य परमस्य च । ततःपरं न भेदोऽस्ति भेदहेतोरभावतः' इति मुक्तावैक्याभिधात्रीणां भेदनिषेधिकानां च श्रुतीनां का गतिरिति परेषां चोद्यस्य परिहारं सूचयितुं सखायौ सयुजाविति च पदद्वयेन गतिद्वयसूचनात् । विरुद्धमतिमत्वं प्रति हेतोरज्ञानस्य नाशनात् न मुक्तौ मतिभेदः, सयुजावित्युक्तत्वात्स्थानैक्यस्यैवावगमान्न स्थानभेदो वेति मत्यैक्यस्थानैक्यनिमित्त एवाभेदव्यपदेश इति ॥ ५३६ ॥

**नारायणः परं ब्रह्म नान्यद्ब्रह्म ततः परम् ।**
**प्राक्सृष्टेरप्सु यश्शेते वटपत्रपुटे प्रभुः ॥ ५३७ ॥**

अत्राह । द्वे ब्रह्मणी । निर्गुणं सगुणं च । तत्र निर्गुणं नित्यशुद्धबुद्धमुक्तस्वभावं परिपूर्णम् । तदेव मायाशबलितत्वेनैश्वर्यवत्तया सगुणमित्युच्यते । तत्र सद्गुणबृंहितो नारायणोऽपरं ब्रह्म । शुद्धं तु निर्गुणं परं ब्रह्मेति । तदेतच्छ्लोकत्रयेण निराकरिष्यन्नादौ प्रतिजानीते **नारायण इति** । ततः नारायणात् । अन्यद्ब्रह्मैव नास्ति दूरे ततः परम् । तथोक्तं "ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते" इति । तत्र सूत्रोक्तयुक्तीराह **प्रागिति** । अप्सु शेते इत्यनेन नारायणशब्दनिर्वचनं सूचितम् । शेते इत्यनेन 'एकीभूय पुनः शेते निर्दोषो हरिरादिकृत्' इति भाष्योदाहृतप्रमाणं च सूचितम् । अनेन स्वाप्य-

यादिति सौत्रयुक्तिरभिहिता । प्रलयेऽवस्थानोक्त्या जन्ममरणाभावः समर्थितः । तथा शुद्धिसौरभे वक्ष्यति 'अतोऽभूद्देहलीदीपः प्रलये सत्त्वमीशितुः । कल्पान्ते यल्लयं रुन्धे कल्पादौ जन्म च प्रभोः' इति । तेन च प्राकृतदेहसंबन्धाभावो लभ्यते । तत्संबन्धवतो जन्ममरणनियतेः । ॥ ५३७ ॥

**बन्धकीभूतसत्वादिदुर्गुणानां विवर्जनात् ।**
**स एव निर्गुणं ब्रह्मेत्युक्तस्सद्गुणबृंहितः ॥ ५३८ ॥**

एतेनैव निर्गुणशब्दस्य तस्मिन्प्रवृत्तौ निमित्तं च दर्शितमित्याह **बन्धकीभूतेति** । 'बृहन्तो ह्यस्मिन् गुणाः' इत्युक्तं गुणपूर्णं ब्रह्म सर्वथा गुणशून्यमित्युक्तिस्तु व्याहतेः प्रथममुदाहरणम् ॥ ५३८ ॥

**तन्मुकुन्दाभिधं ब्रह्म वेदाख्यब्रह्मवर्णितम् ।**
**ब्राह्मणानां परं दैवं ब्रह्मसूत्रप्रकाशितम् ॥ ५३९ ॥**

'तन्निष्ठस्य मोक्षोपदेशादि'ति सौत्रयुक्तिमाह **मुकुन्दाभिधमिति** । 'तस्यात्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः' 'परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृतः' इति चोक्तेर्विष्णुरेव निर्गुणः । वेदाख्यब्रह्मवर्णितमित्यनेन साक्षादेव निर्गुणपदेन 'साक्षी चेता केवलो निर्गुणश्चे'ति श्रुतौ वर्णितत्वोक्त्या श्रुतत्वाच्चेति सौत्रहेतुरभिहितः । परं दैवमित्यनेनेतरदेवतानामपरत्वं अत एव विष्णुपरिवारतयैव ग्राह्यत्वं, विष्णोस्तु प्राधान्येनोपादेयत्वं वर्णयता 'हेयत्वावचनाच्च' इति सूत्रोक्तयुक्तिः प्रतिपादिता । ब्रह्मसूत्रप्रकाशितमित्यनेनैवमादिभिः सूत्रैः परब्रह्मत्वेन प्रकाशितो नारायण एवेति निगमनं कृतं ध्येयम् ॥ ५३९ ॥

**सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् ।**
**विश्वं नारायणं देवमक्षरं परमं पदम् ॥ ५४० ॥**
**विश्वतः परमां नित्यं विश्वं नारायणं हरिम् ।**
**विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥ ५४१ ॥**
**पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ।**
**नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥ ५४२ ॥**
**नारायणपरो ज्योतिरात्मा नारायणः परः ।**
**नारायणपरं ब्रह्म तत्त्वं नारायणः परः ॥ ५४३ ॥**
**यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः ॥ ५४४ ॥**

उक्तार्थे स्पष्टां नारायणोपनिषदं पठति पञ्चभिः श्लोकैः **सहस्रेत्यादिना** ॥ ५४० – ५४४ ॥

**इति स्पष्टा ह्युपनिषत्परं ब्रह्माह तं प्रभुम् ॥ ५४५ ॥**

नारायणेत्यसकृदुद्देशः तात्पर्यनिर्णायकः । परं ब्रह्मेति विधेयम् । शिष्टं सहस्रशीर्षत्वादिकं लक्षणोक्तिः । **स्पष्टेति** । निरवकाशबहुलक्षणकथनादिति भावः ॥ ५४५ ॥

**विश्वतः परमत्वं च विश्वशंभूमितां तथा ।**
**विश्वोपजीव्यतामात्मेश्वरताक्षरते तथा ॥ ५४६ ॥**

विश्वतः परमश्चासौ अश्चेति विग्रहः । परमा शब्दो विश्वपाशब्दवदाकारान्तः । अशब्दः परब्रह्मवाची । 'अकारः सर्ववागात्मा परब्रह्माभिधायकः' इत्यभिधानात् । **विश्वशम्भुवं** परमानन्दस्वरूपम् । **'लक्षणं** परमानन्दो विष्णोरेव न संशयः' इति विष्णुलक्षणम् । यद्वा विश्वो

वायुः तस्य आनन्दप्रदम् । तदुक्तं 'आनन्दतीर्थपरानन्दवरद' इति । **अक्षरता** चतुर्विधनाशराहित्यम् । 'अक्षरं ब्रह्म परमम्' इति गीतायां परब्रह्मलक्षणत्वेनोक्तम् ॥ ५४६ ॥

**शाश्वतत्वाच्युतत्वे च महाज्ञेयत्वमेव च ।**
**अन्तर्बहिश्च विश्वस्य व्याप्तत्वं चाप्यनन्तताम् ॥ ५४७ ॥**

**शाश्वतत्वं** शश्वदेकप्रकारत्वम् । 'पूर्वावगतवत्सदा । स्थितेर्ब्रह्मेत-मित्युक्तम्' इति ब्रह्मलक्षणतयोक्तम् । **अच्युतत्वं** नित्यमेवाखिलैर्गुणैरिति पूरणीयम् । **महाज्ञेयत्वं** प्राधान्येन जिज्ञास्यत्वम् । **अनन्ततां** देशकाल-गुणैरपरिच्छिन्नताम् ॥ ५४७ ॥

**ब्रह्मधर्मानिमान्सर्वान्यस्मिन्नारायणे श्रुतिः ।**
**सहस्रशीर्ष्णि पुरुषे तन्नाम्नैव पुनः पुनः ॥ ५४८ ॥**

**सहस्रशब्दोऽनन्तवाची ।** 'अनन्तबाहूदरवक्त्रनेत्रमि'ति गीतोक्तेः । ॥ ५४८ ॥

**आम्नाते सङ्कलय्याह महातात्पर्यपूर्वकम् ।**
**स एव हि परं ब्रह्म ब्रह्मलक्षणवेदिनाम् ॥ ५४९ ॥**

**लक्षणवेदिनाम्** । लक्षणवाक्यानि असाधारणधर्मानेवाभिदधति न तु पुनरखण्डं स्वरूपमात्रमिति विजानताम् ॥ ५४९ ॥

**परं ब्रह्म परं ज्योतिः परं तत्वं परं पदम् ।**
**परमात्मेति च ब्रह्मनाम्ना नारायणं प्रभुम् ॥ ५५० ॥**
**उद्दिश्य पौनःपुन्येन ब्रह्मणो लक्षणानि च ।**
**सर्वाण्युक्त्वोत्तरग्रन्थे परीक्षा च यतः कृता ।**
**श्रुत्या लक्षणशास्त्रस्य मर्यादामनुसृत्य हि ॥ ५५१ ॥**

श्रुत्या मर्यादामनुसृत्य नारायणमुद्दिश्य लक्षणान्युक्त्वा परीक्षा कृतेति योजना । **ब्रह्मनाम्ना** ब्रह्मणो नाम तेन । समुदायैकवचनम् । परं ज्योतिरित्यादीनां चतुर्णामपि ब्रह्मण एव नामत्वम् ॥ ५५० ॥ ५५१ ॥

**शङ्कग्राहितया तस्य हृद्गुहायां प्रदर्शनात् ।**
**उक्तलक्षणपूर्णस्य परमात्माभिधस्य च ॥ ५५२ ॥**

श्रुत्या प्रदर्शनात्स एव हि परं ब्रह्मेति पूर्वेणान्वयः ॥ ५५२ ॥

**राजा राजसु मुख्यो हि महाराज इतीर्यते ।**
**आत्माऽन्यात्मसु मुख्यश्च परमात्मा तथा प्रभुः ॥ ५५३ ॥**

परमात्माभिध इत्यत्रोक्तं परमात्मशब्दस्य अभिधात्वमवयवशक्तिप्रदर्शनेनापि प्रदर्शयन्नेव तस्य योगरूढतां उपपादयति **राजेति** । आत्मा अन्यात्मसु इति विग्रहः । अन्यात्मभ्यः परमो मुख्यः । तदुक्तं सुधायां 'शब्दान्तरसमभिव्याहारवशेन सामान्यशब्दस्य विशेषार्थस्य कल्पनीयत्वादि'ति ॥ ५५३ ॥

**यस्तु प्रस्तावितः पूर्वमात्मा नारायणः परः ।**
**परमात्मेति चात्रोक्तस्स एव स्यान्न संशयः ॥ ५५४ ॥**

**पूर्वं** लक्षणग्रन्थे । **अत्र** परीक्षाग्रन्थे । **स एवेति** । अन्यथाऽसांगत्यापत्तेरिति भावः ॥ ५५४ ॥

**तत्स ब्रह्मेति वाक्तत्तदभिधामाह नाभिदाम् ।**
**महेश्वरशिवश्रुत्योः पौनरुक्त्यभयादपि ॥ ५५५ ॥**

**तत्** उपक्रमपरीक्षोपसंहाराणामैकार्थ्यावश्यंभावात् । **स ब्रह्मेति वाक्** 'स ब्रह्मा स शिवः स हरिरि'त्युपसंहारवाक् । **तत्तदभिधामाह** ब्रह्मा शिवः ॥

इत्यादिशब्दैर्नारायण एवाभिधेयः परममुख्यवृत्या प्रतिपाद्य इति बोधयति । **नाभिदामिति** सामानाधिकरण्यबलेन शिवादिर्जीवैक्यमित्यर्थः । स्वरूपैक्यस्य बाधितत्वात् । विशिष्टयोरैक्यस्य मायिनाऽप्यनङ्गीकारात् । 'कथमेकत्वमनयोर्घटते विपरीतयोरि'ति तदुक्तेः । इतश्चैवमित्याह **महेश्वरेति** ॥ 'यः परः स महेश्वर' इत्युपसंहारोक्तमहेश्वरेत्यर्थः ॥ ५५५ ॥

**प्रागुक्तार्थोपसंहर्त्री महेश्वरमहीश्वरे ।**
**शयानमाह तस्यैक्ये कस्यासौ स्यान्महेश्वरः ॥ ५५६ ॥**

महेश्वरं अहीश्वरे इति छेदः । स्वयं चतुर्मुखाश्रितस्य रुद्रस्य महेश्वरत्वासम्भवात् । उपर्यपि 'हरिरि'ति हरेः प्रस्तावात् तत्रैवोक्तस्य परमत्वस्य स्वराडित्युक्तस्वातन्त्र्यस्य च रुद्रेऽयोगादित्यपि ग्राह्यम् ॥ ५५६ ॥

**विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ।**
**इत्यैक्योक्तेः परं चा(पुरैवा)न्या गतिमाह ततोऽपि न ॥५५७॥**

'पुरुष एवेदं सर्वं' इत्याद्यैक्यश्रुतीनां श्रुत्यैव सोपपत्तिकं गत्यन्तरोक्तेर्न स्वरूपैक्यमर्थ इत्याह **विश्वमिति** । अन्यथा विश्वान्तःपातिजडैक्यस्य परेणाप्यनङ्गीकारात्, यद्विश्वत्वेन प्रतीतं तत्पुरुष आरोपितमित्यर्थकरणे पदद्वयलक्षणापत्तेः इत्यादि दोषजातं न्यायामृते 'इदं सर्वं यदयमात्मे'त्यादिश्रुत्यर्थभङ्गे निरूपितमनुसन्धेयम् ॥ ५५७ ॥

**यद्विश्वं पुरुषाख्यं तमुपजीवति तत्सदा ।**
**विश्वं पुरुष इत्युक्तं यत्तदोर्नित्ययोगतः ॥ ५५८ ॥**

श्रुतेर्योजनां एकवाक्यत्वाय दर्शयति **यदिति** । पूर्वार्धे तच्छब्दोऽध्याहार्य इत्युपेत्याह **तत्सदेति** । अध्याहारे नियामकमाह **यत्तदोरिति** ।

उत्तरार्धे यच्छब्दश्रवणमेव नियामकमित्याशयः । तथा च राजा राष्ट्रमितिवत्स्वतन्त्र्यैक्यमेव श्रुत्यर्थ इति भावः ॥ ५५८ ॥

**श्रुत्यर्थमित्थमेवाहुः पुंक्लैब्याद्ये तु बिभ्यति ।**
**कश्छिन्द्याच्छ्रुतिसुन्दर्यास्सौन्दर्ये चरणद्वये ॥ ५५९ ॥**

ये इति उत्तरश्लोकोक्तान्मीमांसानिपुणान्विवेकिनः परामृशति । **इत्थमेव** हेतुहेतुमद्भावेनैकवाक्यतयैव । **पुंक्लैब्यात्** पररीत्या तदित्यस्य तमित्यर्थाश्रयणेन लिङ्गव्यत्ययदोषात् । इदमुपलक्षणम् । पूर्वार्धस्य, ऐक्यार्थवर्णनेन उत्तरार्धस्य उपजीव्योपजीवकभावलक्षणभेदार्थपरत्ववर्णनेन च वाक्यभेददोषात् परस्परं व्याघातेनाप्रामाण्याख्यदोषाच्चेत्यपि ग्राह्यम् । **बिभ्यति** । श्रुतेर्व्याहतार्थवर्णनस्य 'तत्प्रमाणस्य निन्दा च' इत्युक्तरीत्या भगवद्द्वेषपर्यवसायित्वेनानर्थहेतुत्वादिति भावः । **कः** उक्तानर्थाद्भीतः इत्यर्थः । **चरणौ छिन्द्यादिति** । पादयोर्व्याहतार्थद्वयवर्णनेनाप्रामाण्यापादनं सुन्दर्याः साध्व्याः पादच्छेदवन्महापातकमिति भावः ॥ ५५९ ॥

**अतश्श्रुत्यर्थमीमांसानिपुणानां विवेकिनाम् ।**
**मते नारायणो देवः परं ब्रह्म न चापरः ।**
**इति निर्णीयते नो चेच्छ्रुतिरेषा प्रकुप्यति ॥ ५६० ॥**

उपसंहरति **अत इति** । श्रुतिः तदभिमानिनी महालक्ष्मीः । **कुप्यति** स्वपतिनिन्दकाय दुर्वादिने तुभ्यमिति शेषः ॥ ५६० ॥

**देवानामवमोऽग्निर्वै विष्णुस्तु परमः प्रभुः ।**
**तदन्तरेण ब्रह्माऽऽद्यास्सर्वा अन्यास्तु देवताः ॥ ५६१ ॥**
**ऋग्वेदब्राह्मणं ह्यादावेवं तरतमत्वतः ।**
**देवान्सर्वान्विविच्योक्त्वा विष्णोः परमतां जगौ ॥ ५६२ ॥**

**तस्मात्तु परमं वस्तु न किञ्चिदपि शंसति ।**
**एते प्रधाना देवेषु तेष्वप्येषु क्रमः किल ॥ ५६३ ॥**

उक्तार्थे स्पष्टमृग्वेदब्राह्मणं अर्थतः पठति **देवानामिति** ॥ दिवु गताविति धातोः प्राप्यानामित्यर्थः । 'अर्चिरादिना तत्प्रथितेरि'ति तस्यैव प्रथमप्राप्यत्वोक्तेः । अन्यथा अग्न्यपेक्षयाप्यवमानां देवानां विद्यमानत्वेन विरोधापत्तेः । सर्वशब्दस्य संकोचवारणार्थं ब्रह्माद्या इत्युक्तम् । **अन्याः** भिन्नाः अन्योन्यं अवमत्वपरमत्वरूपतरतमभाववन्तश्च ॥ ५६१ ॥ ॥ ५६२ ॥ ॥ ५६३ ॥

**अतो विष्णुः परं ब्रह्म सर्वश्रुतिमतादभूत् ।**
**विष्णोरन्यत्परं ब्रह्म न श्रौतमिति चाप्यभूत् ।**
**वेदव्याख्यानरूपं यद्ब्रुवन्ति ब्राह्मणं बुधाः ॥ ५६४ ॥**

**अतः** ऋग्वेदब्राह्मणेन वेदव्याख्यानरूपेण प्रतिपादितत्वात् । इमौ प्रयोगावभिप्रेतौ । विष्णोः सर्वोत्कर्षः सर्वश्रुतिसंमतः । तद्व्याख्यानब्राह्मणवाक्यसंमतत्वात् । यो यद्व्याख्यानसंमतः स तद्व्याख्येयसंमतः यथा संप्रतिपन्नः । अन्यदेवतासर्वोत्तमता श्रुतिविरुद्धा तद्व्याख्यानब्राह्मणवाक्यविरुद्धत्वात् । पूर्ववत्सामान्यव्याप्तिः । न च हेतू असिद्धे इत्याह **ब्रुवन्ति बुधा इति** । ॥ ५६४ ॥

**उक्तार्थस्य समस्तस्य प्रमाणेन प्रसिद्धताम् ।**
**वै शब्देनाह तद्वक्ति सर्वमानैश्च सिद्धताम् ॥ ५६५ ॥**
**श्रुत्या स्मृत्याऽनुमानेन प्रत्यक्षेण च योगिनाम् ।**
**विष्णोस्सर्वोत्तमत्वं हि सिद्धमित्याह सा श्रुतिः ॥ ५६६ ॥**

दार्ढ्यहेतुं सर्वप्रमाणसंवादं वैशब्दो वक्ति इत्याह **उक्तेति** ॥ ५६५ ॥ ॥ ५६६ ॥

**अतस्त्रिदेवतैक्यं स्यान्न पुराणशतैरपि ।**
**विरोधे त्वनपेक्षं स्यादिति यत्सूत्रशासनम् ॥ ५६७ ॥**

मा भूच्छ्रुत्या त्रिदेवतैक्यसिद्धिः पुराणैस्तु कुतो न स्यादित्यत आह **अत इति** । श्रुतिविरुद्धार्थे पुराणशतानामपि न प्रामाण्यमिति भावः । अत्रार्थे जैमिनिसूत्रं पठति **विरोध इति** । श्रुतिविरोधे स्मृतिप्रामाण्यमनपेक्ष्य-मनादरणीयं स्यात् । हि यस्मादसति श्रुतिविरोधे मूलश्रुत्यनुमानमुक्तं न तु सतीति सूत्रार्थः ॥ ५६७ ॥

**यत्ता लक्ष्म्यादिभृग्वन्ता देवा देव्यश्च मध्यगाः ।**
**तत्ताः स्त्रीपुंसयोश्शक्तदेवतोक्त्या श्रुतिर्जगौ ॥ ५६८ ॥**

**यत्** यस्मात् । **ताः** तारतम्यस्तोत्रे प्रकृतिरित्यारभ्य भृग्वन्ता देवता उक्ताः देवा देव्यश्च । **मध्यगाः** अग्निविष्ण्वोः । **तत्** सर्वासां देवदेवीनां संग्रहार्थम् । कथं तत्संग्रह इत्यत आह **देवतोक्त्या** देवतापदेन श्रुतिस्ता जगौ इति । स्त्रीपुंसयोः शक्तेति हेतुगर्भविशेषणम् । नित्यसापेक्षत्वान्न शक्तपदमसमर्थम् । तेन समासोपपत्तिः ॥ ५६८ ॥

**नान्वश्नुवन्ति ते विष्णो महित्वमितरे त्विति ।**
**यतश्श्रुतिरतोप्यैक्यं तेन नान्यस्य कस्यचित् ॥ ५६९ ॥**

ऐक्यप्रतिषेधपरां स्पष्टां श्रुतिमुदाहरति **नेति** । परो मात्रयेति श्रुतेरर्थ-तोऽनुवादोऽयम् । **मात्रया** त्रिविधेयत्ताया **परो**ऽतिक्रान्तोऽसि । तन्वा **वृधान** व्याप्त । तव महिमानं इतरे नाप्नुवन्ति । रमाया गुणतः परिच्छेद-सद्भावात् ब्रह्मादीनां परिच्छिन्नदेहवत्त्वाच्चेति भावः ॥ ५६९ ॥

**जातो वा जायमानो वा विष्णो कश्चित्पुमांस्तव ।**
**महिम्नोऽन्तं परं नापेत्याह काचिच्छ्रुतिः प्रभुम् ॥ ५७० ॥**

स्यादेतत् । न वयं तत्त्वंपदयोः शक्तिमाश्रित्य तद्वाक्यस्यैक्यपरत्वं ब्रूमः । किं नाम विरुद्धाकारत्यागेन । अतो नानुपपत्तिरित्यतः किं परित्यागोऽनित्यत्वेनोत मिथ्यात्वेन । नाद्यः श्रुत्या भगवन्महिम्नो नित्यत्वावगमादित्याह **जात इति** । 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमापे'ति श्रुतेरर्थानुवादोऽयम् । जनिष्यमाण इत्यपि ग्राह्यम् । **पुमान्** चेतनः । **अन्तं नाप** नाशं इयत्तां वा न जानाति । अन्तस्यैवाभावादिति हृदयम् । तेन स्यादुत्तरत्र तथा कश्चित्समर्थ इति शङ्काऽनवकाशः । अनेन भगवद्गुणानामन्तराहित्यलक्षणनित्यत्वापरिमितत्वयोः सिद्धिः ॥ ५७० ॥

**तस्मान्नित्योऽस्य महिमा न कदाऽपि निवर्तते ।**
**सत्यस्सो अस्य महिमेत्युक्तेश्च न निवर्तते ॥ ५७१ ॥**

नापि द्वितीय इत्याह **सत्य इति** । 'गृणे शवो यज्ञेषु विप्रराज्ये' इति वाक्यशेषः । अस्यार्थस्तत्वोद्योतटीकायामुक्तः । 'स जगत्सृष्ट्यादिलक्षणोऽस्य परमेश्वरस्य महिमा सत्यः तं विप्रप्रधानेषु यज्ञेषु शवः सुखमुद्दिश्य स्तौमि' इति । **उक्तेः** सोपपत्तिकवचनात् । सुखोद्देश्यकस्तुतिकर्मत्वरूपसत्यत्वसाधकयुक्तेरपि कथनात् । **न निवर्तते** न बाध्यते ॥ ५७१ ॥

**अतस्त्वन्निर्गुणत्वं तु नास्य स्याद्धि कदाचन ।**
**तस्मात्त्रिगुणशून्यत्वान्निर्गुणोऽप्ययमेव हि ॥ ५७२ ॥**

**त्वदिति** । त्वदभिमतेत्यर्थः । **हीति** । गुणानां नित्यत्वेन सत्यत्वेन च प्रमाणप्रसिद्धेः । **तस्मात्** त्वदुक्तनिर्गुणत्वायोगात् । नारायणे निर्गुणपद-

प्रवृत्तिनिमित्तं प्रामाणिकत्वादस्मदुक्तमेव ग्राह्यमित्याह **त्रिगुणशून्यत्वादिति** । ॥ ५७२ ॥

**ब्रह्मायं गुणपूर्णत्वात्परमश्चोत्तमत्वतः ।**
**तन्निर्गुणं च परमं ब्रह्म नारायणस्सदा ॥ ५७३ ॥**

ब्रह्मशब्दप्रवृत्तौ निमित्तं गुणपूर्णत्वं न तु लोकरूढ्या जातित्वजावत्वादिकम् । **उत्तमत्वतः** क्षराक्षराभ्यामिति शेषः । फलितमाह **तदिति** । तस्मात्प्रवृत्तिनिमित्तत्रयात् ॥ ५७३ ॥

**न च तद्गुणमिथ्यात्वान्निर्गुणाऽवसरस्तव ।**
**नित्यस्य ब्रह्मवन्मिथ्यात्वस्यैवानुपपत्तितः ॥ ५७४ ॥**

ब्रह्मगुणा न मिथ्या नित्यत्वाद्ब्रह्मवत् इत्युपपत्तिविरुद्धं च गुणमिथ्यात्वमित्याह **अनुपपत्तितः इति** ॥ ५७४ ॥

**सत्यस्सो अस्य महिमेत्याह तत्सत्यतां च वाक् ।**
**अतस्त्वन्निर्गुणोक्तिश्च त्रिगुणानां विमोचिका ॥ ५७५ ॥**

पूर्वोक्तश्रुतिविरुद्धं चेत्याह **सत्य इति** ॥ **अतः** श्रुतियुक्तिविरुद्धत्वात् । ॥ ५७५ ॥

**नित्यस्सत्यश्च महिमा कथं तद्भासतामियात् ॥ ५७६ ॥**

**तद्भासतां** निर्गुणपदार्थनिषेधप्रतियोगिगुणात्मकताम् ॥ ५७६ ॥

**नञा परशुना छिन्ने पदे त्वां नानुयाति सा ।**
**गुणसत्यत्वनित्यत्वकारूत्तेजितमूर्तिना ॥ ५७७ ॥**

केवलो निर्गुणश्चेति वाक्ये केवलो अनिर्गुणश्चेति पदच्छेदोऽपि 'एङः पदान्तादति' इति सूत्रात्कर्तुं शक्यः । एवं च **नञा** नञ्समासाश्रयणेन

**पदे छिन्ने** पदच्छेदे कृते सति **सा** अनिर्गुण इति वाक् **त्वां** नैर्गुण्यवादिनं **नानुयाति** तवानु अनुकूलमर्थं **न याति** न गमयति किं तु **नानु** प्रतिकूलमेवार्थं **याति** अतिशयेन गमयति सद्गुणबृंहितत्वमेव समर्थयति । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायात् । नञोऽभावो विरोधश्चार्थः । एवं पदच्छेदे साधकमाह **गुणसत्यत्वनित्यत्वेति** । **कारुः** शिल्पी । 'कारुस्तु कारके शिल्पे विश्वकर्मिणि शिल्पिनि' इति हेमन्ते । अत्र नञ् परशुः । गुणसत्यत्वनित्यत्वे कारुः । उत्तेजनं संवादेन दार्ढ्यसंपादनम् । अस्मन्मते तु **पूर्वोत्तरानुगुण्यात्** स्वरसत एव अनिर्गुण इति पदस्वरूपस्य विद्यमानत्वेन पुनर्नञा योजनाप्रसक्तेरेवाभावेन, अस्मदनुयानं सुखेनैव निर्वहतीति भावः ॥ ॥ ५७७ ॥

**एवं चानिर्गुणत्वार्थां यत्ते निर्गुणतां क्षिपेत् ।**
**अतस्तद्गुणमिथ्यात्वसाधकं च न किञ्चन ॥ ५७८ ॥**

अनेन नैर्गुण्यस्य आगमासिद्धत्वं तद्विरुद्धत्वं चोभयमुपपादितमित्याह **एवमिति** ॥ ५७८ ॥

**तदुक्तगुणसत्यत्वनित्यत्वे नौपचारिके ॥ ५७९ ॥**

कालत्रयेऽपि ब्रह्मवदेव सत्यत्वबोधिकानां सगुणश्रुतीनां बाधासंभवान्नोपचरितार्थत्वकल्पनमित्याह **तदिति** । एवमेवोपचारकल्पने ब्रह्मणः सत्यत्वनित्यत्वयोरपि तथात्वं स्यादिति भावः ॥ ५७९ ॥

**नेहनानेत्यादिवाक्यमपि तस्मान्न तान्क्षिपेत् ।**
**नित्यं सत्यं परं ब्रह्म, किं शून्यत्वश्रुतिः क्षिपेत् ॥ ५८० ॥**

**तस्मात्** सत्यत्वेन नित्यत्वेन च गुणानां श्रुत्यैव प्रमितत्वात् । **तान्** गुणान् । **क्षिपेत्** निषेधेत् । किञ्चनशब्देन गुणाननूद्य नेहनानास्तीति

निषेधः किं न स्यादिति चेत् एवं तर्हि 'असदेवेदमग्र आसीत्' इति शून्यश्रुतिः ब्रह्मापि निषेधेदित्यतिप्रसङ्गमाह **किमिति** । मायाशबलस्य निषेधाङ्गीकारादिष्टापत्तिरित्यत आह **परमिति** । ननु 'ब्रह्मविदाप्नोति परमि'ति प्रकृतस्य परब्रह्मणः सत्यमिति सत्यत्वेन श्रुतत्वान्न तस्य बाधो वाऽनन्तमिति नित्यत्वेन श्रुतत्वान्न विनाशो वा संभवतीति न शून्यश्रुत्या तन्निषेधो युक्तः । औपनिषदत्वान्न ब्रह्मणः प्रमाणान्तरेण प्राप्तिः संभाविनी । श्रुत्या प्राप्तस्य श्रुत्या निषेधे श्रुतेरुन्मत्तप्रलापत्वप्रसङ्गश्च इति चेत्सममेतत्सर्वं गुणानामपीति भावः ॥ ५८० ॥

**किं च ब्रह्मणि तद्वाक्यं नानाभूतं निषेधति ॥ ५८१ ॥**

गुणनिषेधकत्वेऽन्तरङ्गविरोधमाह **किञ्चेति** । **ब्रह्मणि** इहपदार्थे **नानाभूतं** भिन्नम् । उत्तरवाक्याद्गुणस्तोममित्यस्योत्कर्षः । भेदविशिष्टगुणस्तोमस्य निषेधो गुणस्तोमरूपविशेष्यस्योक्तरीत्या प्रमितत्वेन तन्निषेधे बाधात् विशेषणं भेदमुपसंक्रामति । 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतो विशेष्ये बाधादि'ति न्यायात् । 'न जीर्णमलवद्वासाः स्नातकः स्यादि'त्यादौ दर्शनात् । अत एवोक्तं 'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इति । 'एकदेशापवादेन कल्प्यमाने तु बाधके ॥ न सर्वबाधनं युक्तमिति न्यायविदः स्थिताः' इति च । गुणानां स्वरूपेण निषेधे नानेति व्यर्थं स्यादिति भावः । ॥ ५८१ ॥

**अभिन्नसुगुणस्तोममन्वजानाद्धि सा स्फुटम् ।**
**न चेद्ब्रह्मणि जीवैक्यमपि शक्यमपोहितुम् ॥ ५८२ ॥**

विशिष्य निषेधः शेषविध्यनुज्ञापक इति **न्यायेन पर्यवसितमाह** **अभिन्नेति** । यस्तु वैयात्याद्भेदमात्रनिषेधकत्वमनङ्गीकृत्य विशेष्यभूतधर्म-

निषेधकत्वं ब्रूते तस्यातिप्रसङ्गमाह **न चेदिति** । **ऐक्यमिति** । तस्यापि ब्रह्मधर्मत्वाविशेषादिति भावः ॥ ५८२ ॥

**अभिन्नधर्मधर्मित्वमपि शक्यं तवैक्यवत् ।**
**एकशेषोऽपि तद्वन्न लोकमर्यादयाऽपि न ॥ ५८३ ॥**
**पर्यायशब्दवाच्यत्वादज्ञातत्वाद्विवादतः ।**
**ऐक्यं न ब्रह्ममात्रं ते गुण्यभिन्नगुणस्तथा ॥ ५८४ ॥**

एकधाऽनुद्रष्टव्यमिति श्रुतिबलादैक्यस्य ब्रह्मस्वरूपत्वोपगमान्नैक्यनिषेधो युक्त इति चेत्, 'विज्ञानमानन्दं ब्रह्मे'ति श्रुतिबलाज्ज्ञानानन्दादिगुणानामपि ब्रह्मस्वरूपत्वसिद्धेः कथं तन्निषेधः । ननु ज्ञानानन्दादिधर्माणां न ब्रह्मणाऽभेदः । तथात्वे धर्मधर्मिभावानुपपत्तेरिति चेत्तवैक्यवदेवोपपत्तेरिति प्रतिबन्दीं गृह्णाति **अभिन्नेति** । तदुक्तमनुव्याख्याने 'इति पृष्टे तदैक्यस्य गतिरेव न विद्यते' इति । ऐक्यस्य ब्रह्मणाऽभेदमङ्गीकुर्वाणेनापि परेण न तस्य ब्रह्ममात्रत्वं वक्तुं युक्तम् । भेदव्यवहाराणामनेकेषां सद्भावेन तन्निर्वाहानुपपत्तेरित्याह **एकशेष इत्यादिना** । तन्मात्रत्वे अन्यतरस्यैव परिशेषः स्यान्न तूभयोरपि । एवं ब्रह्मैक्यशब्दयोः पर्यायेणैव प्रयोगः स्यान्न सहप्रयोगार्हत्वम् । ब्रह्मणः स्वप्रकाशत्वेन ज्ञातत्वेऽप्यैक्यस्याज्ञातत्वं न स्यात् । ब्रह्मस्वरूपविषयेऽविवादवदैक्येऽपि विवादो न स्यात् इत्यादिप्रसङ्गाः स्युरित्याह **पर्यायेत्यादिना** । तत्र यस्तव परिहारः स ममापि इत्याह **तथेति** । ॥ ५८३ ॥ ५८४ ॥

**तच्च ब्रह्मणि सामर्थ्यविशेषाद्धटते मम ।**
**तव तूक्तैक्यवादेऽस्मिन्निर्विशेषमतं गतम् ॥ ५८५ ॥**

विशेषशक्तिमङ्गीकुर्वाणस्य **मम** भेदव्यवहाराणां विशेषेणैव निर्वाहात् **तत्** अभिन्नधर्मधर्मित्वं घटते । तव तु **उक्तैक्यवादे** ब्रह्मण ऐक्यस्य

चैक्यमिति वादे, उक्तातिप्रसङ्गपरिहारार्थं अकामेनापि विशेषाङ्गीकारे समापतिते च सतीति योज्यम् । निर्विशेषमतहानिरित्याह **निर्विशेषेति** ॥ ५८५ ॥

**न विद्यते विशेषस्तु यस्मादित्यखिलेशताम् ।**
**निर्विशेषश्रुतिस्तस्मात्प्राहास्माकं तत्रापि च ॥ ५८६ ॥**

ननु भेदव्यवहारनिर्वाहार्थमपि ब्रह्मणि कथं विशेषाभ्युपगमः निर्विशेषश्रुतिव्याकोपादिति चेन्निर्विशेषत्वविशेषोऽपि तस्य कथम् । सोऽपि त्यज्यते श्रुतिविरोधादिति चेत्सुतरां सविशेषतासिद्धिः । अभावाभावस्य भावरूपत्वात् । तर्हि निर्विशेषश्रुतेः कोऽर्थ इत्यत आह **अखिलेशतामिति** । यथोक्तं भागवते 'निर्विशेषाय साम्याय नमो ज्ञानघनाय च । क्षेत्रज्ञाय नमस्तुभ्यं **सर्वाध्यक्षाय** साक्षिणे' इति । **तस्मात्** निर्विशेषपदेन पदार्थशक्तिरूपविशेषस्य निषेद्धुमशक्यत्वात् आधिक्यस्य वा अधिकवस्तुनो वा विशेषस्यैव निषेद्धव्यत्वप्राप्तेरिति भावः ॥ ५८६ ॥

**व्यवहारादनुगतात्सर्वत्रानुगता सदा ।**
**जातिश्चैकाखिलार्थेषु सत्ताद्या वर्तते किल ॥ ५८७ ॥**

ननु तथाऽपि धर्मधर्म्यभेदो नाङ्गीकारार्हः । जातिरूपधर्मस्तावत्स्वाश्रयेषु धर्मिष्वनुगत एकश्च । स चेद्धर्मिणोऽभिन्नस्तर्हि यदभिन्नाभिन्नमिति न्यायेन धर्मिणामप्यन्योन्यं अभेदः प्राप्नोति न च स इष्ट इति चेत्स्यादेष दोषोऽनुगतजातिमभ्युपगच्छतां तार्किकाणाम् नास्माकम् । अस्माभिरनुगतजातेरनङ्गीकारात् । यथोक्तं 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि' इति । नन्वनुगतव्यवहारान्यथोपपत्त्याऽनुगतजातिरुपेयेति तार्किकमतमाशङ्कते व्यवहारादनुगतादिति । **अखिलार्थेषु** द्रव्यगुणकर्मसु । किलापहासे ॥ ५८७ ॥

**इति ब्रवीति कोऽप्यज्ञस्स प्रष्टव्यो विवेकिभिः ।**
**व्यवहारानुगमनं नाम तस्यैकता किमु ॥ ५८८ ॥**

**प्रष्टव्यः** इत्युपलक्षणम् दूषणीयश्च । तदुक्तेरत्यन्तासंबद्धत्वज्ञापनाय **प्रष्टव्य** इत्येवोक्तम् । अर्थापत्तिः खलु सामान्यसाधन उपन्यस्ता परेण । तत्र व्यवहारानुगम आक्षेपकः सामान्यमाक्षेप्यम् । आक्षेपकस्य प्रमितत्वमन्यथाऽनुपपद्यमानत्वं आक्षेप्यस्योपपादकत्वं प्रमाणाविरुद्धत्वं चेत्यर्थापत्तिसामग्री । न च साऽत्रास्तीति सर्वाङ्गविकलोऽयमर्थापत्त्याभास इति वक्तुं आक्षेपकस्वरूपं तावद्विकल्पयति तस्येत्यादिना । **तस्य** व्यवहारस्य ॥५८८॥

**उत तस्यैकधर्मेणावच्छिन्नत्वमुदीर्यते ।**
**एकाकारत्वमथवा वक्तव्यं नापरं हि तत् ॥ ५८९ ॥**

**एकधर्मेण** अयं घटः इति व्यवहाराणां एकेन घटत्वरूपधर्मेण **अवच्छिन्नत्वं** व्यावर्तितत्वम् । **एकाकारत्वं** एकानुपूर्व्यवच्छिन्नत्वम् । ॥ ५८९ ॥

**नाद्यः प्रयोजकासिद्धेर्वादिनोरुभयोरपि ।**
**प्रतिवादिमतासिद्धेर्द्वितीयोऽपि न शोभते ॥ ५९० ॥**

**प्रयोजकासिद्धेः** व्यवहाराणां बहुकर्तृकत्वेन, एककर्तृकत्वेऽपि कालादिभेदेन, भेदस्यैव प्रमितत्वेनाक्षेपकस्योभयमतरीत्याऽसिद्धेः । **प्रतिवादीति** । सामान्यसिद्धौ व्यवहारस्यैकधर्मावच्छिन्नत्वसिद्धिः तेनैव च सामान्यसिद्धिरित्यन्योन्याश्रयादिति भावः । उपलक्षणम् । वादिमतेत्यपि ग्राह्यम् । सोऽप्यन्योन्याश्रयमनुत्तीर्णो प्रतिवादितुल्य एव ॥ ५९० ॥

**अप्रयोजकतादोषस्तृतीयं पक्षमाक्षिपेत् ।**
**नानासमानव्यवहारेण धर्मोऽपि तादृशः ॥ ५९१ ॥**

**सिद्धचेत्परं तस्य सर्वत्रैकता किंकृता वद ।**
**यक्षानुरूपो हि बलिः प्राचां वाचमनुस्मर ॥ ५९२ ॥**

व्यवहारो भिन्नभिन्नः समानाकार इति तृतीयपक्षो यद्यपि प्रमितस्तथाऽपि अन्यथोपपन्नो नाक्षेप्यं प्रयोजयतीत्याह **अप्रयोजकतेति** । **आक्षिपेत्** प्रतिक्षिपेदित्यर्थः । 'इति व्युत्पत्तिरपि हि सादृश्येणैव गम्यते' इति भगवत्पादीयोक्तिमनुरुध्याह **समानेति** सदृशेत्यर्थः । **तादृशः** तत्सदृशः । तथा च सादृश्येणैव सर्वोपसंहारेण व्याप्तिशक्त्यादिव्यवहारोपपत्तेर्न तदर्थं व्याप्यतावच्छेदकस्य शक्यताऽवच्छेदकस्य वैकत्वाभ्युपगमोऽपेक्षित इति भावः ॥ ५९१ ॥ ५९२ ॥

**अखण्डजातेरेकैको यद्यंशो व्यक्तिषूच्यते ।**
**घटास्तर्हि घटांशाः स्युर्घटस्तु स्यान्न कश्चन ॥ ५९३ ॥**
**संपूर्णपटताशून्यपटांशेष्वंशधीरिव ।**
**संपूर्णजात्यनाधारे स्यादंशत्वप्रमा परम् ॥ ५९४ ॥**

संपूर्णजात्याधारत्वमेकैकस्या व्यक्तेर्नोच्यते किंत्वखण्डाया एकस्या जातेरनेकेष्वंशेष्वेकैकैकांशस्यैवेति तन्मात्रसिद्धेनानुगतव्यवहारेण सामान्यसिद्धिरविकलेति पक्षान्तरमाशङ्कते **यदीति** । दूषयति **तर्हीति** । अस्मिन्पक्षे अयं घटः अयं च घट इत्यनुगतव्यवहारो नैव सिद्धयति । किं नाम अयं घटस्यैकोंशोऽयं पुनरपरोंऽश इत्येव । यथा पटांशेषु तन्तुषु । एवं चानुगतव्यवहारस्याभावे तद्बलेन न सामान्यसिद्धेः प्रत्याशेति भावः ॥ ५९३ ॥ ॥ ५९४ ॥

**आकाशांशेषु चाकाशशब्दोक्तिरुपचारतः ।**
**अवकाशप्रदत्वाख्ययोगसंभवतोऽपि वा ॥ ५९५ ॥**

चस्त्वर्थः । तेन घटादिषु तथोक्तिर्व्यावर्त्यते । आकाशस्य व्याप्तत्वेन तदंशेषूपचारेण तच्छब्दव्यवहारसंभवः । घटादिस्तु न तथा । एवं आकाशशब्दवद्घटादिशब्दा न यौगिका इति वैषम्यमिति भावः ॥ ५९५ ॥

**अनेकव्यञ्जकव्यंग्या यथैका जातिरुच्यते ।**
**तथाऽनेकघटत्वेभ्यो वागेकैव प्रवर्तताम् ॥ ५९६ ॥**

किञ्चास्तु वाऽनुगतव्यवहारः । तथाऽपि न त्वन्मतेऽनुगतजातिसिद्धिरित्याह **अनेकेति** । जातेर्व्यञ्जकत्वेन त्वदभ्युपगता व्यक्तयो नाना यथा, तथा व्यवहारस्यैकत्वेऽपि तन्निमित्तानि जातयो नाना सन्तु । न तदेकत्वसिद्धिरिति भावः ॥ ५९६ ॥

**शब्दैक्यं च न ते पक्षे ततस्तत्रापि चैकताम् ।**
**स्वनियं(न्त्यानि)तुर्नियम्योऽसौ न सहेतेति मे मतिः ॥ ५९७ ॥**

नियम्यस्य व्यवहारस्यैकत्वेऽपि नियामकजातेरनुगतत्वाभावं पररीत्या दृष्टान्तप्रदर्शनेन दर्शयति **शब्देति** ॥ ते शब्दानित्यत्ववादिनः । व्यवहारो नियम्य एकः । नियन्तारः शब्दा अनेके । तथा असौ व्यवहारः स्वयमेकोऽपि स्वनियन्त्र्या जातेरेकत्वं न सहेत । नियम्यस्यैकत्वे नियन्तुरेकत्वमिति नियमस्य त्वयैव शब्दानित्यत्वं अत एव तदनेकत्वं वदता त्यक्तत्वादिति भावः ॥ तन्नियमादरणे शब्दस्य मन्मत इव नित्यत्वाङ्गीकारापत्तेरिति भावः । ॥ ५९७ ॥

**कारणत्वान्यनेकानि तत्र तत्र तवापि च ।**
**तदवच्छेदकस्यापि कथं न स्यादनेकता ।**
**यो गुरूणां गुरुस्तस्य गुरुतैव हि शोभते ॥ ५९८ ॥**

**तत्र तत्र** तत्तद्दण्डादिषु । कारणत्वानि तत्तद्धटनियतपूर्ववृत्तित्वरूपाणि । **अनेकानीति** । प्रतिकार्यं भिन्नानि । न हि एको दण्डः सर्वघटपूर्ववृत्तिरिति सम्भवतीति भावः । चेत्यनेन ममापीति समुच्चयः । मया कारणत्वं शक्तिः सा च प्रतिव्यक्ति नानेत्यङ्गीकारात् । यथोक्तं तर्कताण्डवे 'मन्मते शक्तिवज्जातेरपि प्रतिव्यक्तिभिन्नत्वाच्चे'ति । कारणत्वानां शक्तीनामनेकत्वे तदवच्छेदकदण्डत्वादिजातीनामनेकता नियतेत्याह **तदिति** । गुरूणां गुरोः, गुरुत्वं क्लृप्तम् । तथाऽवच्छेद्यानामनेकत्वे तदवच्छेदकानामप्यनेकत्वं क्लृप्तमेवेति न तद्दोष इत्याह **य इति** ॥ ५९८ ॥

**व्यञ्जकानुगतोक्तिश्च जातिष्वनुगतैकवाक् ।**
**न किलैकेन नियता मध्ये यन्त्रेकता कुतः ॥ ५९९ ॥**

अनुगतव्यवहारः आकारव्यक्तिजातित्रितयसाधारणः । तत्र जातिव्यञ्जकेष्वाकारेष्वनुगतव्यवहारसिद्ध्यर्थं आकारत्वं नामानुगतधर्मो न स्वीकृतः । एवं जातिषु तदर्थं जातित्वं नामानुगतो धर्मोऽपि । मध्ये व्यक्तिष्वेव परं अनुगतव्यवहारनियामकतयाऽनुगतजात्यङ्गीकारो निर्मूलः । अर्धजरतीयापत्तेरित्याह **व्यञ्जकेति** ॥ ५९९ ॥

**प्रलये सर्वदेशे च जातिर्नित्याऽस्ति चेत्तदा ।**
**व्यक्त्या नायुतसिद्धा सा याऽवश्यं नापराऽऽश्रया ॥ ६०० ॥**

इदानीं परप्रक्रिययैव जातिं दूषयति **प्रलय इति** । एषा हि परस्य प्रक्रिया । 'जातिव्यक्त्योः समवायः । तत्र जातिर्नित्या । तदाश्रया घटादिव्यक्तयः प्रलये नश्यन्ति । अयुतसिद्धयोः समवायः । ययोर्मध्य एकमविनश्यदवस्थं अपराश्रितमेवावतिष्ठते तावयुतसिद्धौ' इति । एवं समवायस्यैकत्वेन य एवाकाशे शब्दसमवायः स एव व्यक्तौ जातिसमवाय

इति जातेः सर्वगतत्वं च लभ्यते । तत्र तावज्जातेर्व्यक्त्या समवायो दुर्निरूपः । तयोरयुतसिद्धत्वाभावात् । न हि पटस्तन्तुष्विव, प्रलयेऽपि नित्या सर्वगता च जातिर्व्यक्त्याश्रिततयाऽवतिष्ठत इति संभवति । व्यक्तीनां नाशात् । संबन्धस्यासंभवेन व्यक्त्याश्रितत्वस्यैवासंभवेऽनेकानुगतत्वरूपलक्षणस्य सुतरामसंभवेन न जातिसिद्धिः । तदेतदाह **नेति** । ॥ ६०० ॥

**अभावेषु न किञ्चित्ते विशेषेषु न किञ्चन ।**
**एकं नियामकं तस्मात्ततोऽन्यत्रापि तद्वृथा ॥ ६०१ ॥**

**ते** तव मतेऽपि । **किंचन** अभावत्वविशेषत्वादिजातिर्वाऽन्यः कोऽप्यनुगतधर्मरूपनियामको वा । **तस्मात्** नियमस्य व्यभिचारात् । **अन्यत्रापि** द्रव्यगुणकर्मसु अपि । **वृथा** सादृश्येनैव सर्वत्र व्याप्त्यादिग्रहोपपत्तेः ॥ ६०१ ॥

**बहुकृद्बहुताव्याप्तस्तच्छून्यो याचते हि ताम् ।**
**एकः कुठारो यत्कार्यलक्षे व्यापारलक्षवान् ॥ ६०२ ॥**

युक्त्याऽपि जातेरनेकत्वं सिध्यतीत्याह **बहुकृदिति** ॥ एतद्घटत्वं तद्घटनिष्ठघटत्वादन्यत् तज्जन्यव्यवहारभिन्नव्यवहारजनकत्वात् कुलालजन्यघटभिन्नपटजनककुविन्दवत् इति प्रयोगोऽभिप्रेतः । **तच्छून्यो** बहुताशून्यः एको । **याचते** नियमेनापेक्षते । लक्षशब्दस्य बहुत्वमर्थः । कुठारस्यैकत्वेऽपि नानावृक्षच्छेदनार्थं भिन्नभिन्नदारुसंयोगाख्यव्यापारबहुत्वं नियतमिति भावः । घटत्वानि, नाना, विभिन्नकार्यकारिघटाश्रितत्वात् । नानावृक्षच्छेदसाधनपरश्वाश्रितदारुसंयोगवदित्येवमत्रापि प्रयोग ऊह्यः ॥६०२॥

**तस्मादनेककार्येषु कस्मादेको विमृग्यते ।**
**तत्तद्व्यक्त्यन्वयी सोऽपि तत्तत्कर्ता यतोऽन्ततः ॥ ६०३ ॥**

निगमयति **तस्मादिति** । किमाक्षेपे । **विमृग्यते** प्रमाणबाधितोऽपि कल्प्यते । तत्तदित्युपनयः ॥ ६०३ ॥

**अनुगतजातिभङ्गः ॥**

**अतो धर्मस्य धर्म्यैक्यं धर्मिणां चैकता भवेत् ।**
**इत्यादिदोषैर्दूष्यं न पोष्यमेवाखिलैर्बुधैः ॥ ६०४ ॥**

**अतः** जातेः ऐक्यस्य खण्डनात्, यावद्द्रव्यभाविधर्माणां जात्यादीनां धर्म्यभेदेऽपि विशेषबलेन भेदव्यवहाराणां निर्वाहसमर्थनाच्च । धर्म्यैक्यं दूष्यं नेत्यन्वयः । **एकतेति** । यदभिन्नाभिन्नं इति न्यायेनेति भावः । आदिपदेन भेदकार्यव्यवहारानुपपत्त्यादयो ग्राह्याः । **पोष्यमेव** श्रुत्या लोकव्यवहारेण च प्रमितत्वादादरणीयमेव ॥ ६०४ ॥

**एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ।**
**इति श्रुतेर्घटो नील इति व्यवहृतेरपि ॥ ६०५ ॥**

श्रुतिं प्रमाणयति **एवमिति** । 'यथोदकं दुर्गे वृष्टं पर्वतेष्वनुधावति' इति पूर्वार्धः । अयं श्रुत्यर्थः । पर्वतशिखरे वृष्टं जलं यथाऽधःप्रदेशेष्वनुधावति । एवं भगवतो धर्मानानन्दादीन् पृथक् भगवतो भिन्नत्वेन जानन् मिथ्याज्ञानी, भेददर्शनानन्तरमेव अविलम्बेनेति यावत् अनर्थे पतति' इति । यथोक्तं सुधायां जन्माधिकरणे 'अत्र हि ब्रह्मधर्माणां पृथक्दर्शननिन्दयाऽभेदोऽवगम्यते' इति । लोकव्यवहारं प्रमाणयति **घट इति** ॥

यथा सामानाधिकरण्यव्यवहारेणैक्यसिद्धिस्तत्र, तथाऽत्रापि 'विज्ञानमानन्दं ब्रह्मे'ति श्रौतसामानाधिकरण्योक्तेरैक्यसिद्धिरिति भावः ॥ ६०५ ॥

**नेक्षेतोद्यंतमितिवद्दृश्मात्रस्य निषेधने ।**
**नार्थासत्त्वमिति प्राह विपश्चित्किल कश्चन ॥ ६०६ ॥**

आह । नानया श्रुत्या पृथक्त्वस्यासत्त्वं सिध्यति । तद्दर्शनस्यैवात्र निन्दनात् । तेन च दर्शनमसदित्यस्तु । तद्विशेषणस्य पृथक्त्वस्य किमायातम् । मा हि भूत् 'नेक्षेतोद्यन्तमादित्यमि'ति आदित्योदयदर्शननिन्दयाऽऽदित्योदयस्यासत्त्वसिद्धिरिति ॥ **कश्चन** तार्किकः । मायी च । विपश्चिदित्यपहासः ॥ ६०६ ॥

**तस्यापि सूते युक्तिस्त्री सदुत्तरकुमारकम् ।**
**यः परेषां कण्ठमणिं जिघृक्षति रणांकणे ॥ ६०७ ॥**

साहित्यमुद्रया परिहारं प्रतिजानीते **तस्यापीति** । अत्र युक्तिस्त्री विराटराजपत्नी । **कुमारकः** सदुत्तरम् । **कण्ठमणिः** प्रत्युत्तरवाग्विलासः । गोग्रहणं श्रुतेः स्वार्थात्प्रच्यावनम् । **रणाङ्कणं** वादयुद्धम् । **जिघृक्षति** निगृह्णाति । इति ध्वनिः । सद्युक्तिपराहतस्तवायमाक्षेप इति भावः ।

अयमत्र परिहारक्रमः । निन्दया निषेधस्तावदवगम्यते । निषेधश्चात्र पृथक्त्वविशिष्टधर्मदर्शनस्य । तत्र परमेश्वरस्यानेकान्धर्मान् 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं' इत्यादिना पूर्ववाक्यैरुक्त्वाऽत्र क्रियमाणो निषेधो न धर्मदर्शनरूपविशेष्यस्य किंतु विशेषणस्य पृथक्त्वस्यैवेति निश्चीयते । अन्यथा स्वव्याघातप्रसङ्गात् । यथोक्तं तत्वनिर्णयटीकायां 'यदि धर्मा एव न सन्ति तर्हि नेहास्ति किञ्चन, धर्मान्पश्यन्नित्येव वक्तव्यं स्यात् । नानेति पृथगिति च व्यर्थमेव । तेन सन्ति धर्माः किन्तु न भिन्ना नापि भिन्नाभिन्ना इति

श्रुत्यर्थः । अनयैव श्रुत्या विशेषोऽपि ज्ञायते' इति ॥ यस्य ज्ञानसामान्यं श्रुत्या निन्द्यते तज्ज्ञानस्य मिथ्यादृष्टित्वापत्त्या तत्र विषयस्यासत्त्वम् । यथाऽऽहुः 'संविदेव हि भगवती विषयसत्त्वोपगमे नः शरणम्' इति । अत्रोक्तरीत्या पृथक्त्वज्ञानमात्रस्य निन्दया पृथक्त्वस्यात्यन्तासत्त्वमवगम्यते । ॥ ६०७ ॥

**सूर्योदयोऽपि दिविजैर्दितिजैस्स्वेन चेक्ष्यते ।**
**दोषादभीरुभिर्दोषमजानद्भिर्नरैरपि ॥ ६०८ ॥**

यत्र तु श्रुत्या ज्ञानविशेषस्येक्षणस्यैव निन्दा तत्रापि द्वयी गतिः । ईक्षणविषयस्य प्रमितत्वं अप्रमितत्वं चेति । आद्ये सा निन्दा ईक्षणमात्रस्य अनर्थहेतुत्वे पर्यवस्यति न पुनस्तद्विषयस्यासत्त्वे । यथा परोक्तदृष्टान्त इत्याह **सूर्योदय इति** । सूर्योदयस्य प्रमितत्वं अनेकेषां प्रत्यक्षोक्त्या समर्थयति **दितिजैरित्यादिना** ॥ ६०८ ॥

**नग्नस्त्री च स्वनयनैस्स्वसखीनयनैरपि ।**
**रन्तॄणां रागकलुषचक्षुषा चेक्ष्यते किल ॥ ६०९ ॥**

'न नग्नां स्त्रियमीक्षेत' इति निन्दायामपि समानो न्याय इत्याह **नग्नस्त्रीति** । अत्र पूर्वत्र चानेकेषां प्रत्यक्षोक्त्या न प्रत्यक्षसामान्यस्येयं निन्दा किं तूभयत्र **प्रत्यक्षविशेषस्यैव** ॥ स्वकर्तृकस्य सखीजनकर्तृकस्येक्षणस्य वाऽनिन्दितत्वात् । किं तु पूर्वत्र दितिजनराणां उत्तरत्र रागकलुषाणां चेक्षणस्यैवेति द्योत्यते ॥ ६०९ ॥

**श्रुतिश्च चक्षुषैवैषां वीक्षणं नानुमन्यते ।**
**ईक्षा हि चाक्षुषं ज्ञानमनुमानागमादिभिः ।**
**अन्वमंस्त च तज्ज्ञानमतस्तद्बाधनं कुतः ॥ ६१० ॥**

नेक्षेतेत्यादिपरोक्तस्थलेऽपि ज्ञानसामान्यस्यैव निषेधः कुतो नेत्यत ईक्षेतेतिश्रौतप्रयोगादेवेत्याह **श्रुतिरिति** । तत्पदप्रयोगेऽपि तथात्वं कुत इत्यत आह **ईक्षेति ।। अन्वमंस्तेति** । विशिष्यनिषेधः शेषविध्यनुज्ञापक इति न्यायादिति भावः । तथा च ज्ञानसामान्यस्यानिषेधान्न तत्र सूर्योदयादिमिथ्यात्वसिद्धिः । अत्र तु तन्निषेधात्पृथक्त्वस्य मिथ्यात्वसिद्धिरिति विषमं निदर्शनमिति ॥ ६१० ॥

**दर्शनायोग्यधर्मेषु पृथक्त्वस्य च दर्शनम् ।**
**ज्ञानरूपं प्रसक्तं स्यात्पश्यार्थं तद्वदन्ति हि ॥ ६११ ॥**

अत्रापि पश्यन्निति पश्यतेः प्रयोगाज्ज्ञानविशेषस्य प्रत्यक्षज्ञानस्यैव निषेध इति मन्दाशङ्कां द्वेधा परिहरति **दर्शनेति** । 'नेन्द्रियाणि नानुमानमि'ति भगवद्धर्माणां अत एव तत्पृथक्त्वस्य च प्रसक्तिर्न तावदनुमानेन प्रत्यक्षेण वा संभाविनी । श्रुत्याऽपि तन्निषेधे ज्ञानसामान्यस्यैवार्थान्निषेधः प्राप्नोति । किञ्च दृशेर्ज्ञानसामान्येऽपि प्रयोगो दृश्यत इति न तेन प्रत्यक्षस्यैव प्राप्तिः । यथोक्तं तत्त्वोद्योतटीकायां 'यद्यपि दृशिरेवापरोक्षज्ञाने वर्तते तथाऽपि पश्यार्थेश्चानालोचन इत्यादौ ज्ञानमात्रेऽपि दर्शनादपरोक्षेत्युक्तमि'ति । ॥ ६११ ॥

**तस्मात्तस्य निषेधे स्यादप्रामाणिकतैव हि ।**
**अर्थाभावाविनाभूता निन्दा सर्वत्र चेदृशी ॥ ६१२ ॥**

**तस्मात्** ज्ञानसामान्यस्यैवार्थतो निषेधात्, दृशेरेव प्रयोगबलात् ज्ञानसामान्यस्य शब्दत एव प्राप्तेस्तन्निषेधादिति वा । **अप्रामाणिकतेति** । अर्थसद्भावे ज्ञानस्यैव प्रमाणत्वादिति भावः । **ईदृशी** मिथ्यादृष्टित्वादेव पापहेतुः । यद्वा दोषं न जानीयादेवेति वा दोषज्ञानमधोगतिहेतुरिति वैवंरूपा ॥ ६१२ ॥

**केशस्य पूर्णब्रह्मत्वादीशोऽपि स्वगतां भिदाम् ।**
**नान्वमन्यत तेनेयं केन मान्या मनीषिणा ॥ ६१३ ॥**

**केशस्य** मूलरूपभगवत्केशात्मककृष्णस्य । **स्वगतां** स्वावतारस्वगुणादिगतां **पूर्णब्रह्मत्वादिति** । तदुक्तमनुव्याख्याने 'ब्रह्मताऽवयवेऽपि स्यात्तथाऽवयविनि स्वतः ॥ यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ॥ दर्शिता चैव पार्थाये'त्यादि ॥ **नान्वमन्यत** स्वयं स्वगतभेदस्यादर्शनात्प्रत्युताभेदस्यैव दर्शनात् । केनेत्याक्षेपे तथा च प्रयोगः । धर्माः, न भगवतो भिन्नाः, भगवता स्वभिन्नत्वेनादर्शनात् इति । मनीषिणा ज्ञानिना सता यन्न दृश्यते तन्नास्त्येवेति सामान्यव्याप्तिः । यथोक्तं तत्वनिर्णयटीकायां 'भगवान् यद्यस्माच्छुक्लादिकं रूपं द्वैतं स्वतः परस्परं च भिन्नं न पश्यति तत्तस्माद् द्वितीयं नास्ति न भवति । भगवता भिन्नत्वेनादृष्टत्वेऽपि कुतो न भिन्नम् । — — — । मैवम् । पश्यन् सर्वज्ञ एव तच्छुक्लादिकं भिन्नत्वेन न पश्यति वै' इत्यादि ॥ ६१३ ॥

**यस्य कालविशेषे दृङ् निषेध्या स न बाध्यते ।**
**यस्य दृक्तु सदा नेति सामान्येनैव वार्यते ।**
**तत्रार्थस्यापि बाधः स्यादप्रामाणिकता हि सा ॥ ६१४ ॥**

सूर्योदयस्य प्रमितत्वान्न तद्बाध इत्युक्तम् । अधुना कालविशेष एव तदीक्षणस्य निषेधादपि न स इति वैषम्यं वक्ष्यन् 'नास्ति नासीद्भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनः' । इत्युक्तमसत्त्वप्रयोजकं बाधस्वरूपं निर्धारयति **यस्येत्यादिना** । **यस्य** सूर्योदयस्य नग्नस्त्रियो वा । **कालविशेषे** उदयकालादौ अवस्थाविशेषे वा । **सः** सूर्योदयः नग्नस्त्र्यादिः वा । **यस्य** पृथक्त्वादेः । **नेति** न कर्तव्येति । **वार्यते** निषिध्यते । **अर्थस्य** पृथक्त्वादेः **बाधः** असत्त्वम् । अपिशब्देन

तद्दर्शनस्य मिथ्यादृष्टित्वेनाधःपतनहेतुत्वं समुच्चीयते । **हि** यस्मात् । **सा** अत्यन्ताभावप्रतियोगिता । **अप्रामाणिकतेति** । अप्रामाणिकस्यैवात्यन्ताभावप्रतियोगित्वादिति हृदयम् ॥ ६१४ ॥

**इदानीं न घटो दृष्ट इत्युक्ते न घटो मृषा ।**
**नरशृङ्गं नैव दृष्टमित्युक्ते तु तदेव न ॥ ६१५ ॥**

तदेवोपपादयति **इदानीमिति** ॥ ६१५ ॥

**अतस्त्व(द्दृष्ट)दुक्तदृष्टान्तो विषमोऽभूद्विचारणे ॥ ६१६ ॥**

**अतः** कालविशेषे ज्ञानविशेषस्येक्षणस्यैव निन्दनात् । अत्र तु सदैव ज्ञानसामान्यस्यैव निन्दनात् ॥ ६१६ ॥

**द्रष्टव्यो नैव दोषोऽस्मिन्नित्युक्ते तददोषता ।**
**यथा सिद्ध्येत्तथा धर्मपार्थक्येक्षणशिक्षणे ।**
**धर्माणामपृथक्त्वं च सिद्ध्येदेव मम प्रभौ ॥ ६१७ ॥**

'असन्नेव स भवति असद्ब्रह्मेति वेद चेदि'ति भगवति दोषदर्शननिन्दया दोषाणामसत्वं यथा सिद्ध्येत्तथा पृथक्त्वज्ञाननिन्दया पृथक्त्वस्यासत्त्वमपि सिध्येदेवेत्याह **द्रष्टव्य इति** ॥ ६१७ ॥

**द्वितीयाभिनिवेशेन भयं स्यादिति चोदिते ।**
**द्वितीयस्यैव बाध्यत्वं किं नोचुस्तव पूर्वजाः ॥ ६१८ ॥**

भयं द्वितीयाभिनिवेशतः स्यादि'ति भागवतेऽभिनिवेशमात्रस्य निन्दा श्रूयते । अभिनिवेशश्च ज्ञानविशेषः । द्वितीयं वस्तु सूर्योदयादिकमिव प्रमितम् । अतो न बाधार्हम् । **उदिते च** उदितेऽपि । चोऽप्यर्थः । अभिनिवेशस्यैव निन्दितत्वेऽपि द्वितीयस्य प्रमितत्वेऽपि । **ऊचुः** प्रमाणान्य-

वधीर्थ स्वमतदुरभिनिवेशमात्रेणेत्युपस्कर्तव्यम् । तथा चात्र पृथक्त्वस्याबाध्यत्वोक्तिर्न केवलमप्रामाणिकी किन्तु अपसिद्धान्तपराहतेति भावः । ॥ ६१८ ॥

**त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ।**
**इत्युक्तिस्ते भिदां द्रष्टुमैक्यं पोष्टुं च भूः किल ॥ ६१९ ॥**

**इत्युक्तिः** एवं हरिहरब्रह्मणां भेदनिषेधपरेव मुखतः प्रतीयमाना, वस्तुतस्तेषां मत्यैक्ये एव तात्पर्यवती भागवतोक्तिः । अग्रे तथैव ग्रन्थकृतैव व्याख्यास्यमानत्वात् । तत्र यथा भेदस्य मिथ्यात्वं देवानां तु सत्यत्वमेवाङ्गीकृतं तथाऽत्रापि पृथक्त्वस्य मिथ्यात्वं धर्माणां तु सत्यत्वमङ्गीक्रियतां स्वरीत्यैवेति भावः ॥ ६१९ ॥

**सर्वत्र भेदमिथ्यात्वं साधयंस्त्वं दुराग्रही ।**
**कथमद्याद्वितीयस्मिन्भिदामाधातुमिच्छसि ॥ ६२० ॥**

**सर्वत्र** एकमेवाद्वितीयमिति श्रुत्यादौ, **भेदमिथ्यात्वं** स्वगतभेदस्य सजातीयाद्विजातीयाच्च भेदस्य मिथ्यात्वम् । **साधयन्** 'सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यत' इति व्याकुर्वन् । **अद्य** 'धर्मान्पृथक् पश्यन्ति'ति श्रुतेरर्थकथनावसरे । **दुराग्रही** प्रमितभेदानामपलापेऽप्रमितस्वगतभेदाङ्गीकारे चाग्रहवान् ॥ ६२० ॥

**किञ्चेयं श्रुतिरेवादौ नेहनानास्ति किञ्चन ।**
**इत्यादिना भिदामेनां निषेधति पदे पदे ॥ ६२१ ॥**

किं चात्रैव पूर्वं 'नेहनाने'ति भेदस्य 'नानेव पश्यति' इति भेदाभेदस्य च निषेधान्न धर्मभेदोक्तिर्विचारसहेत्याह **किञ्चेति** ॥ ६२१ ॥

**अतस्तज्ज्ञाननिन्दाऽपि मिथ्याभूतार्थदक्त्वतः ।**
**इति मन्यामहे तस्माद्धर्मा धर्म्यात्मकाः प्रभोः ॥ ६२२ ॥**

फलितमाह **अत इति** । अत्र धर्मशब्देन प्रथमाध्याये भगवति समन्विता गुणक्रियाऽऽदयः सर्वे विवक्षिताः । तेषां भगवल्लक्षणत्वेन लक्षणानां च भगवदभिन्नत्वेनाभिहितत्वात् । तत एव अदृश्यत्वनये समन्विता दृश्याद्यन्योन्याभावा अपि धर्मा एव । तत एव धर्म्यात्मकाश्चेत्युपसंहरति **तस्मादिति** ॥ ६२२ ॥

**धर्मिसत्त्वेऽपि यन्नश्येत्तत्र भेदोऽपि मृग्यते ।**
**भेदस्यासाधारणं हि कार्यं नाशाविनाशनम् ॥ ६२३ ॥**

ननु च संहर्तृत्वादयो धर्मा भगवतः श्रूयन्ते । क्रियाणामनित्यत्वं सुप्रसिद्धम् । नित्यस्य भगवतः कथं तदभेदः । विरुद्धधर्माध्यासस्य भावभेदाव्यभिचारात् । ततो यदि नाम सर्वगतत्वादीनां यावद्द्रव्यभाविनामभेदः तथापि न क्रियाणामसौ युज्यते इति 'अनित्यत्वात्क्रियाऽऽदीनां कथमेव स्वरूपता' इति अनुव्याख्यानोक्तां शङ्कां 'इति चेत्स विशेषोऽपि क्रिया शक्त्यात्मना स्थिरः' इति तदुक्तपरिहारानुरोधेन समाधत्ते **धर्मीति** । स्यादेतदेवं यद्यैश्वरी क्रियाऽनित्या स्यात् । नैतदस्ति । 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुत्या ज्ञानबलवदेव स्वाभाविकत्वोक्तेः । अतोऽखण्डितत्वात् क्रियायाः, विरुद्धधर्माध्यासोऽसिद्धः । 'खण्डिते भेद ऐक्यं चे'त्युक्तभेदाभेदकल्पनाया अपि नावकाश इत्याह **भेदस्येति** । **असाधारणमिति** । न विशेषाख्यप्रतिनिधिना समाधेयम् ॥ ६२३ ॥

**अनश्यद्रिपुहस्तो यद्धिनस्त्यन्यं विनाशिनम् ॥ ६२४ ॥**

असाधारण्यमेव दृष्टान्तोक्त्योपपादयति **अनश्यदिति** । वध्यघातुकभावोक्तेर्विरुद्धधर्माध्यासोपपादन एव तात्पर्यम् । **तेन गोत्रादिसंसर्गाभावस्य** भगवतोऽतिरिक्तत्वसिद्धेर्न तस्यात्र धर्मपदेन विवक्षेत्यवधेयम् ॥ ६२४ ॥

**नाप्यैक्यवाक्यबलतो विरोधिगुणविप्लवः ॥ ६२५ ॥**

'कथं नित्यगुणस्यास्य स्यादैक्यं गुणहानतः' इत्यनुव्याख्यानानुरोधेन विरोध्याकारपरित्यागो नानित्यत्वमिति समर्थितम् । 'न च मिथ्यागुणत्वं स्यादि'ति तदुक्तमाह **नापीति** । **विप्लवः** बाधः ॥ ६२५ ॥

**विरोधिगुणसंत्यागे स्यादैक्यं वाक्यगोचरम् ।**
**अविरुद्धो हि वाक्यार्थो योग्यता यदपेक्षिता ॥ ६२६ ॥**

**संत्यागे** बाधे । गोचरशब्दो यौगिको व्याख्येयः । तेन नपुंसकलिङ्गोपपत्तिः । **योग्यता** प्रमाणविरोधाभावः । **अपेक्षिता** वाक्यलक्षणे योग्यतायाः प्रविष्टत्वात् ॥ ६२६ ॥

**यदि वाक्योदिताद्वैतादेव तद्गुणमोचनम् ।**
**तदान्योन्याश्रयो दोषो वाक्यमर्थान्तरे नयेत् ॥ ६२७ ॥**

ऐक्यसिद्धौ गुणमिथ्यात्वसिद्धिः । तत्सिद्धौ च तत्सिद्धिरिति अन्योन्याश्रयः । **अर्थान्तरे** अतदिति पदच्छेदाश्रयणेन भेदरूपार्थान्तरे । ॥ ६२७ ॥

**किञ्चैकतोक्तिर्नायुक्ता सादृश्यस्यैक्यसंभवात् ।**
**सत्यनित्यगुणत्यागस्सर्वथा नोपपद्यते ॥ ६२८ ॥**

अस्तु वैक्यं वाक्यार्थः । तावताऽपि न गुणमिथ्यात्वम् । सादृश्यैक्यस्य संभवादित्याह **किं चेति** ॥ सत्यत्वान्न गुणानां मिथ्यात्वं, नित्यत्वान्न विनाश इति विवेकः ॥ **सर्वथा** प्रकारद्वयेनापि ॥ ६२८ ॥

**अतः कस्य बलात्कस्य त्याग इत्येव चिन्त्यताम् ।**
**न चेच्छून्योक्तिबलतः सत्यं ब्रह्मैव सन्त्यज ॥ ६२९ ॥**

**चिन्त्यताम्** सावकाशत्वनिरवकाशत्वादिलक्षणबलाबलविमर्शः क्रियताम् ॥ **न चेत्** भेदप्रमाणानां निरवकाशतां न्यक्कृत्यैक्यमर्थ आश्रीयते चेत् ॥ **शून्योक्तीति** । असदेवेदमग्र आसीदित्यादिरूपेत्यर्थः ॥ ६२९ ॥

**व्यावहारिकता सत्ता नित्यत्वं चिरकालता ।**
**गुणेषु यदि तर्हि स्याद्ब्रह्मण्यपि तथैव ते ॥ ६३० ॥**

सत्यनित्यगुणोक्तिः सावकाशेति शङ्कते **यदीति** । **व्यावहारिकता** ब्रह्मप्रमाऽन्येनाबाध्यता । **चिरकालता** दीर्घभ्रान्तिविषयता । परिहरति **तर्हीति** । लौकिकीं प्रतीतिमुल्लङ्घ्य स्वसमयमात्रपरिकल्पितार्थाश्रयणे इत्यर्थः । ॥ ६३० ॥

**सन्दिग्धश्रुतिपङ्कस्थनैर्गुण्यस्तम्भलम्बिनः ।**
**कथं सत्यतया श्रौतधर्मास्स्युर्व्यावहारिकाः ॥ ६३१ ॥**

**तथैव ते** इति प्रतिबन्दीग्रहणमङ्गीकारवादेनैव । वस्तुतस्तु असदित्यस्य शून्यमित्यर्थः रूढः । सत्यनित्यपदयोस्तु त्वदुक्तार्थौ शब्दवृत्तिबाह्यौ । एवं निर्गुणश्रुतिरपि अनिर्गुण इति पदच्छेदायावकाशं ददती शङ्कानिमग्नाऽस्थिरा सती पङ्कस्थस्तम्भ इवेतरेषां गुणमिथ्यात्वादीनामालम्बनं कुत एव भवेत् । येनैक्यसिद्धिरिति भावः ॥ ६३१ ॥

**तदाप्यबाधे सत्यास्स्युर्बाधे तु श्रुत्यमानता ।**
**अतोऽभ्यर्थ्यस्स एवार्थो यत्र वाग्द्वन्द्वमानता ॥ ६३२ ॥**

किञ्च व्यावहारिकी सत्ता नाम यद्यबाधस्तर्हि गुणाः सत्या एव स्युरिति तन्मिथ्यात्वप्रतिपादनं व्याहतम् । अथ बाधस्तर्हि गुणश्रुतीनामतत्त्वावेदकताऽऽपत्त्याऽप्रामाण्यमित्याह **तदाऽपीति** । व्यावहारिकसत्तोप-

गमेऽपीत्यर्थः । **स एवार्थः** अनिर्गुण इति पदच्छेदेन लभ्यः सत्य-नित्यगुणवस्त्वरूपोऽर्थः ॥ ६३२ ॥

**कथं स्वरूपस्याबाधे शक्तिबाधो भवेद्वद ।**
**किमच्छिद्रघटे त्याज्या जलाहरणयोग्यता ॥ ६३३ ॥**

परमात्मनः शक्तेरबाधं युक्त्या साधयति **कथमिति** ॥ विमता शक्तिः अबाध्या अबाध्यधर्मिकत्वात् घटगतशक्तिवत् इति प्रयोगमभिप्रैति । विपक्षे हेतूच्छित्तिमाह **कथमिति** । न च दृष्टान्तः साध्यविकल इत्याह **किमिति** । **जलाहरणयोग्यता** जलाहरणकारणता घटगतशक्तिरिति यावत् । **त्याज्या** बाध्या ॥ ६३३ ॥

**स्वाभाविकी ज्ञानबलक्रिया चेत्याह हि श्रुतिः ॥६३४॥**

उक्तं विपक्षे बाधकं श्रुतिसम्मत्या द्रढयति **स्वाभाविकीति** । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतिः **हि** यस्माच्छक्तेः स्वाभाविकत्वमाहेति योजना । स्वभावहानौ स्वरूपहानेर्नियतत्वात् शक्तेर्बाध्यत्वे धर्मिस्वरूपस्यापि बाधस्य नियतेर्हेतूच्छित्तिः स्थिरेति भावः । शक्तेरबाधसिद्धौ, पूर्णगुणत्वसिद्धिस्तत्प्रेप्सुत्वे सति तत्र शक्तत्वहेतुना सर्वधर्मोपपत्तिनयोक्तरीत्या सुलभेत्युपेत्य तस्या एव विशिष्य पक्षीकरणम् ॥ ६३४ ॥

**पीलुपाकेन पिठरपाकतो वा गुणक्षयः ।**
**एकत्र धर्मिणो नाशोऽन्यत्र धर्मान्तरं किल ॥ ६३५ ॥**

गुणानां नित्यत्वं युक्त्या समर्थयितुं, तन्नाशः किं धर्मिनाशाद्वा उत धर्मि-विकारात्, अथ गुणानामेवौपाधिकत्वेन उपाधिनाशात् । तत्र उपाधिरपि वरो वा

अविद्या वा माया वा बिम्बमेव वेति विकल्पान्हृदि कृत्वा तत्र न तावदाद्यावित्याह **पील्विति । पीलुः** परमाणुः । पाकेन घटादेः पार्थिवद्रव्यस्य आपरमाणुविनाशे सति पूर्वरूपस्य विनाशः । रूपान्तरोपेतघटान्तरस्योत्पत्तिरिति पीलुपाकवादः । अविनष्टस्य धर्मिण एव रूपविनाशानन्तरं रूपान्तरोत्पत्तिरिति पिठरपाकवादः । उभयथाऽपि गुणनाशः धर्मिनाशविकारान्यतरव्याप्त उपलब्धः । प्रकृते व्यापकाभावान्न व्याप्यो गुणनाश इति भावः ॥ ६३५ ॥

**सति धर्मिणि धर्माणां क्वात्यन्ताभाव इष्यते ।**
**क्षणमुत्पन्नमगुणमित्यप्याहाग्रहात्परम् ।**
**तन्तुना पटनिर्माणे किं मध्ये शुक्लता गता ॥ ६३६ ॥**

सति अविकृते चेत्युपस्कर्तव्यम् । नाश एव न । कुतोऽत्यन्ताभावो निर्गुणवाद्यभिमत इति भावः । ननु उत्पन्नं द्रव्यं क्षणमगुणमक्रियाकं च तिष्ठतीति तार्किकस्य प्रक्रिया । तदनुसारेण सतोऽपि ब्रह्मणो निर्धर्मकत्वं किं न स्यादित्यतस्तत्प्रक्रियैव निर्मूलेत्याह **क्षणमिति** ॥ उपपादयति **तन्तुनेति** । अयमाशयः । तन्तुसमवेत एव खलु पट उत्पद्यते । तन्तवश्च पटोत्पत्तेः प्रागूर्ध्वं च गुणक्रियावन्त एव । मध्ये उत्पत्तिक्षणे एव परं तेषां गुणक्रियाऽपगमस्तेन च तत्समवेतपटस्य तत्क्षणमात्रं गुणादिराहित्येनावस्थानमिति तु कुकल्पनामात्रमेवेति । तदाह **किमिति** । शुक्लता इत्युपलक्षणम् गुणक्रिये इत्यर्थः । गतेत्यपहासः ॥ ६३६ ॥

**धर्मिणो धर्मविकृतौ विकारोऽस्त्येव कश्चन ।**
**अविकारी तु यो धर्मी तद्धर्मोऽपि ह्यविक्रियः ।**
**किमाप्यपरमाणूनां शुक्लतायाः क्वचित्क्षयः ॥ ६३७ ॥**

ननु धर्मविकारस्य कुतो धर्मिविकारो व्यापकस्तदभावेऽपि धर्ममात्र-विकारोपपत्तेरित्यतो नैवं संभवतीत्याह **धर्मिण इति** । **कश्चन** रूपादिपरावृत्ति-मत्त्वलक्षणः । तुरेवार्थः । सर्वथा विकाररहित इत्यर्थः ॥ ६३७ ॥

**द्विपाकप्रक्रियातोऽपि पाकायोग्ये न विक्रिया ।**
**हरिस्तु दहनान्तस्थः पीताग्निर्मुक्तचेतनः ॥ ६३८ ॥**

परमात्मा पाकनिमित्तकविकाररहितः पाकायोग्यत्वात् आकाशवत् । न चासिद्धिः । परमात्मा पाकायोग्यः दहनान्तःस्थत्वात् तद्वदेव । **योऽग्नौ तिष्ठन्** — — योऽग्निमन्तरो यमयति इति श्रुतेरेव पक्षे हेतूपपादनं कर्तव्यम् । न चोभयत्र दृष्टान्तस्य साधनवैकल्यं शङ्क्यम् । 'यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥ सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते' इति स्मृतेः । अग्निसंयोगेऽप्यविक्रियत्वं श्रीकृष्णे प्रत्यक्षतो दर्शितं चेत्याह **पीताग्निरिति** । वर्णितं च ग्रन्थकृतैव कृष्णकाव्ये 'स्वजन्मभूमिं शिखिनि **प्रविष्ट'** इत्यादिना ॥ हेत्वन्तरमाह **मुक्तचेतनत्वादिति** । अप्राकृतचित्सुखात्मक-शरीरत्वात् । 'नैनं दहति पावकः' 'अदाह्योऽयं' इति स्मृतिः ॥ ६३८ ॥

**अतस्तद्रूपसौन्दर्यशौर्यधैर्यपराक्रमाः ।**
**स्वातन्त्र्यवशितेशत्वपूर्वास्सर्वे गुणा ध्रुवाः ॥ ६३९ ॥**

**अतः** धर्मिणः सर्वथाऽविकारत्वात् । **ध्रुवाः** नित्याः ॥ ६३९ ॥

**यदन्यवरतोऽप्राप्तास्तेन नौपाधिका इमे ।**
**अनौपाधिकधर्माणां धर्म्यनाशे न नाशनम् ॥ ६४० ॥**

अन्यवरत इति उपलक्षणम् आगन्तुकसहकारिकारणादिति ग्राह्यम् । 'पराऽस्य शक्तिर्विविधैव श्रूयते' इत्यस्य पूर्ववाक्ये 'न तस्य कार्यं करणं च विद्यते' इत्यत्र सहकारिनिषेधात्, 'परेति यां प्राहुरजस्रशक्तिं' इति शक्तेरज-

स्त्वोक्तेश्च । **अनौपाधिकधर्माणां** अनागन्तुकानां स्वाभाविकधर्माणाम् । ॥ ६४० ॥

**ज्ञानं च मानसं क्षय्यं साक्षिज्ञानं त्वनश्वरम् ।**
**पूर्वनाशे परं ज्ञानं भावना वा मनस्यपि ॥ ६४१ ॥**

धर्मा द्विविधाः प्राकृता अप्राकृताश्चेति । प्राकृता अपि यावद्धर्मिभाविनः अयावद्धर्मिभाविनश्चेति द्विधा । पुनर्द्विविधा धर्मिसत्तासापेक्षास्तन्निरपेक्षाश्चेति । तत्राप्राकृतधर्माणां ज्ञानरूपादीनां नैव नाश इत्याह **ज्ञानं चेति । मानसं च ।** मानसमेव भौतिकमेवेति भावः । तथा च यत्र क्षय्यत्वं तत्र भौतिकत्वमिति व्याप्तिरुक्ता भवति । यथोक्तं अनुव्याख्याने 'भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मते' इति । तु शब्दो भगवज्ज्ञानाद् व्यापकं भौतिकत्वं व्यावर्तयति । तेन व्याप्यस्य नाशस्य व्यावृत्तिर्लभ्यते । भगवज्ज्ञानं तु साक्षिरूपमेवाप्राकृतमिति न तदुपलक्षितधर्माणां नाशप्रसक्तिः । अयावद्धर्मिभाविधर्मेष्वपि न धर्माणां सर्वेषां सर्वथा नाशः । किन्तु एकस्य नाशेऽप्यपरस्योत्पत्तिरित्येवेत्याह **पूर्वेति ।** ॥ ६४१ ॥

**मनस्त्वाणुत्वपूर्वास्तु धर्मास्तत्रापि धर्मिवत् ।**
**सति धर्मिणि धर्माणां सर्वथा कुत्र मुण्डनम् ॥ ६४२ ॥**
**धर्म्यसत्त्वेऽपि धर्मस्सन्प्रतियोगित्वपूर्ववत् ।**
**सति धर्मिणि धर्माणामसत्त्वं तु न कुत्रचित् ॥ ६४३ ॥**

यावद्धर्मिभाविनां धर्मिणो नित्यत्वे नित्यत्वं स्फुटमेवेति निदर्शयति **मनस्त्वाणुत्वेति ।** धर्मिणोऽनित्यत्वेऽपि तन्नाशे धर्मिसत्तासापेक्षधर्माणामेव निवृत्तिः । तन्निरपेक्षाणां प्रतियोगित्वादीनां त्वनुवृत्तिरेवेत्याह **धर्म्य-**

**सत्त्वेऽपीति । धर्माणां** निःशेषाणामिति शेषः । सति धर्मिणीति कैमुत्यद्योतनार्थम् । असत्यपि धर्मिणि प्रतियोगित्वादिधर्माणां यदा नासत्त्वं तदा किमु सति धर्मिणि, किमुतरां विकारशून्ये धर्मिणि भगवति, किमुतमामप्राकृतानां स्वाभाविकानां ज्ञानबलादीनां तन्निष्ठानामनन्तानां धर्माणामिति भावः । अतो मायावादिनो ब्रह्मनिष्ठाशेषगुणत्यागोक्तिर्दुराग्रहमूलैवेति फलितम् ॥ ६४२ ॥ ६४३ ॥

**रूप्यबाधे हि रूप्यत्वबाधो दृष्टो भ्रमेऽपि च ।**
**अतः श्रौतात्मधर्माणां बाधोऽप्येष न लौकिकः ॥ ६४४ ॥**

अबाध्यधर्मिकत्वेन हेतुना धर्माणामबाध्यत्वं प्राग्घटदृष्टान्तेन साधितम् (श्लो. ६३३)। अन्वये व्यभिचारशङ्कापरिहाराय तत्रैव व्यतिरेकव्याप्तिमप्याह **रूप्येति** ॥ स्थिरत्वाय युक्तेः श्रुत्यनुग्रहीतत्वमाह **श्रौतेति** ॥ ६४४ ॥

**घटादिधर्मास्तत्सत्तासमसत्ता यतोऽखिलाः ।**
**अतस्सत्यात्मधर्माश्च सत्यास्स्युर्नात्र संशयः ॥ ६४५ ॥**

ब्रह्मधर्माणां व्यावहारिकसत्यत्वं प्राङ् निराकृतमपि पुनर्मायिनाङ्गीकृतेन धर्मधर्मिणोः समसत्ताकत्वनियमेन निराह **घटेति । सत्याः** पारमार्थिकसत्याः । ॥ ६४५ ॥

**अदृष्टकल्पना कुर्याद् दुरदृष्टस्य कल्पनाम् ।**
**सत्यानित्यास्ततो धर्मास्सत्ये नित्ये च धर्मिणि ॥ ६४६ ॥**

**अदृष्टकल्पना** भागत्यागविषयिणी । **दुरदृष्टस्य** तमस्साधनपापस्य । ॥ ६४६ ॥

**ध्वनिस्तूपाधितो जातो नासौ स्वाभाविको गुणः ॥ ६४७ ॥**

यदुक्तं धर्माणां नाशे धर्मिणोऽपि नाशप्रसङ्ग इति न तद्युक्तम् । आकाशगुणस्य शब्दस्य नाशेऽप्याकाशस्यानाशादित्यतः स्वरूपधर्माणां, विषय एवोक्तोऽतिप्रसङ्गो नौपाधिकानां धर्माणां, शब्दस्तु ध्वनिरूप आकाश-गुण औपाधिकः उच्चारण-भेरीताडनादिजन्य इति नोक्तदोष इत्याह **ध्वनिरिति** ॥ ६४७ ॥

**त्रिक्षणस्थायि यत्प्राहुश्शब्दं बुद्धिं च कर्म च ।**
**अतोऽपि न ध्वनिर्व्यो(म्नि)मस्वभावो नश्वरो ह्यसौ ॥ ६४८ ॥**

प्राहुः पदार्थविदः इत्यस्वरसम् । तैः नित्यस्य वर्णात्मकशब्दस्य, चिदात्मनोश्च बुद्धिकर्मणोर्नित्यत्वेन प्रमितानां चानङ्गीकारात् । **अतः** उभय-संमत्या ॥ ६४८ ॥

**अणुत्वं परमाणोर्यन्महत्त्वं महतोऽपि च ।**
**अवकाशप्रदत्वं यद्गगनस्य कदा न तत् ।**
**अतस्स्वाभाविका धर्मा नश्येरन्धर्मिणः क्षये ॥ ६४९ ॥**

स्वाभाविकधर्माणां तु यावद्धर्मिसत्त्वं नियतमित्याह **अणुत्वमिति** । **कदा न** सर्वदाऽस्तीत्यर्थः । **अतः** स्वाभाविकधर्मधर्मिनाशयोः समनियत-त्वात् ॥ ६४९ ॥

**श्रुतौ स्मृतौ च कीर्त्यन्ते धर्मास्स्वाभाविका हरेः ।**
**सत्या नित्यास्स्वभावाश्च ये धर्मास्ते न मायिकाः ॥ ६५० ॥**

ब्रह्मधर्मा न मायिका सत्यत्वात् नित्यत्वात् ब्रह्मस्वभावत्वाद्वा ब्रह्मवत् । न चासिद्धिरित्याह **श्रुताविति** ॥ ६५० ॥

**अविद्यया कथं विद्या शक्तिस्तेजो बलं धृतिः ।**
**अमायिकब्रह्मवत्तद्धर्मास्सर्वेऽप्यमायिकाः　॥ ६५१ ॥**

अविद्योपाधिकत्वं विद्यायाः शक्त्यादीनां विद्याप्रयोज्यानां च न संभवतीत्याह **अविद्ययेति** । न ह्यन्धकारोपाधिकत्वमालोकस्य संभवति विरोधादिति भावः ॥ ६५१ ॥

**सत्यत्वाच्च स्वभावत्वान्नित्यत्वाद्ब्रह्मवत्सदा ।**
**अमायिका ब्रह्मधर्मा इति स्यादनुमाऽपि नः ॥ ६५२ ॥**
**स्वनिष्ठधर्मोपाधातुस्स्यादुपाधेरुपाधिता ।**
**मायाभिन्नत्वाजडत्वसत्त्वचित्त्वात्मतादयः　॥ ६५३ ॥**

मायाया उपाधित्वं न संभवतीति वक्तुं उपाधिशब्दं तावन्निर्वक्ति **स्वेति** । यथाऽहुः 'स्वसंबन्धेन यः स्वीयं धर्ममन्यत्र दर्शयेत् । स उपाधिर्यथा लोके जपादिः स्फटिकादिषु' इति । न हि मायायां मायाभिन्नत्वमस्ति येन तद्ब्रह्मणि उपादध्यात् । स्वस्मिन्स्वभेदस्य व्याहतेः । एवं अजडत्वादिकमपीति भावः । **सत्त्वं** अनिर्वचनीयत्वम् । मायायां तु अनिर्वचनीयत्वमेव सत्त्वम् । तेन न कुचोद्यावकाशः । **चित्त्वं** सामान्यम् । **आत्मत्वं** सर्वभूतान्तरात्मा इत्युक्तो विशेषः । सामान्यस्यैव मायायामभावे विशेषस्य कुतोऽवकाश इति द्योतनाय पृथगुक्तिः । आदिपदेन निर्विकारत्वादयः । ॥ ६५२ ॥ ६५३ ॥

**व्याप्तत्वनित्यशुद्धत्वमुक्तत्वाद्या हरेर्गुणाः ।**
**जडेष्वसंभावितास्स्युर्मायोपाध्याहिताः कथम् ॥ ६५४ ॥**

किं विशिष्य मायाग्रहणेन । उपाधिमात्रं न संभवति; भगवद्गुणानां तदितरत्र कुत्रापि मुक्तामुक्तप्रपञ्चेऽसंभवादित्याशयेन 'सर्वव्यापी' इत्यादि-

श्रुत्युक्तांस्तदसाधारणगुणानाह **व्याप्तत्वेति** । व्याप्तिस्त्रिविधाऽनन्तशब्दोक्ता ग्राह्या । आद्यपदेन सर्वेश्वरत्वपूर्वा उत्तरश्लोकोक्ता ग्राह्याः । जडेषु इत्युपलक्षणम् । तदितरत्र रमाऽऽदिसर्वप्रपञ्चे इति ध्येयम् । मायेत्यप्युपलक्षणम् । उपाधिमात्रे इत्यर्थः ॥ ६५४ ॥

**हन्त मायाबद्धताऽपि न मायोपाधिका त्वयि ।**
**सर्वेश्वरत्वपूर्वं तत्कः कुर्वीत महाप्रभौ ॥ ६५५ ॥**

किञ्च 'अनादिमायया सुप्तः' 'योऽविद्ययान्धः स तु नित्यबद्धः' इति जीवस्य मायाबद्धत्वं ज्ञायते । न च तन्मायोपाधिकमिति संभवति । मायायां मायाबद्धत्वस्याभावात् । बध्यबन्धकभावस्य भेदसापेक्षत्वात् । उपाधिना स्वस्मिन्नेवाविद्यमानस्य धर्मस्येतरत्रोपाधायकत्वायोगात् । अन्यथोपाधित्वस्यैव व्याघातात् । तथा च जीवमात्रेऽपि विद्यमानं मायाबद्धत्वं यदा न मायोपाधिकं तदा किं वाच्यं भगवदसाधारणधर्माणां सर्वेश्वरत्वादीनां तदुपाधिकत्वाभाव इत्याह **हन्तेति** । महाप्रभावित्यनेन तद्गुणानां तन्मात्रवृत्तित्वमभिप्रैति ॥ ६५५ ॥

**निरीक्षतो यस्य दृष्टिर्माययाऽण्वपि नाज्यते ।**
**इत्याह पञ्चमस्कन्धे तद्द्रष्टृत्वादयः प्रभोः ।**
**स्वाभाविका भवेयुर्हि तदभावः कदा वद ॥ ६५६ ॥**

'न यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते' इति श्लोकस्यानुवादः निरीक्षत इति । रुद्रस्य भगवत्स्तुतिः भागवते पञ्चमस्कन्धे सप्तदशेऽध्याये । अस्य भगवतो दृष्टिर्ज्ञानं, अण्वपि लेशतोऽपि मायया नाज्यते न लिप्यते इत्युक्त्या दृष्टेस्तद्गुणानां च मायोपाधिकत्वं निषिध्यते ॥ ६५६ ॥

**किञ्चोपाधिर्बिम्बमेव प्रतिबिम्बस्य शोभते ।**
**स्वधर्माधायकत्वेन मायादिस्स्फटिकादिवत् ।**
**निमित्तमात्रं तत्सङ्गात्तन्नाम्ना भण्यते परम् ॥ ६५७ ॥**

मायायां चित्त्वादिधर्माणामभावात् तथाऽन्यत्र तद्धर्माणामुपधायकत्वासंभवान्न तस्या उपाधित्वमित्युक्तम् । एवं तर्हि प्रतिबिम्बे जीवे चित्त्वादयो धर्मा ये सन्ति तेषामुपधायकं किमित्यतो बिम्बभूतं ब्रह्मैवेत्याह **किञ्चेति** । तथा सति अवयवशक्त्या ब्रह्मण एवोपाधित्वं प्राप्तमिति चेत्सत्यमेवमित्याह **शोभते इति** । तर्हि देहेंद्रियादिकस्य लोके उपाधित्वप्रसिद्धेः का गतिरित्यतो रूढ्यैव तत्र तच्छब्दव्यवहार इत्याह **मायादिरिति । नाम्ना भण्यते परमिति** च । अत्र मायाशब्देन प्राकृतदेहादिकं विवक्षितम् । न तु पराभिमताऽनिर्वचनीया माया । तस्या अप्रामाणिकत्वेन तत्रोपचारेणापि भण्यत इत्युक्तव्यवहारस्याभावात् । अयमाशयः । नायमस्ति नियमो यद्योगवृत्त्यैव सर्वत्रोपाधिशब्दप्रयोगः इति । तदुक्तं तर्कताण्डवे 'साध्यव्याप्यत्वरूपस्वधर्मस्य साधने प्रतिबिम्बजनकत्वरूपावयवार्थाभावेऽपि लाभाद्युपाधिना कृतमित्यादाविव रूढ्योपाधिपदप्रयोगोपपत्तेश्चेति ॥ ६५७ ॥

**तस्माद्ब्रह्मस्थसुगुणा एव तत्प्रतिबिम्बके ।**
**दृश्येरन्नान्यतस्ते स्युस्सूर्यकश्रीर्हि सूर्यतः ॥ ६५८ ॥**

**तस्मात्** प्रतिबिम्बधर्माणां बिंबाधीनत्वात् । **सुगुणा एवेति** । तेन जीवे दृश्यमानानां दुःखदोषादीनां ब्रह्मस्थत्वं व्यवच्छिनत्ति । ते तु संसारे बुद्धीन्द्रियादिसंबन्धवशात् सात्त्विकानामविद्ययाऽत्मीयतयाऽवभासन्ते । मोक्षे तु पारतन्त्र्यादिधर्माणां जीवस्वरूपमेवोपाधिः । यथोक्तं गीताभाष्ये 'नित्यश्चोपाधिः कश्चिदस्ति । प्रतिपत्तौ विमोक्षस्य नित्योपाध्या स्वरूपया । चिद्रूपया युतो जीवः केशवप्रतिबिम्बकः' इति । ये स्युस्ते नान्यत इति

योजना । न तु बिम्बस्थानां सर्वधर्माणां प्रतिबिम्बे दर्शनम् । तदुक्तं गीताभाष्ये 'युक्ताश्च बिम्बधर्माः प्रतिबिम्बेऽविरोधे' इति । प्रमेयदीपिकायां च 'बिम्बधर्माः बिम्बसमानधर्माः । यो यत्प्रतिबिम्बः सोऽसति विरोधे तद्धर्मेति व्याप्तिरत्राभिप्रेतेति भाव' इति ॥ ६५८ ॥

**बिम्बस्थगुणसर्वस्वमनौपाधिकमेव हि ।**
**तन्नाशनाशि तद्ध्रौव्ये ध्रुवमेवाभवद्धि तत् ॥ ६५९ ॥**

किञ्च आस्तामियं प्रतिबिम्बजीवगतानां धर्माणामेव विषय उपाध्याहितत्वचिन्ता । ब्रह्म तु बिम्बभूतमेव । तद्धर्माणामनौपाधिकत्वे विवादस्यैव नावसरः । न हि सूर्यस्य तेजसि, जपाकुसुमस्य लौहित्ये वा औपाधिकत्वं कोऽपि सम्भावयति । अतः सर्वेश्वरत्वादयो ब्रह्मधर्मा अनौपाधिका एवेत्याह **बिम्बस्थेति** । अनौपाधिकानां धर्माणां यावद्द्रव्यभावित्वनियमेन ब्रह्मणश्च ध्रुवत्वेन तद्धर्माणां ध्रुवत्वं निष्प्रत्यूहमित्याह **तदिति** ॥ ६५९ ॥

**प्रतिबिम्बस्य सर्वस्य यद्बिम्बं ब्रह्म तद्धि मे ।**
**तच्च सत्यं च नित्यं च निर्गुणं स्यात्कदा च न ॥ ६६० ॥**

**सर्वस्येति** अनेन स्वयं कस्यापि न प्रतिबिम्बमिति ज्ञायते । तथा च प्रतिबिम्बत्वासमानाधिकरणं बिम्बत्वं ब्रह्मणो लक्षणमुक्तं भवति । कदा तवेति पाठः । अग्रे (६७३ श्लो) तथैव दर्शनात् । कदा च नेति पाठे चोऽप्यर्थः ॥ ६६० ॥

**सगुणप्रतिबिम्बेऽस्मिन्बिम्बत्वाद्रुद्रपुष्पवत् ।**
**स्वाभाविकगुणं ब्रह्म किं तेऽभून्नानुमानतः ॥ ६६१ ॥**

अनुमानप्रयोगं दर्शयति **सगुणेति** । ब्रह्म स्वाभाविकगुणवत् बिम्बत्वात् जपाकुसुमवत् । बिम्बत्वं च प्रतिबिम्बगतगुणनिश्चामकतत्सदृशगुण-

योगित्वम् । तथाविधलौहित्यवत्त्वाद्दृष्टान्ते साध्यानुगमः । ब्रह्मणः सर्वात्रमादीन्प्रति बिम्बत्वात् तन्निष्ठगुणनियामकज्ञानानन्दादिगुणवत्त्वं पक्षधर्मताबलात्सिध्यति । विपक्षे हेतूच्छित्तिरेव बाधिका ॥ ६६१ ॥

**स्वाभाविकी ज्ञानबलक्रिया चेत्याह तच्छ्रुतिः ।**
**यन्मूलं सगुणं ते स्यात्स एवास्माकमीश्वरः ॥ ६६२ ॥**

अनुग्राहकश्रुतिमाह **स्वाभाविकीति** । यन्मूलमिति बहुव्रीहिः । ननु शबलं ब्रह्म सगुणम् । तद्गुणाश्च न स्वाभाविकाः । अतस्तत्पक्षीकारे बाधः इति चेन्नैवम् । त्वदभिमतशबलस्यापि मूलं बिम्बभूतं यद्ब्रह्म तदेव पक्षीक्रियते अतो नोक्तदोष इत्याह **यन्मूलमिति** । यद्येवं तर्हि त्वदभिमतेश्वरस्य न स्वाभाविकगुणवत्त्वसिद्धिरित्यत आह **स एवेति** । **ईश्वरः** विष्णुः । अभ्युपगम्येदमुक्तम् । वस्तुतस्तु त्वदुक्तमायाशबलस्याप्रामाणिकत्वेन त्वदाक्षेपस्यैवायोगादिति भावः ॥ ६६२ ॥

**अतस्सगुणमेवार्ध्यं त्वयाऽपि च मयापि च ।**
**निर्गुणाशां त्यज भज श्रीशं मे सगुणं प्रभुम् ॥ ६६३ ॥**

**अतः** श्रीशादन्यस्य तद्बिम्बभूतसगुणस्याभावात् । **सगुणमेव** श्रीशाख्यं ब्रह्मैव । **अर्ध्यं** उपास्यम् । **त्वयेति** सर्वैर्मुमुक्षुभिरित्यर्थः । **त्यज** प्रमाणप्रयोजनयोरभावात् इति शेषः । **प्रभुं** मुक्तौ ज्ञानानन्दादि प्रदानसमर्थम् ॥ ६६३ ॥

**वचसां गौरवायैव सगुणद्वयकल्पनम् ।**
**न चेत्स्यात्सिद्धसगुणभजने गौरवं तव ॥ ६६४ ॥**

ननु मूलबिम्बत्वं नारायणस्येवान्यस्यापि किं न स्यादिति मन्दाशङ्कां निराह **गौरवायेति** । तथा सति द्वयोः सर्वोत्तमत्वप्राप्त्या व्याघातेना-

प्रामाणिककल्पनाऽऽपत्तिरिति भावः । **गौरवं** प्रमाणसिद्धसंप्रत्ययावलम्बित्वेन सज्जनेषु मान्यता ॥ ६६४ ॥

**अस्तु मायाविना मायादर्शितं वस्तु मायिकम् ।**
**मायाविदेहेन्द्रियेच्छाप्रयत्नादि त्वमायिकम् ॥ ६६५ ॥**
**एवं चामायिकमभूद्धरेर्देहेन्द्रियादिकम् ।**
**शक्तिसौन्दर्यधैर्यादिभार्याभवनपूर्वकम् ॥ ६६६ ॥**

'न च मायाविना माया दृश्यते विश्वमीश्वरः । सदा पश्यति तेनेदं न मायेत्यवधार्यतामि'ति तत्वोद्योतोक्तिमनुरुध्याह **अस्त्विति ॥** मायायाः परव्यामोहकरत्वं परसिद्धान्तः । अतो मायाविना दर्शितस्य वस्तुनो मिथ्यात्वप्राप्तावपि तेन दृष्टवस्तूनां स्वदेहेन्द्रियादीनां भार्याभवनादीनां च मिथ्यात्वं नैव सिध्यति । लोके तथा दर्शनात् । तेनास्तु मायाया उपाधित्वम् । तथाऽपि न सर्वजगन्मिथ्यात्वं पराभिमतं सिध्यतीत्याह **अस्त्विति । शक्तीति ।** तथा चेश्वरगुणानां तावत्सत्यत्वं नित्यत्वं च निराबाधमिति गुणसौरभप्रमेयसिद्धिः । एवं तस्य भार्याभवनादीनामपि सत्यत्वं निष्प्रत्यूहमिति विश्वसौरभप्रमेयस्याप्यंशतः सिद्धिः ॥ ६६५ ॥ ६६६ ॥

**गुणिनां हि गुणस्तुत्या स्वस्यापि स्यान्महाफलम् ।**
**यन्ममावसितं भारस्यार्धं गुणनिरूपणे ॥ ६६७ ॥**

**गुणस्तुत्या** गुणाभिधानेन युक्तिभिस्तदुपपादनेन च । यद्वा गुणनिष्ठसत्यत्वनित्यत्वादिगुणप्रतिपादनेन । **स्वस्य** ग्रन्थप्रणेतुः । अपिशब्देनाध्येतृसमुच्चयः । स्तुतिविषयस्य नारायणस्य तया प्रयोजनाभावात् । **महाफलम्** विश्वसौरभेन यत्कर्तव्यं विश्वसत्यत्वोपपादनं तत्र विश्वैकदेशस्य भगवद्देहेन्द्रियभार्याभवनादिरूपस्य सत्यत्वस्योपपादनेन भारार्धावसितिर्ग्रन्थकारस्य, उभयेषां भगवत्प्रीतिः ॥ ६६७ ॥

**विश्वान्तःपातिनो ह्युक्तस्यास्य यत्सत्यताऽप्यभूत् ।**
**लोकदृष्ट्यैव न पुनश्श्रुतिस्मृतिविचारणात् ॥ ६६८ ॥**

**लोकदृष्ट्यैव** लोके मायाविदृष्टान्तानुसारेणैव ॥ एवकारेण व्यवच्छेद्यमाह **नेति** । श्रुतिस्मृतिविचारे तु सर्वस्यैव विश्वस्य सत्यत्वं सिध्यति । तदुक्तं तत्वोद्योतटीकायां 'अम्बरादिकं नेश्वरमायाजन्यं तेन दृश्यमानत्वात् । यद्यन्मायाजन्यं न तत्तेन दृश्यते यथेन्द्रजालिकं वस्तु मायाविना' इति । व्याप्तिधर्मतयोरागमिकत्वेन न कश्चित्क्षुद्रोपद्रवः ॥ ६६८ ॥

**नित्यज्ञानबलैश्वर्यभोगोपकरणाच्युत ।**
**इति तुष्टाव तत्स्रष्टा पञ्चरात्रे निजं प्रभुम् ॥ ६६९ ॥**

**तत्स्रष्टा** विश्वस्य सृष्टिकर्ता विधिः । हेतुगर्भं विशेषणम् । मायिकस्य दृष्टिमात्रं न तु सृष्टिः ॥ ६६९ ॥

**न यत्र माया तत्रापि महिमा स्मर्यतेऽस्य तत् ।**
**उल्लङ्घ्य लोकमर्यादां धर्मत्यागः कथं प्रभौ ॥ ६७० ॥**

**लोकमर्यादां** यत् यन्निषेधाधिकरणस्थितिमत् न तत्तदुपादानकमिति लोकसिद्धव्याप्तिम् । यथा तन्तुनिषेधाधिकरणस्थितिमान्घटो न तन्तूपादानक इति सामान्यव्याप्तिः ॥ ६७० ॥

**अतस्स्वाभाविकं सर्वं ज्ञानैश्वर्यादिकं हरेः ।**
**कथं तस्य निवृत्तिस्स्याच्चैतन्यस्यानिवर्तने ॥ ६७१ ॥**

**तस्य** स्वरूपभूतस्य महिम्नः । तदुक्तमनुव्याख्याने नैकस्मिन्नधिकरणे 'नानित्यताऽस्मत्पक्षे तु चैतन्यादेर्विशेषिणः । लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचिदि'ति ॥ ६७१ ॥

**तद्धर्मबाधायोगेन बाध्यं स्यादैक्यमेव ते ।**
**अर्थापत्तिस्तवैवाभूदनर्थापत्तिकारणम् ॥ ६७२ ॥**

ऐक्यान्यथाऽनुपपत्त्या गुणमिथ्यात्वं न सिध्यति । आक्षेपकस्यैक्यस्याप्रमितत्वात् आक्षेप्यस्य गुणमिथ्यात्वस्य प्रमाणविरुद्धत्वात् । प्रत्युत गुणसत्यत्वानुपपत्त्या ऐक्यस्यैव मिथ्यात्वमिति तवैव अनर्थः इत्याह **तदिति** । **अनर्थः** उद्देश्यासिद्धिस्तमःप्राप्तिश्च ॥ ६७२ ॥

**वृथैव गुणसंत्यागे वैदुष्यं ते गमिष्यति ।**
**अत्यागे महिमध्रौव्यान्निर्गुणं स्यात्कदा तव ॥ ६७३ ॥**

ननु नार्थापत्त्या गुणत्यागः किन्त्वेवमेवेत्यत आह **वृथेति** ॥ वैदुष्यं उपलक्षणं विवेकादिसर्वं गुणजातम् । एवमेव तस्यापि त्याग आपद्यते । **अत्यागे** सत्यज्ञानादिवाक्यमुख्यार्थेऽनुपपत्त्यभावाद्गुणानामपरित्यागे । **निर्गुणं कदा स्यात्** । लक्षणया नैव निर्गुणं कदाऽपि सिध्यति ॥ ६७३ ॥

**अतोऽनवसराद् दुस्स्थमश्रौतं च परोदितम् ।**
**ब्रह्मैष नित्यो महिमेत्याद्या वाक्तत्र तत्र हि ॥ ६७४ ॥**

**अतः** अप्रामाणिकत्वात् प्रमाणविरुद्धत्वात् व्यर्थत्वाच्च । परोदीरितं ब्रह्मेति संबन्धः । अप्रामाणिकत्वमाह **अश्रौतमिति** । निर्गुणश्रुतिस्तु सत्त्वादिप्रकृतिगुणबद्धत्वनिषेधपरेत्युपपादितमिति भावः । प्रमाणविरुद्धत्वमाह **एष इति** । **तत्र तत्र हीति** । सर्वत्रेत्यर्थः । तदुक्तं तत्वनिर्णये 'सर्वज्ञं सर्वकर्तारं नारायणमनामयम् । सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि । सर्वेषामपि वेदानामितिहासपुराणयोः । प्रमाणानां च सर्वेषां' इति नारदीयवाक्योदाहरणेन ॥ ६७४ ॥

**एको दाधार विश्वानि भुवनानीति चापरा ।**
**तं स्तौति सर्वाधारत्वात्परं ब्रह्म स एव हि ॥ ६७५ ॥**

व्यर्थत्वं चाह । तथा हि । निर्गुणं ब्रह्म किं स्थित्यर्थं अथ सृष्ट्यर्थं उत भुक्त्यर्थं आहोस्विन्मुक्त्यर्थम् । नाद्य इत्याह **एक इति** । **तं** विष्णुम् । विष्णुसूक्तत्वादस्य वाक्यस्य । **स एव** विष्णुरेव ॥ ६७५ ॥

**सर्वस्याधारता सर्वव्यापिता केशवस्य चेत् ।**
**अन्यद्ब्रह्म किमर्थं ते व्यर्थत्वादपि तद्गतम् ॥ ६७६ ॥**

सर्वं व्याप्य तदाधारता तत्स्थितिहेतुता । 'यो लोकत्रयमाविश्य बिभर्ति' इति स्मृतेः ॥ ६७६ ॥

**यो नः पिता विधातेति सृष्टिश्चाश्रावि केशवात् ।**
**अतो भुक्त्यै न ते ब्रह्म मोक्षमिच्छेज्जनार्दनात् ॥ ६७७ ॥**
**एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ।**
**इति स्मृतेनापि मुक्त्यै व्यर्थमेवाभवत्ततः ॥ ६७८ ॥**

द्वितीयं निराह **य इति** । अत एव न तृतीय इत्याह **अत इति** । शरीरेन्द्रियविषयाणां सृष्टेरभावे भुक्तिः कथङ्कारं स्यादिति भावः । नापि मुक्त्या इति चतुर्थोऽपीत्याह **मोक्षमिति** ॥ ततः यावद्विशेषाणामभावात् । **व्यर्थं** प्रयोजनसामान्यशून्यम् ॥ ६७७ ॥ ६७८ ॥

**व्याप्तं चैतन्ययुग्मं चेद्ब्रह्मणि द्वैतकल्पनात् ।**
**अनर्थश्च भवेत्तस्माद्ब्रह्मै(कं)को विष्णुरेव हि ॥ ६७९ ॥**

न केवलं व्यर्थं किं त्वनर्थप्रदं च निर्गुणब्रह्मकल्पनमित्याह **व्याप्तमिति** । **युग्मं** एकं नारायणाख्यं प्रामाणिकम्, अपरं कल्पित-

व्याप्तत्वोपेतं पराभिमतं निर्गुणमप्रामाणिकम् । **अनर्थः** 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्युक्तनित्यनिरयरूपः ॥ ६७९ ॥

**प्रागुक्तयुक्त्या सगुणनैर्गुण्यं यन्मृतौ च न ।**
**अतोऽन्यन्निर्गुणं वाच्यं तदा ब्रह्मद्विता न किम् ॥ ६८० ॥**

ननु न मया ब्रह्मयुग्ममुच्यते येनानर्थः स्यात् । किं तु सगुणस्यैव गुणप्रहाणेन नैर्गुण्यमित्युच्यते इति चेन्मोक्तं विसार्षीरित्याह **प्रागुक्तयुक्त्येति** । गुणानां स्वाभाविकत्वयुक्त्या । **मृताविति** तवेति शेषः । तमः प्राप्तावपि अनन्तकालेऽपीति यावत् । **ब्रह्मद्विता** सगुणादन्यस्याप्रामाणिकस्य गुणशून्यस्य साङ्केतिकब्रह्मणः कल्पनादिति भावः ॥ ६८० ॥

**एवं चावसराभावदुःस्थं व्यर्थमनर्थदम् ।**
**विष्णोरन्यत्परं ब्रह्म को विद्वान्वक्तुमर्हति ॥ ६८१ ॥**

निगमयति **एवमिति** ॥ ६८१ ॥

**नास्ति नारायणसमं न भूतं न भविष्यति ।**
**एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम् ॥ ६८२ ॥**

सगुणं ब्रह्मापरं, परं तु निर्गुणं इति मायिमतं सुस्पष्टभारतवाक्यैर्निराकरोति नास्तीत्यादिभिरष्टभिः ॥ **सत्यवाक्येन** यथार्थवाक्येन । सर्वार्थानिति फलरूपतात्पर्यलिङ्गोक्तिः ॥ ६८२ ॥

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ ६८३ ॥**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ ६८४ ॥**

**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ ६८५ ॥**

परमात्मेति पुरुषोत्तम इति प्रथितत्वोक्त्या तस्यैव परब्रह्मत्वमभिप्रेयते ॥ ६८३ ॥ ६८४ ॥ ६८५ ॥

**मत्तः परतरं नान्यत्किञ्चिदस्ति धनंजय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ६८६ ॥**

**सूत्रे मणिगणा इवेति ॥** अनेन दृष्टान्तेन परिणाम्युपादानत्वं विवर्तोपादानत्वं च निराकृत्य निमित्तकारणत्वं स्थितिहेतुत्वं व्यवस्थापयता पराभिमतस्य शुद्धस्याधिष्ठानाभिमतस्य ब्रह्मत्वं प्रतिषिध्यते । न हि सूत्रं मण्यात्मना परिणमते न वा मण्यारोपाधिष्ठानमिति भावः ॥ ६८६ ॥

**ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।**
**जगद्वशेऽवर्ततेदं कृष्णस्य सचराचरम् ॥ ६८७ ॥**
**रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।**
**ब्रह्मा मामाश्रितो नित्यं नाहं कश्चिदुपाश्रितः ॥ ६८८ ॥**

अवर्तत इदं इति पदच्छेदः । ६८७ ॥ ६८८ ॥

**सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।**
**वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥ ६८९ ॥**
**इति भारतवाक्यानि स्पष्टीकुर्वन्ति तं प्रभुम् ॥ ६९० ॥**

**वेदेति ॥** 'विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः' इति श्रुत्यर्थोपबृंहणेन केशव एव परमं ब्रह्मेति प्रतिज्ञायते ॥ ६८९ ॥ ६९० ॥

**उपक्रम्याखिलेशत्वं पुरा नारायणस्य यत् ।**
**मध्येऽभ्यस्तं तदेवान्तेऽप्युपसञ्जहुरञ्जसा ॥ ६९१ ॥**
**तस्माद्भारतवाक्यानां लक्ष्मैकार्थ्यसिद्धये ।**
**विष्णोरत्युत्तमत्वाख्यमर्थमाहेति सिद्ध्यति ॥ ६९२ ॥**

भारतवाक्यानीत्यस्यानुकर्षः । **अंजसा** सशपथम् । यदित्यस्योत्तरश्लोके तस्मादित्यनेनान्वयः । **ऐकार्थ्यं** एकार्थप्रतिपादकत्वलक्षणैकवाक्यता । ॥ ६९१ ॥ ६९२ ॥

**नारायणपरा वेदा नारायणपरा मखाः ।**
**नारायणपरा योगा नारायणपराः क्रियाः ॥ ६९३ ॥**
**नारायणपरं ज्ञानं नारायणपरं तपः ।**
**नारायणपरो धर्मो नारायणपरा गतिः ॥ ६९४ ॥**

उक्तार्थे भागवतवाक्यानि प्रमाणयति **नारायणेत्यादिभिः** ॥ मखयोगक्रियाऽऽदीनां नारायणपरत्वं 'मां विधत्तेऽभिधत्ते मां' इति श्लोकोक्तरीत्याऽवसेयम् ॥ ६९३ ॥ ६९४ ॥

**सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ।**
**विश्वं पुरुषरूपेण परिपाति त्रिशक्तिभृत् ॥ ६९५ ॥**
**स एव भगवान्लिङ्गैस्त्रिभिरेतैरधोक्षजः ।**
**स्वलक्षितगतिर्ब्रह्मन्सर्वेषां मम चेश्वरः ॥ ६९६ ॥**

**सृजामीति** । नारदेन चतुर्मुखं प्रति त्वमेव सर्वोत्तम इति पररीत्या पूर्वपक्षे कृते तन्निराकरणेन सिद्धान्तस्थापनपरा चतुर्मुखोक्तिरियम् । स्वयं ब्रह्मणैव स्वस्य रुद्रस्य च सर्वेश्वरतां प्रतिषिध्य हरेरेव तस्याः सयुक्तिकं स्वरूपलक्षणताप्रतिपादनेन तत्र तात्पर्यातिशयोऽवसीयते ॥ ६९५ ॥ ६९६ ॥

**तमुपागतमालक्ष्य सर्वे सुरगणादयः ।**
**प्रणेमुस्सहसोत्थाय ब्रह्मेन्द्रत्र्यक्षनायकाः ॥ ६९७ ॥**

**तत्तेजसा हतरुचस्सन्नजिह्वास्ससाध्वसाः ।**
**मूर्ध्न्युद्धृताञ्जलिपुटा उपतस्थुरधोक्षजम् ॥ ६९८ ॥**

**अप्यर्वाग्वृत्तयो यस्य महित्वे स्वभुवादयः ।**
**यथामति गृणन्ति स्म कृतानुग्रहविग्रहम् ॥ ६९९ ॥**

चतुर्थस्कन्धवाक्यमुदाहरति **तमिति** नारायणम् । उपागतं दक्षाध्वरे प्रादुर्भूतम् । आदिपदग्राह्यतावच्छेदकं अध्वरमण्टपवृत्तित्वम् । सर्वे इति असङ्कोचो ज्ञाप्यते । व्यर्थं सदिति न्यायात् । महदागमनं कारणम् । प्रत्युत्थानादिकं, तत्तेजःपराहततेजस्त्वं, जिह्वाऽवसादः, साध्वसं, प्रणामः, उपस्थानं इत्यादीनि कार्याणि । अतः प्रत्येकं कार्यानुमानानि । बहुत्वं संवादेन दार्ढ्यहेतुः । विमता विष्ण्ववराः तत्कार्यव्यापारवत्त्वादिति प्रत्येकं प्रयोक्तव्यम् । विपक्षे हेतूच्छित्तिर्बाधिका । **अधोक्षजं** इन्द्रियजन्यज्ञानागोचरम् । अव्यक्तस्वभावमिति यावत् । **कृतानुग्रहविग्रहम्** अनुग्रहेण प्रकटीकृतदेहम् । **अर्वागिति** साक्षादेवावरत्वोक्तिः । स्वभुवादय इत्यत्र सन्ध्यभावश्छान्दसः । भूधातोः न परमात्मनीव प्रादुर्भावमात्रार्थकत्वं किंतूत्पत्तिपरत्वं इति द्योतनद्वारा परममुख्यस्वभूत्वाभावज्ञापनाय । **यथामतीत्यनेन** साकल्येन तद्गुणविषयिणी मतिरपि नास्ति किमु तदभिधानरूपा स्तुतिः किमु पुनः तत्साम्यप्राप्तिसंभावनाऽपि इति हृदयम् ॥ ६९७ – ६९९ ॥

**देवासुराणां मघवान्प्रधानस्तस्य शङ्करः ।**
**तस्य ब्रह्मा प्रभुस्तस्य स्वयं नारायणः किल ।**
**द्विजानां देवतानां च यो देवस्स स्वयं किल ॥ ७०० ॥**

ऋषभनामकपरमात्मनः स्वपुत्रान्प्रति तत्वोपदेशात्मकं पञ्चमस्कन्धगं भागवतवचनमर्थतः संगृह्णाति **देवेति** ॥ तारतम्यान्तगत्वेन स्वस्य सर्वोत्तमत्वमवधार्यते । मूलस्थद्विजदेवदेव इत्यस्यार्थकथनं **द्विजानां इति** । द्वन्द्वगर्भः षष्ठीतत्पुरुषः ॥ ७०० ॥

**निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।**
**हिरण्यगर्भश्शर्वश्च कालाख्यारूपिणस्तव ॥ ७०१ ॥**

**निमित्तमिति** कृष्णं प्रति भक्तवचनम् । **द्वारमात्रम्** न तु मुख्यनिमित्तम् । **सर्गनिरोधयोरिति** यथाक्रममन्वयः । काल इत्याख्यारूपेऽस्य स्त इति तस्य । कालाख्येति बहुव्रीहिमाश्रित्य रूपविशेषणे कालाख्यरूपिण इति स्यादित्यवधेयम् । 'अन्तर्बहिःपूरुषकालरूपैः' इत्युक्तेर्बहिःस्थितं कालरूपम् । संहारकं वा । 'कालोऽस्मि लोकक्षयकृत्प्रवृद्धः' इति गीतोक्तेः । ॥ ७०१ ॥

**सरस्वत्यास्तटे राजन्नृषयस्सत्रमासत ।**
**वितर्कस्समभूत्तेषां त्रिष्वधीशेषु को महान् ॥ ७०२ ॥**

ऋषिभिर्भृगुद्वारा परीक्षापूर्वकं सर्वोत्तमत्वस्य निर्णीतत्वान्निरवकाशं वाक्यान्तरम् **सरस्वत्या इत्यादिकम्** । **वितर्कः** मीमांसा ॥ ७०२ ॥

**तच्छ्रुत्वा मुनयस्सर्वे विस्मिता मुक्तसंशयाः ।**
**भूयांसं श्रद्दधुर्विष्णुं यतश्शान्तिर्यतोऽभयम् ॥ ७०३ ॥**

**तत्** भृगुवचनम् । ब्रह्मशिवयोरज्ञानं तत्कार्यकोपाद्यनुमितं, विष्णोः सर्वज्ञतां तत्प्रयोज्यनिर्विकारत्वानुमितां च वर्णयदिति उपस्कर्तव्यम् । **श्रद्धां** द्विविधां, अस्तीति अनेन मम प्रयोजनमस्तीति च द्विविधामपि दधुः । **शांतिः** सुखम् । **अभयं** आत्यन्तिकदुःखनिवृत्तिः । मुक्तिरिति यावत् । अनेन 'पूर्णो

देवो जीवसंघस्त्वपूर्ण' इति कौशिकश्रुत्युक्तोपपत्तिः फलं चेति तात्पर्यलिङ्गं उक्ते ज्ञेये ॥ ७०३ ॥

**इत्याद्यनन्तवाक्यानि सन्ति भागवते स्फुटम् ।**
**सर्वोत्तमपरब्रह्मभावे नारायणस्य हि ॥ ७०४ ॥**

**अनन्तानि,** सुबहूनि आदिमध्यावसानेषु सर्वत्रेत्यर्थः । स्फुटं **सन्ति** निरवकाशतया प्रतिपादकानि वर्तन्ते ॥ ७०४ ॥

**समस्तधर्मशून्यं तन्निर्गुणं कुत्र कथ्यते ॥ ७०५ ॥**

समस्तधर्मशून्येति हेतुगर्भम् । शब्दप्रवृत्तिनिमित्तधर्मसामान्यशून्ये शब्दप्रवृत्तेरेवासंभवादिति । **कुत्रेति** । न केवलं भागवते । शब्दमात्रेणापि कथनमसंभवीति भावः ॥ ७०५ ॥

सत्यं शौचं दया दानं त्यागस्सन्तोष आर्जवम् ।
शमो दमस्तपस्साम्यं तितिक्षोपरतिः श्रुतम् ॥ ७०६ ॥
ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो धृतिः स्मृतिः ।
स्वातन्त्र्यं कौशलं कान्तिरसौभगं मार्दवं क्षमा ॥ ७०७ ॥
प्रागल्भ्यं प्रश्रयं शीलं सह ओजो बलं भगः ।
गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः ॥ ७०८ ॥
इमे चान्ये च भगवन्नित्या यत्र महागुणाः ।
प्रार्थ्या महत्त्वमिच्छद्भिर्न च यान्ति स्म कर्हिचित् ॥ ७०९ ॥
तेनाहं गुणपात्रेण श्रीनिवासेन सांप्रतम् ।
शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥ ७१० ॥
इति भागवते स्पष्टं धराधर्मकथान्तरे ।
गुणानां नित्यताभ्यासान्निर्गुणं स्यात्कदा वद ॥ ७११ ॥

भूदेव्या धर्मं प्रति वचनं भागवते प्रथमस्कन्धे **सत्यमित्यादि** । अत्र शमादीनां भगवद्गुणानां लौकिकेभ्यो विशेषा भागवतटिप्पणीतोऽवगन्तव्याः । **इमे** चत्वारिंशत् । अन्ये च अनन्ताः । **नित्याः** अनादयश्चेति ग्राह्यम् । महागुणाः प्रत्येकं निरवधिकाः । **प्रार्थ्याः** बिम्बभूतस्थत्वात्स्वयोग्यतत्तद्गुणलाभायोपास्या इत्यर्थः । न तु त एव मे स्युरिति भावनीयाः । स्वायोग्यत्वेन तत्कामनाया अधःपातहेतुत्वात् । **न च यान्तीति** । यावद्धर्मिभाविन इति भावः । अनेन गुणत्यागलक्षणाश्रयणेन मायावादिनामैक्यप्रत्याशा गर्भस्रावेण परास्ता । अभ्यासेन नित्यत्वस्य सतात्पर्यमवधारणेन तत्त्यागस्य प्रमाणपराहतेः ॥ ७०६ – ७११ ॥

**महागुणान्स्थापयन्ती महीयसि मही हरौ ।**
**जडतुच्छगुणाभावं नैर्गुण्योक्तेर्गतिं ददौ ॥ ७१२ ॥**

**स्थापयन्ती** प्रार्थ्या इति गुणानां बिम्बत्वस्योक्त्याऽनौपाधिकत्ववर्णनेन, नित्यत्वाभ्यासेन त्यागायोगोक्त्या च निरवकाशतया सिद्धान्तयन्ती । **जडेति** प्रकृतिगुणेत्यर्थः । **तुच्छेति** सान्तत्वसातिशयत्वदोषमिश्रितत्वाद्युपप्लुतजैवगुणेत्यर्थः । **गतिं** अवकाशम् । **ददौ** सूचितवती । निषेधवाक्यानां प्रमितेतरनिषेधकत्वस्य क्लृप्तत्वात् ॥ ७१२ ॥

**मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।**
**यदासीत्तत्त एवाद्यस्स्वयम्भूस्समभूदजः ॥ ७१३ ॥**
**इति भागवते कृष्णो निस्संख्यान्स्वगुणानपि ।**
**अनन्तानाह देहांश्चाप्यनन्तानवतारगान् ॥ ७१४ ॥**

भागवतस्थं भगवद्वचनं **मयीति** । गुणानां विग्रहाणां च प्रत्येकं संख्यातश्चापरिच्छेदोक्त्या मायावाद्यभिमतं वस्तुतः परिच्छेदराहित्यमपाकृतं

ध्येयम् । **यदासीदिति** पद्मनाभत्वलिङ्गेन विष्णुरेवानन्त इति निर्धार्यते । ॥ ७१३ ॥ ७१४ ॥

**देशतः कालतश्चैव गुणतोऽपि ह्यनन्तता ।**
**अतस्त्वन्निर्गुणब्रह्म कस्मिन्देशे कदा भवेत् ॥ ७१५ ॥**
**सर्वेभ्यो देशकालेभ्यः प्रायस्तत्तु बहिष्कृतम् ।**
**लज्जया शशशृङ्गस्य मध्ये लीनमभूत्सदा ॥ ७१६ ॥**

अनन्तता विष्णोरिति शेषः । अयमभिप्रायः । निर्गुणसत्त्वमभिलषता क्वचिद्देशकालयोस्तदवस्थितिर्वक्तव्या । क्वचिदपि वा शास्त्रभागे तदुक्तिश्च । देशकालसंबन्धित्वमेव सत्त्वम्, मानाधीना मेयसिद्धिरिति च व्यवस्थितेः । सगुणनिर्गुणयोः क्वापि कदाऽपि सहावस्थानं परस्परप्रतिषेधरूपतया दुर्घटम् । एवं समानमानमेयत्वं च । सगुणं सर्वदेशकालसंबन्धितया सर्वशास्त्रप्रतिपाद्यमिति निष्टङ्कितम् । एवं च निर्गुणस्य देशकालसंबन्धाभावात् साधकमानाभावाच्चात्यन्तासत्त्वमेवेति । प्रायः इति गन्धर्वनगरमरुमरीचिकादाववस्थानमनुज्ञायत इत्यपहासार्थम् । शशशृङ्गस्य मध्ये इत्युपलक्षणम् । संवत्सरस्य चतुर्दशे मासे सप्तदश्यां तिथौ इत्यादिग्राह्यम् । एवं चन्द्रिकोक्तदिशा स्वसिद्ध्यर्थं भागवतस्य त्रयोदशस्कन्धे ब्रह्मसूत्रपञ्चमाध्यायादिके चेत्यपि ग्राह्यम् ॥ ७१५ ॥ ७१६ ॥

**समस्तधर्मशून्यं च ब्रह्मान्यत्किल वर्तते ।**
**स्वयं तद्दर्शनात्सर्वधर्मशून्यो भवेत्किल ॥ ७१७ ॥**

परमतं व्याहतिपरम्परया दूषयितुं निष्कृष्य सोपहासमनुवदति **समस्तेति** । ब्रह्मशब्दस्य समस्तसद्धर्मवद्वाचित्वात् समस्तधर्मशून्यं ब्रह्मेति

व्याहतिः । एकमेवाद्वितीयं ब्रह्मेति धर्मिग्राहकमानेनैकत्वेन सिद्धस्य ब्रह्मणो ब्रह्मान्यदिति द्वित्वोक्तौ व्याहतिः । वर्तते इति सत्त्वोक्तौ तद्धर्माङ्गीकारापत्त्या व्याहतिः । दृश्यत्वधर्मशून्यस्य दृश्यत्वोक्त्या व्याहतिः । एवं व्याहतिधाराया अविच्छेदस्य स्फुटत्वात्किलेत्यपहासः ॥ ७१७ ॥

**यदा मानेन तेनेदं साध्यते मोक्षसिद्धये ।**
**दृश्यते च तदा मानमेयता ज्ञानदृश्यता ॥ ७१८ ॥**

**इति धर्मद्वयं प्राप्तं तत्पदेन च वाच्यता ।**
**लक्ष्यता वा यतोऽवश्यं तेन प्राप्ता पदार्थता ॥ ७१९ ॥**

इदं निर्गुणब्रह्माख्यं मेयम् । अत्र प्रष्टव्यं, मेयं मानसापेक्षं न वेति । नेति पक्षे स्वन्यायस्ववचनस्वक्रियाविरोधाः सर्वेऽपि पद्धत्युक्तरीत्या संभूय समापतेयुः । आद्ये इदमुपतिष्ठते **यदेति** । मानं भवत् आगमोऽनुमानं प्रत्यक्षं वा । पक्षत्रयेऽपि दोषमाह **मानेति** । मोक्षसिद्धये दृश्यते इति तृतीये दोषमाह **ज्ञानदृश्यतेति** । साक्षात्कारविषयतेति यावत् । आद्येऽपि ब्रह्म पदार्थो वा वाक्यार्थो वा । आद्येऽपि वाच्यं लक्ष्यं वा । पदार्थत्वे पदार्थत्वेनैव सधर्मकत्वमित्याह **तेनेति** । न वाच्यं अनभ्युपगमात् । तथा हि तद्वाक्यं 'ब्रह्मण्यवाच्ये यो विद्वान्वाच्यतामधिगच्छति ॥ स निष्पो निमित्तानां विरहैः प्रतिबोध्यतामि'ति । अभ्युपगमे वाच्यत्वस्य तन्निमित्तस्येति धर्मद्वयाङ्गीकारेण निष्पत्वापत्तेः । न लक्ष्यं । लक्ष्यत्वस्य लक्ष्यतावच्छेदकस्य लक्षणाप्रयोजकशक्यसंबन्धित्वस्य चेति बहुधर्मोपनिपातात् । तदाह **लक्ष्यता वेति** ॥ ७१८ ॥ ७१९ ॥

**व्यावृत्त्यै शशशृङ्गस्य वस्तुत्वं सर्वथा तव ॥ ७२० ॥**

किञ्च तिष्ठतु प्रमाणविशेषचर्चा । ब्रह्म शशशृङ्गाद्व्यावृत्तं न वा । नेति पक्षेऽसत्त्वापत्तिः शून्यमतप्रवेशश्च । आद्ये व्यावर्तकधर्मोऽभ्युपेयः । न हि तद्विना व्यावृत्तिसिद्धिः । व्यावर्तकश्च वस्तुत्वधर्मो वाच्यः । अन्यथा तत्र प्रमाणप्रवृत्त्ययोगात् । न च वस्तुत्वस्य प्रमाणप्रवृत्तिप्रयोजकत्वे विवदितव्यम् । तुच्छेऽपि तत्प्रवृत्तिप्रसङ्गात् । तथा च सर्वथा वस्तुत्वमङ्गीकार्यमित्याह **व्यावृत्त्या इति** ॥ वाक्यार्थो हि भेदः संसर्गो वा । तदुभयमपि अखण्डे असङ्गे च तव ब्रह्मणि न संभवतीति स्फुटमेवेति हृदयम् । ॥ ७२० ॥

**अतस्तत्साधयन्नेव तद्रूपमवसादयन् ।**
**साधकश्चासि तस्य त्वं बाधकश्चेति किं परैः ॥ ७२१ ॥**

**अतः** मेयत्वादिगुणाभावसाधनाय मानानां उदाहर्तृत्वात् । वचनाभावसाधनाय वचनं प्रयुञ्जानस्य मूकस्येव स्वक्रियाविरोधापत्तेरिति भावः । **साधयन्नेवेति** अवसादनसमकालीनत्वं साधनस्य द्योत्यते । तेन 'न तस्य हेतुभिस्त्राणं उत्पतन्नेव यो मृत' इति आभाणकविषयतां सूचयति । साधकश्चासि त्यापाततः । वस्तुत आह **बाधकश्चेति** । चः एवार्थः । **परैः** परकर्तृकदूषणप्रयत्नैः । **किं** किं प्रयोजनम् । मृतमारणप्रयत्नेनेवेति भावः ॥ ७२१ ॥

**मृण्मयस्य हि लिङ्गस्य मज्जनं रूपमार्जनम् ।**
**न चेत्प्रमाणशून्यत्वाद्गतमस्नेहदीपवत् ॥ ७२२ ॥**

तत्राभाणकमाह **मृण्मयस्येति** । **गतं** निर्गुणत्वमिति शेषः । **अस्नेहदीपवत्** तैलशून्यतैलदीपवत् । साधकाभावादेवेति भावः ॥ ७२२ ॥

**ब्रह्मशब्देन चाप्युक्ता गुणबृंहिततैव हि ।**
**अतस्तत्पदयोश्च स्यात्परस्परविरुद्धता ॥ ७२३ ॥**

तिष्ठतु मानान्तरविरोधः ॥ मे माता वन्ध्येतिवद्ब्रह्म निर्गुणमित्येतदपि पदयोरेव मिथो विरोधाज्ज्ञात्युत्तरस्याऽऽद्यं निदर्शनमित्याह **ब्रह्मेति** ॥ ७२३ ॥

**यदि ज्ञापनमात्रेण पुनस्तेषां निवृत्तता ।**
**( मानशक्तेः पुनः प्राप्त्या निर्गुणं ते कदाऽपि न ) ।**
**तद्वानां ज्ञापकत्वे तु नोक्तदोषो निवर्तते ॥ ७२४ ॥**

'निर्विशेषत्वमेतेन मूकोऽहमितिवद्ववेदि'ति अनुव्याख्यानसुधोक्तदिशा चोद्यपरिहारौ दर्शयति **यदीत्यादिभिः** । निर्विशेषत्वसाधकमानोदाहरणे तन्मानमेयत्वरूपविशेषेणैव सविशेषत्वप्राप्तिरित्युक्तम् । तदाह **ज्ञापनमात्रेणेति** । एतद्विशेषनिवृत्तिर्न तावन्निर्विशेषत्वसाधनोपन्यस्तपूर्वमानेनैव । तन्मानमेयत्वमुपजीव्यैव लब्धात्मनोपजीवकेन पुनस्तस्यैव निषेधायोगात् । अतस्तन्निवृत्तये मानान्तरमुपन्यसनीयम् । तेन च मानान्तरमेयत्वरूपविशेषप्राप्तिरित्याह **पुनरिति** । तन्निवृत्तये चोक्तरीत्याऽगत्या पुनर्मानान्तरम् । तेन च पुनस्तन्मेयत्वरूपविशेषापत्तिरिति कदाऽपि न निर्विशेषसिद्धिरित्याह **कदेति** ।

किं चैतद्विशेषनिषेधायोपन्यस्तमानमेयत्वादिकं ब्रह्मनिष्ठं अन्यनिष्ठं वा । नाद्यः तेनैव सविशेषत्वापत्तिरित्युक्तो दोष इत्याह **तद्वानामिति** । ॥ ७२४ ॥

**अन्यगानां ज्ञापकत्वे ज्ञाप्यस्याप्यन्यनिष्ठता ।**
**असतो ज्ञापकत्वे स्याज्ज्ञाप्यमप्यसदेव हि ॥ ७२५ ॥**

न द्वितीय इत्याह **अन्येति** । **ज्ञाप्यस्य** निर्विशेषत्वस्य । **अन्यनिष्ठतेति** । साध्यसाधनयोरैकाधिकरण्यनियमात् । न ह्यन्यस्य भोजनेन अन्यस्य तृप्तिः लौकिकी । अथ मानमेयत्वादिकं असदिति न तेन सविशेषत्वमिति मन्यसे तर्हि तद्बलात्सिध्यन्निर्विशेषत्वमपि असदेव । असतोऽसाधकत्वस्य प्रसिद्धे-रित्याह **हीति** ॥ ७२५ ॥

**आरोपितेन धूमेन सिद्ध्येदारोपितोऽनलः ।**
**शूद्रीप्रसूतपुत्रस्य शूद्रता लोकसंमता ॥ ७२६ ॥**

मानमेययोः सत्त्वनियमे व्यतिरेकदृष्टान्तमाह **आरोपितेनेति** । कार्य-कारणयोः सजातीयत्वनियमेऽन्वयदृष्टान्तमाह **शूद्रीति** ॥ ७२६ ॥

**व्यावहारिकसत्त्वं तु राजाऽश्वखुरताडनम् ।**
**सशेषबाधाद्यदतिक्रूरं निश्शेषबाधनम् ॥ ७२७ ॥**
**ब्रह्मज्ञानेन बाधो हि सर्वबाधो भवन्मते ।**
**ब्रह्मप्रमाबाध्यता च व्यावहारिकसत्यता ॥ ७२८ ॥**

'व्यवहारसतश्चापि साधकत्वं तु पूर्ववदि'त्यनुव्याख्यानमनुरुध्याह **व्यावहारिकेति** । प्रातिभासिकं व्यावहारिकं चेति द्विधा मिथ्येति परमतम् । बाध उभयेषां समः । आद्ये ब्रह्मज्ञानेन । द्वितीये तदितरेण । तत्स्वरूप-विवेचने तयोराद्योऽतिक्रूर इत्याह **निःशेषेति** । सत्यत्वेन प्रमितवियदाद्यशेष-प्रपञ्चेत्यर्थः । द्वितीये तु नैवमित्याह **सशेषेति** । मिथ्यात्वेनोभयसंमता-प्रामाणिकरूप्यादीत्यर्थः । राजाश्वो ब्रह्म, खुरस्तज्ज्ञानं, तेन बाधस्ताडनम् । तेन सर्वदेहवियोग एव । अन्याश्वखुरताडने तु बाधयोग्यस्यावयवैक-देशस्यैव । इदं च परीत्यैव । ब्रह्मज्ञानेन निवर्तमानस्य बन्धादिप्रपञ्चस्य सुतरां सत्यत्वस्यैव सिद्धेः । तदुक्तं 'इत्युक्तेर्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते' इति । तदाह **भवन्मते इति** । न वस्तुत इति भावः ॥ ७२७–७२८ ॥

**त्रिकालासत्त्वसाम्ये तु किं ज्ञानान्तरतः फलम् ।**
**परप्रतारणेन स्याद्दोषोऽधिकतरस्तव ॥ ७२९ ॥**

**साम्ये** तुच्छव्यवहारसतोरिति शेषः । **ज्ञानान्तरेति** ब्रह्मज्ञानेत्यर्थः । **फलं** सत्त्वसिद्धिरूपम् । असत एव व्यावहारिकेति मायिनां परिभाषा । तया सिध्यत्सत्त्वमपि परिभाषिकमेव । अङ्गीकृतं चैतत्परैरेव । यथोक्तं 'बाध्यविषये च व्यावहारिकप्रामाण्यमिति व्यवहारस्याद्वैतिपरिभाषामात्रसिद्धत्वादि'ति कल्पतरुपरिमळे ॥ न चेत्सत्त्वसिद्धिः परपरिभाषया, किं तर्हि तत्फलमित्यत आह **परप्रतारणेति** । 'ततो भूय इव तमो य उ विद्यायां रता' इति श्रुत्यनुशिष्टं प्रतारणेनाधिकदोषेणातिघोरं तम एवेति भावः । **अधिकतरं** इतरेभ्योऽधिकाच्छून्यवादिनोऽपि सकाशादिति शेषः ॥ ७२९ ॥

**किं च बाधस्य बाध्यत्वे गुणानां स्यादबाध्यता ।**
**बाधस्याबाध्यतायां तु सदद्वैतमतं गतम् ॥ ७३० ॥**

मिथ्यात्वं मिथ्या सत्यं वा । आद्ये गुणानां अतिशयेन सत्त्वसिद्धिरित्याह **बाधस्येति** । द्वौ नञाविति न्यायात् । विमता गुणाः सत्या मिथ्याभूतमिथ्यात्वकत्वात् ब्रह्मवत् इति न्यायामृतदर्शितः **प्रयोगोऽनुसन्धेयः** । द्वितीयेऽपसिद्धान्त इत्याह **सदिति** । न तु मिथ्यात्वनिषेधमात्रे तात्पर्यम् । तेन न नित्यसमजात्युत्तरमिति शङ्कावकाशः । विस्तरो न्यायामृते सामान्यतो मिथ्यात्वभङ्गे ॥ ७३० ॥

**तस्यापि ब्रह्मरूपत्वे पुनर्धर्मित्वमापतेत् ।**
**जडत्वं भावसापेक्षप्रतीतित्वमभावता ।**
**इत्याद्यभावधर्माणां ब्रह्मण्येव प्रसक्तितः ॥ ७३१ ॥**

ननु नापसिद्धान्तो गुणाभावस्य ब्रह्मस्वरूपत्वाङ्गीकारादित्याशङ्कते **तस्येति** । परिहरति **पुनरिति** । गुणनिषेधायोपक्रम्य सत्यस्य गुणाभावस्यैव ब्रह्मस्वरूपगुणत्वाभ्युपगमे घट्टकुटीवृत्तान्त इति भावः । नैष दोषः । 'अभावधर्मा नाद्वैतं घ्नन्ति' इति मण्डनमिश्रोक्तेरिति चेत् तदङ्गीकारेऽनेकभावाङ्गीकारस्य बलादापातादित्याह **जडत्वमिति** । **अभावधर्माणां** अभावाश्रितानां भावधर्माणाम् ॥ ७३१ ॥

**अभावधर्मशून्यत्वे निषेधत्वं च तस्य न ।**
**निषेधप्रतियोगित्वं गुणानां नेत्यबाध्यता ॥ ७३२ ॥**

ननु तर्हि अभावधर्मा नाङ्गीक्रियन्ते । अतो नोक्तापत्तिरित्यत आह **अभावेति** । **तस्य** ब्रह्मणः । गुणानामित्युत्तरत्रापि संबन्धः । तस्य गुणाभावत्वासिद्धिः तस्य गुणानां निषेधासिद्धिश्च ॥ ७३२ ॥

**बो(बा)ध्यं चेन्निर्गुणत्वं स्यान्निर्गुणत्वं न सिद्ध्यति ।**
**न (बा)बोध्यं निर्गुणत्वं चेन्निर्गुणत्वं न सिद्ध्यति ॥ ७३३ ॥**

**बोध्यमिति** । बोध्यत्वेनैव सगुणत्वप्राप्तेः । **नेति** । प्रमाणाभावादेव । बाध्यमिति पाठे आद्ये प्रमाणाभावात् द्वितीये निर्गुणत्वस्यैव गुणतया प्राप्तेरिति भावः ॥ ७३३ ॥

**अतश्शुभगुणाम्भोधिर्हरिः सर्वेश्वरेश्वरः ।**
**ततः परतरं नान्यदिति सर्वं मनोरमम् ॥ ७३४ ॥**

अन्यत् । हिरण्यगर्भादिः पराभिमतं निर्गुणं वा ॥ ७३४ ॥

**एष निष्कण्टकः पन्था यत्र संपूज्यते हरिः ।**
**कुपथं तं विजानीयाद्गोविन्दरहितागमम् ॥ ७३५ ॥**

एष इति भीष्मस्य युधिष्ठिरं प्रति भारतवाक्यम् ॥ **पन्था** आगमः मतं वा । **संपूज्यते** परतरत्वेन प्रतिपाद्यते । **गोविन्दरहितागमं** उक्तविरुद्धार्थप्रतिपादकं तदुदासीनं वा ॥ ७३५ ॥

**इति भारतवाक्यं हि गोविन्दरहितागमम् ।**
**कुपथं वक्त्यतोऽप्यासीन्निर्मूलं निर्गुणं तत्र ॥ ७३६ ॥**

**निर्मूलं** साधकरहितं बाधितं च ॥ ७३६ ॥

**अवैष्णवपुराणानामवैष्णवमतस्य च ।**
**अवैष्णवश्रुतीनां च कुपथत्वमभूदहो ॥ ७३७ ॥**

**अवैष्णवपुराणानां** तथा प्रतीयमानानाम् । एवमवैष्णवश्रुतीनामित्यत्रापि ज्ञेयम् । **कुपथत्वं** पातनिकार्थेऽप्रामाण्यम् । अवैष्णवमतानां तु दुर्मार्गत्वमेव । तदुक्तं 'वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना । इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि' इति व्याससमृतौ ॥ ७३७ ॥

**हरेर्भिन्नत्वपूज्यत्वस्वामित्वप्रतिपादिका ।**
**निष्कण्टका माध्वशुद्धपद्धतिश्चेति सिद्ध्यति ॥ ७३८ ॥**

समित्युपसर्गार्थकथनं भिन्नेत्यादिकम् ॥ ७३८ ॥

**सम्यक्त्वार्थोपसर्गोऽसावसम्यक्त्वं निषेधति ।**
**सत्योऽभूत्तेन भेदादिरस्तं तत्सम्पूजनम् ॥ ७३९ ॥**

**असम्यक्त्वं** अभेदं समाधिकोपेतत्वं च ॥ **अस्तं** निरस्तम् ॥७३९ ॥

**शैवं ब्राह्मं वैष्णवं च पुराणमखिलं यतः ।**
**अतस्तेभ्यः पुराणेभ्यो यद्बहिस्तच्छ्रुतेर्बहिः ॥ ७४० ॥**

**ब्रह्मविष्णुशिवेभ्योऽपि ह्यन्यद्ब्रह्म मतं तव ।**
**न हि लोकस्य संमत्या पुराणं तत्र किञ्चन ॥ ७४१ ॥**

यत् त्रिदेवताभिन्नं त्वदभिमतं निर्गुणम् । **बहिः** अप्रतिपाद्यम् । **तत्** निर्गुणम् । **श्रुतेः बहिः** । पुराणानामपि पञ्चमवेदत्वप्रमितेः । वेदानां च 'गतिसामान्यादि'ति सूत्रानुसारेणैकार्थत्वाच्चेति भावः ॥ ७४० ॥ ७४१ ॥

**षट्कं षट्कं पुराणानां राजसं तामसं किल ।**
**षट्कं तु विष्णुविषयं सात्त्विकं मोक्षदं किल ॥ ७४२ ॥**

**किलेति** प्रमाणप्रसिद्धमित्यर्थः ॥ ७४२ ॥

**पाद्मस्य पूर्वकाण्डस्तु पूर्वपक्षो भवेद् ध्रुवम् ।**
**यतः पञ्चपुराणेभ्यस्सात्त्विकेभ्यो बहिष्कृतः ॥ ७४३ ॥**

**ध्रुवं** पूर्वेति नामसाम्येन अर्थपर्यालोचनया च ॥ ७४३ ॥

**विस्तरोऽस्य प्रमेयस्य ह्युत्तरत्र भविष्यति ।**
**तत्सात्त्विकपुराणोक्तो विष्णुर्ब्रह्म स्मृतेर्बलात् ॥ ७४४ ॥**

**तत्** सात्त्विकषट्कस्य वैष्णवनाम्ना प्रसिद्धेः ॥ ७४४ ॥

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।**
**बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ॥ ७४५ ॥**

**इतिहासपुराणाभ्यां** उक्तदिशा तत्प्रतिपाद्यविष्ण्वाधिक्यानुसारेण । **समुपबृंहयेत्** तत्परतया योजयेत् । **प्रचलिष्यति** प्रचालयिष्यति ॥ ७४५ ॥

**इति स्मृतेस्सत्पुराणभारतोक्तप्रकारतः ॥**
**यच्छ्रुतेर्योजना तस्माद्विष्णुर्ब्रह्म श्रुतेर्बलात् ॥ ७४६ ॥**

**ब्रह्म** परं ब्रह्म । तदुक्तं 'विष्णवाधिक्यविरोधीनि यानि वेदवचांस्यपि । तानि योज्यान्यानुकूल्याद्विष्णवाधिक्यस्य सर्वशः' इति ॥ ७४६ ॥

**वेदे रामायणे चैव पुराणे भारते तथा ।**
**आदावन्ते च मध्ये च विष्णुस्सर्वत्र गीयते ॥ ७४७ ॥**

श्रुतीस्मृतीनामैकार्थ्ये, विष्णुपरत्वे च स्पष्टां श्रुतिमाह **वेद इति** । **गीयते** परममुख्यवृत्त्या सर्वोत्तमत्वेनेत्यर्थः । अङ्गीकृतं चैतन्मायिभाष्यकारेणापि, 'भारभृत्कथितः' इति विष्णुसहस्रनामव्याख्यानावसरे इदमेव स्मृतिवाक्यमुदाहृत्य वेदादिभिः इममेव परत्वेन व्याकुर्वता । अतो न क्वापि निर्गुणोक्त्यवसरः ॥ ७४७ ॥

**मां विधत्तेऽभिधत्ते मां विकल्प्योपोह्य इत्यहम् ।**
**इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन ।**
**वेदैश्च सर्वैर्वेद्योऽहमेवेत्यवदधार हि ॥ ७४८ ॥**
**पूर्वाद्भारतवाक्याच्च पराद्भागवतोदितात् ।**
**स्पष्टगीतोक्तितस्सर्ववेदार्थो विष्णुरेव हि ॥ ७४९ ॥**

मामिति श्रीकृष्णस्योद्धवं प्रति भागवतवाक्यम् । 'वेदैश्च सर्वैरहमेव वेद्यः' इति गीतावाक्यम् । एवकारेण तदन्यत्र महातात्पर्यव्यवच्छेदः । ॥ ७४८ ॥ ७४९ ॥

**वेदमध्यगता निर्गुणोक्तिरप्याह तं प्रभुम् ।**
**निर्गुणो निष्कलोऽनन्तोऽभयोऽचिन्त्योऽचलोऽच्युतः ।**
**इति विष्णोर्दिव्यनामसहस्रे पठनादपि ॥ ७५० ॥**

सहस्रनामसु शिवेन निर्गुणनाम्ना विष्णोः कीर्तनादप्येवमित्याह **निर्गुण इति** ॥ ७५० ॥

**श्रुत्याख्यराजकन्या यत्सर्वा स्मृतिसखीवशा ।**
**अतस्तदुक्तमार्गेण सा व्रजेन्न त्वदुक्तितः ॥ ७५१ ॥**

वशेत्यनेन स्मृतीनां सर्वज्ञप्रणीतानां व्याख्यानरूपत्वेन प्राबल्यमभिप्रैति । व्याख्यानरूपस्योपसंहारस्योपक्रमात्प्राबल्यस्य स्थितेः ॥ **न त्वदुक्तित इति** । दुरागमैरापातप्रतीतितो वा न तात्पर्यनिर्णयः ॥ ७५१ ॥

**किञ्चाखण्डार्थवादं ते स्मर वाक्यं पदानि च ।**
**यत्र स्वार्थविशिष्टार्थपरं नैव हि किञ्चन ॥ ७५२ ॥**

ऐक्यं निर्गुणत्वं वा श्रुत्यर्थो मायावाद्यभिमताखण्डार्थवादे नैव संभवतीत्याह **किञ्चेति** । **अखण्डार्थवादं ते** त्वदुक्तं तल्लक्षणं 'संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् । उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता' इत्येवंरूपम् । **यत्र** वादे । **वाक्यं** वाक्यार्थभूतैक्यपरस्तत्त्वमस्यादिभागः । **पदानि** पदार्थपरः 'सत्यं ज्ञानमनन्तमि'त्यादिभागः । **स्वार्थविशिष्टार्थपरं नैव** सप्रकारकबोधजनकं नैव संभवति । स्वरूपमात्रपरत्वाङ्गीकारात् ॥७५२॥

**यस्मात्त्वदुक्तवाक्यार्थस्त्वयैव त्याजितोऽखिलः ।**
**तस्मादैक्यं नैव सिद्ध्येन्निर्गुणत्वादिकं च ते ॥ ७५३ ॥**

**वाक्यार्थः** संसर्गः । **अखिलः** द्विधा विभक्तः सर्वोऽपि वेदान्तः । ॥ ७५३ ॥

**इत्थं ह्यनशनेनैव श्रुतीस्त्वं तु जिघांससि ।**
**सत्यं कदशनेनापि नित्या सा वाग्जिजीविषेत् ॥ ७५४ ॥**

**इत्थं** निष्प्रकारकबोधजनकत्वाङ्गीकारेण । **अनशनेन** ज्ञानत्वव्यापक-सप्रकारकत्वस्यैवापलापेन । **जिघांससि** तत्स्वरूपमेवापलपसि । व्याप्यस्य ज्ञानत्वस्यैव निवृत्त्या ज्ञानजनकत्वस्यैवापलापेन वाक्यत्वमेव दुर्घटं प्रमाण-वाक्यत्वं तु सुतरामिति भावः । **नित्या वाक्** स्वतःप्रमाणभूता । **कदशनेन** सादृश्याद्यैक्यबोधनेन ॥ ७५४ ॥

**सर्वथाऽर्थपरित्यागात्सङ्कोचं को न मानयेत् ।**
**अतो निर्गुणवाग्वत्रे हरिं त्रिगुणवर्जितम् ॥ ७५५ ॥**

गौणीं वृत्तिमुपेत्य कदशनेनेत्युक्तम् । वस्तुतस्तु निर्गुणपदस्य त्रिगुणवर्जितत्वं मुख्यार्थ एवेत्याह **सर्वथेति** । मुख्यार्थस्यापरित्यागेन सङ्कोचमात्रस्य कदशनत्वाभावात् ॥ ७५५ ॥

**विमतः परमो मुक्तः परमात्मा घटादिवत् ।**
**मुक्तत्वाद्भावधर्माणामपि धर्म्यत्यबाधिता ।**
**अनुमा सगुणब्रह्मसाधिका बाधिका तव ॥ ७५६ ॥**

विमतः परमात्मा, भावधर्माणां धर्मी, मुक्तत्वात् घटवत् इति युक्त्याऽपि सगुणत्वं साधयति **विमत इति** ॥ अपिपदेनाभावधर्मधर्मित्वस्या-भावद्वैतवादिना परेणैवाङ्गीकारान्न तस्य साध्यत्वमिति सूचितम् ॥ **अबाधिता** उपलक्षणम् । निर्दोषेत्यर्थः ॥ ७५६ ॥

**बन्धाभावाधिकरणो मुक्तो ह्यत्र विवक्षितः ।**
**बन्धश्च चेतनस्यैव न घटे नापि मोचिते ॥ ७५७ ॥**

**अभावेति** । अत्यन्ताभावेत्यर्थः । तेन न दृष्टान्तः साध्यविकलः इत्याह **बन्धश्चेति** । नाप्यसिद्धिरित्याह **मोचित इति** । नित्यमुक्ते इत्यर्थः । मुक्तमात्रे तु बंधध्वंस एव ॥ ७५७ ॥

**अभावद्वैतवादे ते कथं नाभावधर्मिता ।**
**अव्याहतमतिर्मुक्ते बन्धाभावं न को वदेत् ॥ ७५८ ॥**

अभावद्वैतवादे बन्धात्यन्ताभाववत्त्वरूपमुक्तहेतोर्नासिद्धिः शङ्कार्हेत्याह **त इति । अभावधर्मिता** अभावधर्मवत्त्वरूपहेतोः पक्षवृत्तित्वम् । केनापि नासिद्धिः शङ्कार्हा मुक्तत्वस्य प्रमितत्वाद्भगवतीत्याह **अव्याहतेति** । प्रमाणे गौरवयुक्तेत्यर्थः ॥ ७५८ ॥

**मुक्तत्वं नास्ति चेत्तर्हि बद्धत्वेनैव धर्मवान् ।**
**बद्धपूरुषवत्स्याद्धि व्याहतिस्तु तवाधिका ॥ ७५९ ॥**

अस्तु व्याहतिः । मुक्तत्वं न मया स्वीक्रियत इति वदन्नुपेक्षणीय एव । तुष्यत्विति न्यायेनाह **तर्हीति** । बन्धाभावाभावो बन्ध एव । अभावाभावस्य भावरूपत्वात् । तथा च त्वदभ्युपेतं बद्धत्वमेव हेतूकृत्य **पूर्वोक्तं** साध्यत इत्याह **धर्मवान् इति** । भावधर्मवानित्यर्थः । तर्हि दृष्टान्तः साध्यविकल इत्यतोऽत्रपक्षेऽन्य एव दृष्टान्त इत्याह **बद्धेति** । व्याधिर्न **शान्तः** लशुनभक्षणं पापं तु तवाधिकमित्याह **व्याहतिरिति** ॥ ७५९ ॥

**पराङ्गीकारसिद्धेन हेतुना परदूषणम् ।**
**भक्तेषु करुणाबन्धबद्धस्तु स्यान्ममापि हि ॥ ७६० ॥**

ननु बद्धत्वं भवदसिद्धमित्यत आह **परेति** । तर्को दूषणानुमानप्रभेदः । तत्र च न स्वमतेन सिद्धिरपेक्षिता । 'पराभ्युपगममात्रस्य तत्र सिद्धिपदार्थत्वादि'ति पद्धत्युक्तेः । साधनानुमानत्वेऽप्याह **भक्तेष्विति** । तदुक्तं भागवते 'प्रणयरशनया धृताङ्घ्रिपद्मः' इति । लोकोऽपि 'प्रेमरज्जुकृतबन्धनमन्यदि'ति ॥ ७६० ॥

**नोभयं चेद्द्वयाभावाद्भावधर्मी घटादिवत् ।**
**बन्धो बन्धध्वंसरूपमुक्तत्वं च न यत्परे ।**
**नित्यमुक्ते नापि घटे ततः का मे क्षतिर्वद ॥ ७६१ ॥**

**उभयं** बद्धत्वं बन्धध्वंसलक्षणमुक्तत्वं च । आदिपदेन जडं पटादिकम् । **क्षतिः** असिद्धिः साधनवैकल्यं वा ॥ ७६१ ॥

**अभावाधारत्वतो वा भावधर्मी कपालवत् ।**
**समस्तधर्माभावेऽपि ह्यभावाधारता दृढा ॥ ७६२ ॥**

किं च भावधर्मधर्मित्वं साध्यं केवलान्वयि । अतो व्यभिचारशङ्काया एवाप्रसरात् हेतौ विशेषणोपादानं निष्प्रयोजनमित्युपेत्याह **अभावाधारत्वत इति** । अभावे प्रतियोगितया बन्धो न निवेश्यते । न वा प्रागभावादि विशेषो विवक्ष्यते ॥ पक्षादिकं प्राग्वदेव ॥ ७६२ ॥

**यतश्चाभावरूपोऽसौ विना साध्यं न गच्छति ।**
**अतो नासिद्धिशङ्काऽस्य नानैकान्त्यं च कुत्रचित् ॥ ७६३ ॥**

न च पक्षे हेत्वभावः । हेत्वभावाधारत्वस्य प्राप्त्या तत एव हेतुसिद्धेः । नापि व्यभिचारः । अभावानां चतुर्णामपि अधिकरणस्य सत्त्वनियतेर्भेदसौरभे व्युत्पादयिष्यमाणत्वेन सत्त्वरूपभावधर्मित्वव्यभिचारस्याशक्यशङ्कत्वात् । एतदाह **यत इति** ॥ ७६३ ॥

**गच्छन्स्वाभावदो यस्मात्तिष्ठंश्च स्वाश्रयत्वकृत् ।**
**गान्धर्वोद्वाहशीलस्य कुत्र स्याद्व्यभिचारिता ॥ ७६४ ॥**

किं च तिष्ठतु सत्त्वम् । अभावाधारत्वं हेतुरेव भावधर्मः । तथा च यत्र क्वचिद्धेतुसद्भावे साध्यसद्भावोऽपि । अतो न व्यभिचारः । तदभावे तु

सुतरां नेति न सर्वथा व्यभिचारावकाश इति प्रमेयमनुरूपदृष्टान्तोक्त्या साहित्यमुद्रया रञ्जयति **तिष्ठन्निति गान्धर्वेति च** । समयेन स्त्रीपुंसयोगो गान्धर्वविवाहः । विवाहाभावेऽपि संयोगो हि व्यभिचारः । न चास्मिन् विवाहे तत्संभवः । यत्र संयोगः तत्र समयरूपविवाहस्यैव वृत्तिः । संयोगाभावे तु व्यभिचारस्याप्रसक्तिरेवेति ॥ ७६४ ॥

**मुक्तत्वं भावधर्मो यत्तत्सत्त्वे धर्मवान्न किम् ॥ ७६५ ॥**

प्रागुक्तमुक्तत्वहेतोरप्रयोजकतां निराह **मुक्तत्वमिति** । **भावधर्मः** तद्विशेषः । **तत्सत्त्वे** विशेषसत्त्वे । **धर्मवान्** भावधर्मसामान्यवान् । **न किं** भवत्येव । तथा च हेतूच्छित्तिरेव विपक्षे बाधिका । न हि वृक्षत्वाभावे शिंशुपात्वं संभवतीति भावः ॥ अयमनुकूलतर्कः अनुपदं सुखरूपमित्यारभ्य ( श्लो ७७९ ) अतोऽनुकूलतर्काख्यमन्त्रिणेत्यन्तेन ( श्लो ७८७ ) विवरिष्यते ॥ ७६५ ॥

**अभावाधारतात्माऽयमर्धनारीश्वरो यतः ।**
**तत्स्वाधारे स्थले मूर्धभूषां योषां न किं दिशेत् ॥ ७६६ ॥**

**अर्धनारीनरेश्वरः** पार्वतीपतिः गङ्गाधरः । **अभावस्य** अभावद्वैतवादे अभावधर्मसमुदायस्य, अविद्यानिवृत्तेर्वा आधारता आत्मा यस्य सोऽयं मुक्तत्वहेतुः । अत्र अभावस्थानीयो रुद्रः । आधारतास्थानीया पार्वती गङ्गा वा । **स्वाधारे स्थले** परमात्मनि । अतो नासिद्धिशङ्का । **मूर्धभूषां** उत्तरभागस्थां आधारतां भावधर्मवत्वरूपं साध्यम् । स्वाधारे स्थले हेत्वधिकरणे सर्वत्र । **न किं दिशेत्** स्थापयत्येव । अतो न व्यभिचारशङ्का । यत्र रुद्रस्तत्रार्धाङ्ग्याः पार्वत्याः मूर्धभूषाया गङ्गायाः वा स्थितिर्यथा तथा मुक्तत्वहेतुमति भावधर्मवत्त्वं साध्यं नियतमित्याशयः ॥ ७६६ ॥

**नित्यत्वं धर्मशून्यत्वं सरूपत्वमबाध्यताम् ।**
**ब्रह्मण्यानन्दरूपत्वमनानन्दविरोधिताम् ।**
**ज्ञानरूपत्वमज्ञानशून्यतां नित्यशुद्धताम् ॥ ७६७ ॥**

**धर्मानेतान्विमुक्तानामप्यवश्यमपेक्षितान् ।**
**को वा निवारयेद्वादी शून्यत्वस्य निवारकान् ॥ ७६८ ॥**

मुक्तेः पुरुषार्थतासंपत्तये तत्स्वरूपान्तर्गतानां नित्यत्वज्ञानानन्दादिधर्माणामनङ्गीकारे ब्रह्मणो मुक्तत्वव्याघात एवेत्याह **नित्यत्वेत्यादिना** । **विमुक्तानामपि** सर्वेषां सामान्यतः । **अपेक्षितान्** अन्यथा मोक्षस्य पुरुषार्थत्वहानिः । अपिशब्देन किमुत नित्यमुक्तपरमात्मनस्तद्धर्मवत्वमिति ध्वनयति । **वादीति** । उक्तरूपमुक्त्यनङ्गीकारे समयप्रयोजनाभावाद्वादित्वमेव न स्यात् । न केवलं मुक्तत्वस्य किं तु वस्तुत्वस्यैव व्याघात इत्याह **शून्यत्वनिवारकानिति** ॥ ७६७ ॥ ७६८ ॥

**व्यावहारिकमस्तीति व्याहतेर्मूलभूरियम् ।**
**त्रिकालनास्तिता सेति ह्यस्तिता नास्तिताऽप्यभूत् ॥ ७६९ ॥**

अथापि स्यात् । किं पारमार्थिकभावधर्मवत्त्वं साध्यते । उत व्यावहारिकतद्धर्मवत्त्वम् । नाद्यः अप्रसिद्धविशेषणत्वात् । दृष्टान्तः साध्यविकलश्च । मया कुत्रापि भावधर्माणां पारमार्थिकत्वानङ्गीकारात् । न द्वितीयः । सिद्धसाधनात् । ब्रह्मणि व्यावहारिकभावधर्माङ्गीकारादिति । मैवम् । व्यावहारिकेति कोऽर्थः । सदिति उतासदिति । आद्ये फलितमस्मन्मनोरथद्रुमेण । द्वितीये व्याघात इत्याह **व्यावहारिकमिति** । **सा** व्यावहारिकता । **इति** त्वयाङ्गीकारात् । **अभूत्** धर्माणामिति शेषः । तथा च व्याहतिः स्फुटा ॥ ७६९ ॥

**मुक्तत्वव्याहतिश्च स्याद्व्यावहारिकसङ्गमे ।**
**मुक्तादिस्स्यान्मुक्ततादिर्नेति च व्याहतेर्गृहम् ॥ ७७० ॥**

किं च व्यावहारिकत्वं नाम अविद्याकार्यत्वं परस्याभिमतम् । मुक्तिश्चाविद्यास्तमय इति च । तथा चाविद्यास्तमयेऽविद्येति प्राप्त्याऽपरा व्याहतिः । तदाह **व्यावहारिकसङ्गमे इति** । मुक्तशब्दस्य तत्र प्रवृत्तिमङ्गीकृत्य तन्निमित्तं मुक्तत्वधर्ममनङ्गीकुर्वतोऽन्या व्याहतिः इत्याह **व्याहतेरिति** ॥ ७७० ॥

**किं व्याहतिपुरन्ध्रीणां पाणिग्रहणमस्ति ते ॥ ७७१ ॥**

अपहसति **किमिति** ॥ ७७१ ॥

**विप्रस्स्याद्विप्रता नैव गोमान्स्याद्गौर्न काचन ।**
**धनी नैव धनं चेति को नून्मत्तो वदेद्वद ॥ ७७२ ॥**

सत्ताऽभावेऽपि सद्रूपं ब्रह्मेति परप्रक्रियां उन्मत्तोऽपि नाद्रियत इति अनेकदृष्टान्तैः कथयति **विप्र इति** ॥ ७७२ ॥

**तस्मान्निर्गुणतावाणी व्याहतिस्वैरिणीगृहम् ।**
**इदं नैव विशेत्साध्वी त्वत्सङ्गात्प्रविशेद्यदि ॥ ७७३ ॥**
**स्वैरिणीसङ्गदोषेण स्वयं च व्याहता भवेत् ।**
**यत्स्वोक्तनिर्गुणत्वाख्यगुणेनैव व्यरुध्यत ॥ ७७४ ॥**

तर्कमाह **यदीति** । **प्रविशेत्** सर्वथा गुणाभावं प्रतिपादयेत्, इति आपादकम् । **व्याहता भवेत्** इति आपाद्यम् । **तस्मात् नैव विशेत्** । व्याहतिप्राप्तेः सर्वथा नैर्गुण्यं न प्रतिपादयति इति विपर्ययपर्यवसानम् ।

15

यदिति आपाद्यापादकयोर्व्याप्तिप्रदर्शनम् ॥ अनेन पूर्वोक्तानुमानानां निर्गुण-श्रुतेश्चानुग्रहः कृतो ध्येयः। तदुक्तं पद्धतौ 'सोऽयं क्वचित्प्रमाणानामनुग्राहकोऽपि भवती'ति। भाष्ये च 'कोऽत्रार्थोऽभिमतो भवेत्। इत्याद्यमूहनं तर्कः' इति ॥ ७७३ ॥ ७७४ ॥

**यदि ब्रह्मणि नैर्गुण्यं धर्मं स्वार्थं समर्पयेत्।**
**अनुमाऽनुग्राहकं सा मानं तर्हि भविष्यति।**
**न स्थापयेच्च नैव स्यात्साधिका बाधिका मम ॥ ७७५ ॥**
**न हि च्छत्रिपदं राजभृत्येच्छत्रमनादधत्।**
**धर्मं निर्मूलयेत्तस्य च्छत्रच्छायाविरोधिनम् ॥ ७७६ ॥**

ननु निर्गुणपदं निर्गुणत्वाख्यं धर्मं न ब्रह्मण्यर्पयति। येन व्याहतिः। किं नाम सगुणव्यावृत्तिमात्रं इत्याशङ्क्याह **न स्थापयेच्चेदिति** ॥ 'न व्यावृत्त्याप्र योजनम्। व्यावृत्तस्याविशेषत्वे'। इत्यनुव्याख्यानोक्तदिशा दूषयति **नैव स्यात् साधिका बाधिका ममेति**। व्यावृत्तिरपि व्यावर्तकधर्मार्पणेनैव संपाद्या। नेतरथा। तथा च व्यावर्तकधर्मसमर्पणेऽस्मदिष्टसिद्धिरेवेत्याह **अनुमाऽनुग्राहकमिति**। न चेद्व्यावृत्तिरूपप्रयोजनस्यासिद्धिरित्याह **न हीति**। अच्छत्रिव्यावर्तको धर्मो ह्यातपनिवारकं छत्रम्। तच्चच्छत्रिपदेन भृत्ये न बोध्यते नैव तस्याछत्रिव्यावृत्तिसिद्धिरिति भावः ॥ ७७५ ॥ ७७६ ॥

**न हीयं पूतना वाणी या शब्देनैव भीषयेत् ॥ ७७७ ॥**

**इयं वाणी** निर्गुण इति वाक्। **शब्देनैव** ध्वन्यात्मकेन आक्रन्दन-स्वरेण। एवकारेण पदवाक्यात्मकागमत्वं व्यवच्छिनत्ति। एतेन, न वयं अभेदं साधयामः किन्तु भेदं व्यासेधाम इत्यादि परप्रक्रिया निरस्ता। तद्विरोधिबोधनमन्तरेण तद्दूषणस्याशाब्दत्वादिति ॥ ७७७ ॥

**अतो निष्कारणं ब्रह्मधर्मानेतान्मनोरमान् ।**
**निषेधतो गतिस्सा स्याद्या धर्मैर्नैव साध्यते ॥ ७७८ ॥**

**निष्कारणं** परतत्वे प्रद्वेषमन्तरा अन्यकारणं विना । स्यादेवेति योजना ॥ ७७८ ॥

**सुखरूपमितीयं वाक्सुखरूपत्ववादिनी ।**
**तद्योगाद्रूपमप्याह न सा हि स्वाग्रहानुगा ॥ ७७९ ॥**

सुखरूपब्रह्मभाव एव मुक्तिः । न तु सुखरूपत्वरूपधर्मसंपत्तिः । अतो ब्रह्मणो धर्मानङ्गीकारेऽपि न मुक्तत्वरूपहेतूच्छित्तिरिति मन्दाशङ्कां पुनः परिहरति **सुखरूपमित्यादिभिश्चतुर्भिः** । **इयं वाक्** 'आनन्दरूपममृतं यद्विभाति' 'ज्ञानरूपादृते हरेः' इत्यादिश्रुतिस्मृतिरूपा रूपप्रतिपादिका वाक् । **सुखरूपत्वेति** सुखाख्यरूपवस्त्वेत्यर्थः । **तद्योगात्** मुक्तौ ब्रह्मणि उपसंक्रमणाख्यसम्बन्धात् । **रूपं** जीवस्यापि सुखरूपेणाभिव्यक्तिम् । **स्वाग्रहानुगा** मुख्यार्थानुपपत्तिं विनाऽपि स्वरूपमात्रलक्षणां ब्रुवतः **स्वस्य** प्रतिवादिनो मायिनो, दुराग्रहमनुसृत्यार्थप्रतिपादनपरा ॥ ७७९ ॥

**विप्ररूपत्वशून्यो हि न शूद्रो विप्ररूपकः ।**
**सुखरूपत्वशून्यं यत्सुखरूपं च नैव तत् ॥ ७८० ॥**

तद्वस्त्वसाधारणधर्मं विना न तत्स्वरूपत्वमित्येतद्दृष्टान्तेनोपपादयति **विप्रेति** ॥ ७८० ॥

**सुखरूपार्थसद्भावे कथं तच्छब्दलक्षणा ।**
**जलप्रवाहरूपेऽर्थे किं गङ्गापदलक्ष्यता ॥ ७८१ ॥**

मुख्यार्थस्यैव सद्भावे न लक्षणाऽवकाश इत्यत्र निदर्शनमाह **जलेति** ॥ ७८१ ॥

**अतो मुक्तिरमुक्तिस्स्यादियं तार्किकमुक्तिवत् ।**
**मुक्तत्वहेतोरुच्छित्तिस्साध्याभावे ततो ध्रुवा ॥ ७८२ ॥**

**अतः** सुखविषयकानुभववत्त्वरूपधर्मानङ्गीकारात् । **तार्किकेति** । तेनापि सुखरूपगुणानङ्गीकारेण तावन्मात्रेण त्वन्मुक्तिसाम्यम् । फलितमाह **मुक्तत्वेति** ॥ ७८२ ॥

**एवं च निर्गुणं ब्रह्म निर्गुणादिश्रुतेरपि ।**
**उक्तरीत्या बहिर्भूतमश्रौतमभवद्ध्रुवम् ॥ ७८३ ॥**

**अश्रौतम्** । श्रुत्यविषयः श्रुतिबाधितं च ॥ ७८३ ॥

**श्रुतिस्त्रीसङ्गशून्यं तद्ब्रह्म भिक्षुरभूत्तव ॥ ७८४ ॥**

**भिक्षुः** रावण इव तद्वेषधरः ॥ ७८४ ॥

**अन्यापोहेन तत्सङ्गे छद्मस्त्रीसङ्गदोषतः ।**
**भ्रष्टस्वधर्ममित्यार्यैस्त्यक्तं बाह्यानुपाश्रयत् ॥ ७८५ ॥**

**अन्यापोहेन** प्रमाणसिद्धधर्मत्यागेन लक्षणाश्रयणेन । **भ्रष्टस्वधर्मं** अनुपपत्त्यभावेऽपि मुख्यार्थं परित्यज्य प्रमाणविरुद्धार्थे लक्षणाश्रयणेन त्यक्तवैदिकमर्यादम् ॥ ७८५ ॥

**अस्मद्ब्रह्माप्रतिद्वन्द्वं सर्वमानमनोरमम् ।**
**अनन्तसुगुणस्तोममुखेन परितो दिशम् ।**
**अपारोपनिषन्नारीमुखान्याचुम्ब्य जृम्भते ॥ ७८६ ॥**

**अस्मद्ब्रह्म** जिज्ञास्यं विष्ण्वाख्यं ब्रह्म । **अप्रतिद्वन्द्वं** चतुर्विधविरोधरहितम् । **सर्वमानमनोरमं** ज्ञानिप्रत्यक्ष-सद्युक्ति-सदागमलक्षणसर्वप्रमाणविषयः । **अपारोपनिषन्नारीमुखानि** अनन्तापर्याययौगिकपदानि । **आचुम्ब्य** परममुख्यवृत्त्या समन्वितं सत् । **जृम्भते** अनन्तगुणपरिपूर्णत्वलक्षणब्रह्मशब्दप्रवृत्तिनिमित्तोपेततया प्रकाशते ॥ ७८६ ॥

**अतोऽनुकूलतर्काख्यमन्त्रिणा सर्वतो दिशम् ।**
**पालिता मेऽनुमानाख्यराजाज्ञा राजतेतराम् ॥ ७८७ ॥**

**अतः** व्याप्तिपक्षधर्मताऽऽख्यसामर्थ्यद्वयोपेतत्वात् । **पालिता** अप्रयोजकत्वरूपशत्रुबाधो यथा न भवेत्तथेति भावः । **राजाज्ञा** सुदृढतया उल्लङ्घनायोग्या ॥ ७८७ ॥

**अतश्श्रुतिपुराणस्थनिर्गुणाख्या हरिं प्रभुम् ।**
**निर्गुणब्रह्म मदासीसंग्येवासीन्न मत्प्रियम् ॥ ७८८ ॥**
**अहं पतिव्रतैवासं तत्रोपक्रमवागियम् ।**
**उपसंहारवाक्येयं सदा त्वत्पक्षपातिनी ।**
**साक्षिणीति निगद्यात्ममनश्शौद्ध्यं प्रबोध्य च ॥ ७८९ ॥**
**अन्यार्थशून्या मान्यार्थमुक्त्वा शरणमीयुषी ।**
**स्वस्वामिनो गुणान्हित्वा जग्रास प्राकृतान्गुणान् ॥ ७९० ॥**

इदानीं निर्गुणश्रुतिः, प्रणयकलहावसाने वेदमुख्याभिमानिनी **रुक्मिणीव कृष्णं प्रति**, आत्मनो विष्णुगुणप्रतिपादन एव महातात्पर्यं **निवेदयतीति शृङ्गारमुद्रयाऽऽह** अतः श्रुतीत्यारभ्य इति निर्गुणवागित्यन्तेन ( श्लो ८५० ) ग्रन्थेन । **श्रुतिपुराणस्था** सदागममुख्याभिमानिनी, **निर्गुणाख्या** निर्गुणा नित्यमुक्तेत्याख्याऽभिधानं यस्याः सा महालक्ष्मी **रुक्मिणी** । अन्यत्र निर्गुण इत्याख्या पदम् । **हरिं प्रभुं** पतिं कृष्णम् । शरणमीयुषी प्राकृतान्गुणान् जग्रासेति योजना । दुर्गारूपेण त्वद्द्वेषिण-स्तमसि पातनार्थं ममाज्ञावशत्वाद्दास्यौ इव स्थिते आपातप्रतीतिपाशुपतादि-दुरागमोक्ती तयोः सङ्गि विषयः । **न मत्प्रियं** न मत्तात्पर्यविषयः । शिशुपालादिरिवेति ध्वनिः । **पतिव्रतैव** विष्णोस्तव गुणोत्कर्ष एव महातात्पर्यवती । **आसम्** अस्मि भविष्यामि च । **तत्र** तात्पर्ये ।

**उपक्रमवाक्** एको देव इत्यादिकाक् । अन्यत्र 'श्रुत्वा गुणान् भुवनसुन्दरे'ति प्रेमसन्देशः । **उपसंहारवाक्** 'स सर्वदृगुपद्रष्टा' इत्यादिका । अन्यत्र तदुद्दानुकम्पेत्यादिका । उपलक्षणं सर्वाणि तात्पर्यलिङ्गानि । **अन्यार्थशून्य**निरवकाशा । **जग्रास** निग्रकृतवती ॥ ७८८ ॥ ७८९ ॥ ७९० ॥

**नैर्गुण्येनैव गुणिता नैर्गुण्यं च न चेन्नञौ ।**
**सगुणत्वं स्थिरीकृत्य विरुद्धार्थत्वकारकौ ॥ ७९१ ॥**

**नञौ** निषेधार्थकौ शब्दौ । **स्थिरीकृत्य** सातिशयम् । **विरुद्धार्थत्वकारकौ** सगुणत्वप्रतिपादकौ ॥ ७९१ ॥

**बद्धसेतुनिरुद्धाम्भस्सेतुभङ्गे स्रवेद् ध्रुवम् ।**
**यथा हि निर्गुणत्वस्य (त्यागे)च्छेदे सर्वगुणागमः ।**
**घटाभावक्षयो नाम घटस्यागतिरेव हि ॥ ७९२ ॥**

अत्र दृष्टान्तद्वयं सेतुभङ्ग इति घटाभावक्षय इति च । सेतुः प्रवाहस्य निषेधः तद्भङ्गः द्वितीयो निषेधः । प्रागभावविपत्तिरेव च प्रतियोग्यापत्तिः ॥ ७९२ ॥

**सङ्कोचे परसङ्कोचश्श्रेयान्मुख्यार्थलाभतः ॥ ७९३ ॥**

**परपक्षे** तत्ववादिपक्षे **सङ्कोचः** हेयगुणनिषेधरूपः **मुख्यार्थलाभतः** अभिधावृत्तिलभ्यगुणोत्कर्षलाभतः । अखण्डार्थस्य शब्दबाह्यत्वेन मायिपक्षे नैरर्थक्यमेव ॥ ७९३ ॥

**कपिञ्जलाधिकरणन्यायानुसरणादपि ।**
**अनन्तसुगुणच्छेदात्त्रिगुणच्छेदनं वरम् ॥ ७९४ ॥**

यावतो विना कपिञ्जलानित्यत्रत्यबहुवचनानिर्वाहस्तावतस्त्रीनेवाल-भेतेति न्यायः कपिञ्जलाधिकरणन्यायः । **तदनुसरणेन** यद्गुणनिषेधं विना निर्गुणपदानुपपत्तिस्तेषामेव त्रयाणां प्रकृतिगुणानां निषेधः इत्यनुसरणेन । तत्र यागीयत्वेनालम्भनस्य हिंसात्वेऽपि यथा न प्रत्यवायापादकत्वं एवं अत्रापि श्रौतत्वेन गुणत्रयनिषेधस्य न निर्गुणपदास्वारस्यापादकत्वं प्रत्युत भगवदुत्कर्षपर्यवसायित्वेन स्वारस्यातिशयसंपादकत्वमेवेत्यपि न्यायसाम्यं विभाव-**नीयम्** ॥ ७९४ ॥

**किञ्च निर्गुणतां स्वार्थं क्षिपन्तीं सगुणश्रुतिः ।**
**अबाध्यस्वार्थवर्गेण कपोले ताडयिष्यति ॥ ७९५ ॥**

**स्वार्थं** निर्गुणश्रुत्यर्थम् । **निर्गुणतां** निर्गुणत्वलक्षणगुणमपि । **क्षिपन्तीं** निषेधन्तीम् । अत एव नैरर्थक्यलक्षणमप्रामाण्यं प्राप्नुवन्तीम् । स्वयं प्राप्तमरणावस्थाया निर्गुणत्वश्रुतेर्नान्यबाधनक्षमत्वमिति भावः । अथ एवंभूताऽपि यदि **स्वार्थं** सगुणश्रुतेरर्थं **क्षिपेत्** निराकरणाय प्रवर्तेत तर्हि **क्षिपन्तीं** तत्प्रतिक्षेपोद्यतां तां, सगुणश्रुतिः **अबाध्यस्वार्थवर्गेण** अबाध्येन निरवकाशत्वलक्षणबलवता, **स्वार्थवर्गेण** स्वसमानार्थकसगुणवाक्य-समूहेन बहुत्वनिमित्तकेन बलवत्त्वेनापि सहितेन, **कपोले ताडयिष्यति** आभासीकरिष्यति, आपातार्थं व्याजयित्वा प्राकृतगुणराहित्यमर्थं स्थापयिष्यति ॥ ७९५ ॥

**यद्यभावोऽस्ति भावस्याप्यभावाभावता न किम् ।**
**सर्वं नास्तीति वदता किमभावोऽपि रक्ष्यते ॥ ७९६ ॥**

प्राग्दूषितमप्यभावद्वैतमतं दोषान्तरोक्त्यै पुनश्शङ्कते **यदीति** । परिहरति **भावस्यापीति** । गुणाभावाभावस्याप्यभावत्वाविशेषेणाङ्गी-

कारापत्त्या गुणानां द्वौ नञाविति न्यायेन सातिशयं प्राप्तेरिति भावः ॥ **सर्वमिति** सर्वं खल्विदं ब्रह्मेतिवाक्यस्य ब्रह्मव्यतिरेकेण सर्वं नास्ति इत्यर्थं वदता परेण । यद्वा किञ्चन नास्तीत्यसङ्कोचेन सर्वं निषिध्यत इति वदता । **रक्ष्यते** सर्वशब्दकिञ्चनशब्दयोः सङ्कोचाश्रयणेनेति भावः ॥ ७९६ ॥

**नेहनानेतिवाक्यार्थरूपत्वाच्चेत्ततोऽपि किम् ।**
**अर्थत्यागे श्रुतेरप्रामाण्यं स्यादिति धीर्यदि ।**
**गुणश्रुतीनां बह्वीनां नाप्रामाण्याद्बिभेषि किम् ॥ ७९७ ॥**

नेहनानास्ति वाक्यं साक्षादभावरूपमर्थं बोधयति । अतः सङ्कोचः इति पराभिप्रायं अनुवदति **नेहेति** ॥ निषेधवाक्यानां प्रमितेतरनिषेधकत्वमेवेति न्यायं परमुखेन वाचयितुं पृच्छति **ततोऽपीति** । अभावस्य प्रमितत्वेऽपीत्यर्थः । **किं** तन्निषेधे को दोषः । **अर्थत्यागे** श्रुत्यन्तरप्रमितार्थप्रतिषेधे । **श्रुतेः** तदर्थप्रमापकश्रुत्यन्तरस्य । **अप्रामाण्यं स्यात्** । न च श्रुतेरप्रामाण्यं वक्तुं युक्तम् । अतो न तदर्थनिषेध इति विपर्ययपर्यवसानमनुसन्धेयम् । यदीत्यनन्तरं तर्हि श्रुतौ श्रद्धावांस्तदप्रामाण्याद्भयशीलस्त्वमिति शेषः । किं न बिभेषीत्यपहासः । सावकाशां एकां श्रुतिं पश्यसि । निरवकाशा बह्वीः सगुणश्रुतीः न पश्यसीति नूनं चतुरे ते विलोचने इति ध्वनिः ॥ ७९७ ॥

**एवं सगुणवाद्युक्तयुक्तित्यागो न मे गुणः ।**
**इति मत्वा निर्गुणाख्या भेजे हरिपदाम्बुजम् ॥ ७९८ ॥**

**युक्तित्यागः** ब्रह्ममीमांसायां 'सर्वधर्मोपपत्तेश्च' इतिसूत्रव्युत्पादितोपपत्तिसिद्धकल्याणगुणप्रतिषेधः । **न मे गुणः** महातात्पर्यविरुद्धः । **निर्गुणाख्या** नित्यमुक्ताख्या श्रुत्यभिमानिनी लक्ष्मीः ॥ ७९८ ॥

**किं च निर्गुणशब्देन लक्ष्यं चेन्निर्गुणं कथम् ।**
**मुख्यार्थबाधमूलैव लक्षणेति सतां मतम् ॥ ७९९ ॥**
**वाच्यत्वं न परो वक्ति तेन स्यान्मे गतिर्वृथा ।**
**इत्याद्यालोच्य सा वाणी प्राणेशमतमन्वगात् ॥ ८०० ॥**

निर्गुणशब्दो न निरर्थक इति मन्वानः प्रष्टव्यो जायते कीदृशः सोऽर्थः इति । किं वाच्यः उत लक्ष्यः । न द्वितीयः निर्गुणत्वस्य हानेरित्याह **निर्गुणं कथमिति** । तत्कुत इत्यत आह **मुख्यार्थबाधमूलैवेति** । तदुक्तमनुव्याख्याने 'पूर्वायोगे परग्रह' इति । पूर्वस्य मुख्यार्थस्यायोगे बाधे परस्य लक्ष्यस्य ग्रह इत्यर्थः । नाद्यः परेणानङ्गीकारादित्याह **वाच्यत्वमिति** । तथा च पदस्य निरर्थकत्वं स्थितमित्याह **वृथेति** । ॥ ७९९ ॥ ८०० ॥

**वाच्यत्वेनैव गुणिता वाच्यत्वे निर्गुणोक्तितः ।**
**लक्ष्यत्वेनैव गुणिता लक्ष्यत्वे निर्गुणोक्तितः ।**
**नोभयं चेदशाब्दत्वधर्मेण स्याद्धि धर्मिता ॥ ८०१ ॥**

किञ्च वाच्यत्वे लक्ष्यत्वे उभयहीनत्वे वा पक्षत्रयेऽपि तत्तद्धर्मप्राप्त्या सर्वथा निर्गुणशब्दव्याघात एवेत्याह **वाच्यत्वेनेति** ॥ ८०१ ॥

**व्यावहारिकतायां च बाधाद्धर्मो न सोऽर्थकृत् ।**
**गुञ्जापुञ्जाग्निना कुञ्जे किं जायेत हिमौषधम् ॥ ८०२ ॥**

व्यावहारिकधर्माङ्गीकारान्न पदस्य निरर्थकत्वम् । पारमार्थिकतदनङ्गीकारान्न निर्गुणत्वव्याघातः इति मायिनः पक्षान्तरमाशङ्क्य श्रुतिसाध्वी स्वयं समाधत्त इत्याह **व्यावहारिकतायामिति** । **बाधात्** धर्माणां बाध्यत्वस्य अपरिहारात् । **सः धर्मः** बाध्यो धर्मः । **न अर्थकृत्** मम निर्गुणपदस्य

सार्थकत्वसंपादको न भवति । तदेव बाधकोक्त्या द्रढयति **गुञ्जापुञ्जेति** । बाध्येनाग्निनेति यावत् । **कुञ्जे** लतावृतप्रदेशे । **हिमौषधं** शीतनिवृत्तिरूपार्थक्रिया ॥ ८०२ ॥

**इति सर्वं समालोच्य श्रुतिस्सा व्याहतेर्भयात् ।**
**अव्याहतगतिं विष्णुमव्याजस्नेहतोऽभजत् ॥ ८०३ ॥**

**सर्वं** सर्वेषु पक्षेषु व्याहतितादवस्थ्यम् । **सा** **निर्गुणाख्या** । **व्याहतेः** तन्निमित्तकाप्रामाण्यात् । **अव्याहतगतिम्** अबाध्यमहिमानम् । **अव्याजस्नेहतः** मुख्यार्थसादृश्यं संबन्धं वाऽनिमित्तीकृत्य परममुख्यवृत्त्यैव । **अभजत्** प्रतिपादयति । अन्यत्र 'आदरादलोप' इति सूत्रोक्तदिशा नित्यमुक्ताऽपि गुणलोभादेव विष्णुमेवाश्रिता रमा इति हृदयम् ॥ ८०३ ॥

**मृषा चेन्निर्गुणत्वं स्यात्सगुणत्वश्रुतेर्बलात् ।**
**सत्या सगुणता तर्हि सिद्ध्येदद्वैतवत्तव ॥ ८०४ ॥**
**अतत्वावेदकं वाक्यं न हि तत्वस्य बाधकम् ।**
**अतत्वतत्वयोश्चैव न विरोधोऽस्ति कश्चन ॥ ८०५ ॥**

किं च निर्गुणत्वं मृषा सत्यं वा । आद्ये आह **मृषा चेदिति** । निर्गुणवाक्यस्यातत्वावेदकत्वप्राप्त्या दुर्बलेन तेन सगुणश्रुतेरबाधात्तदर्थसगुणतायाः सत्यत्वं सिध्यतीत्याह **तर्हि सिध्येदिति** । तत्र पराभिमतं दृष्टान्तमाह **तवाद्वैतवदिति** । भेदवाक्यानामतत्वावेदकत्वेन दौर्बल्यात्तदबाधादैक्यवाक्यैरद्वैतं सिध्यतीति यथा त्वयोच्यते तथैवेत्यर्थः ॥ अतत्वावेदकं तु न तत्वस्य बाधकमिति प्रसिद्धमित्याह **होति** । तत्र युक्तिमाह **अतत्वेति** । बाधकत्वं प्रति प्राबल्ये सति विरोधित्वं व्यापकम् । न चात्र तदुभयमस्तीत्याह **अतत्त्वेति** । अतो व्याप्यनिवृत्तिरावश्यकीति भावः ॥ ८०४ ॥ ८०५ ॥

**न मृषा निर्गुणत्वं चेन्निर्गुणत्वश्रुतिर्गता ।**
**तेनैव सगुणत्वाप्तेर्भावमात्रनिषेधने ।**
**अन्योन्याभावभेदस्य पट्टबन्धो भविष्यति ॥ ८०६ ॥**

द्वितीये आह **नेति** । **गता** स्वार्थपरा न भवति । कुत इत्यत आह **तेनैवेति** । निर्गुणत्वगुणेनैव । ननु न स्वार्थहानिः । निर्गुणपदस्य भावरूपगुणमात्रनिषेधकत्वाङ्गीकारात् । निर्गुणत्वस्य गुणाभावरूपत्वेन तत्सत्यत्वेऽपि मदभिमतभावाद्वैतमतस्याक्षतेरिति पक्षान्तरमाशङ्कते **भावेति** । दूषयति **अन्योन्याभावेति** । भेदस्त्रिविधः । पृथक्त्वं, अन्योन्याभावः स्वरूपं चेति परमतमाश्रित्यान्योन्याभावभेदस्येत्युक्तम् । अन्योन्याभावश्चासौ भेदश्चेति विग्रहः । तेन पृथक्त्वस्य तार्किकैर्गुणत्वेन परिगणितस्य भावरूपत्वेन निर्गुणपदेन तन्निषेधेऽपि अन्योन्याभावस्याभावत्वेन तदनिषेधादुभयसंमत्या तत्सत्यत्वस्याक्षुण्णत्वात्पट्टबन्ध इत्युक्तम् । अप्रतिभटराजवदिति ध्वनिः । ॥ ८०६ ॥

**बन्धध्वंससदाभावौ विरुद्धौ यत्सदातनौ ।**
**मन्त्रिणौ मन्त्रशक्त्या तं सदा बोधयतो नृपम् ॥ ८०७ ॥**

बन्धध्वंसः नित्यमुक्तत्वाभावः जीवे सदातनः । संसारे विशेष्याभावेन मुक्तौ विशेषणाभावेन विशिष्टाभावस्यानुगतिर्द्रष्टव्या । बन्धसदाऽभावः परमात्मनि सदातनः । अभावात्मकतासंपादनाय नित्यमुक्तत्वमित्यनुक्त्वा सदाऽभाव इत्युक्तम् । **विरुद्धौ** ध्वंसस्य सत्प्रतियोगिकत्वात् अत्यन्ताभावस्य असत्प्रतियोगिकत्वात्सहानवस्थितौ ॥ **मन्त्रिणौ** पृथगधिकरणोदाहृतकौशिकश्रुतिरूपमन्त्रानुग्रहवन्तौ । **मन्त्रशक्त्या** आगमिकत्वेन क्षुद्रोपद्रवरहितव्याप्तिपक्षधर्मतारूपसामर्थ्येन **तं** अन्योन्याभावं **बोधयतः** अनुमापयतः । विलक्षणकार्यविनियुक्तयोस्तन्निर्वाहाय सहानवस्थानं मन्त्रिणोर्भूषणमेव ॥८०७॥

**भटौ चाग्रेसरौ तस्य रिपुसेनामुखागतौ ।**
**अल्पज्ञत्वबहुज्ञत्वाभावौ चोभयपार्श्वगौ ॥ ८०८ ॥**

**रिपुसेना** अभावद्वैतं तस्या **मुखागतौ** अङ्गीकारेणैव प्राप्तौ । **अल्पज्ञत्वाभावः** सदेश्वरनिष्ठः । **बहुज्ञत्वाभावः** सदा जीवनिष्ठः इत्येतौ अभावरूपौ व्यावर्तकधर्मौ । **भटौ** भेदसाधकौ ऐक्यबाधकौ । **उभयपार्श्वगौ** । अन्योन्याभावपार्श्वयोरनुयोगिप्रतियोगिनोर्जीवेश्वरयोः नित्यसंबन्धिनौ ॥ ८०८ ॥

**पृथक्त्वं तु गुणं भावभेदं हन्त्वैक्यवाक्तव ।**
**अभावधर्मवद्भेदोऽप्यभावात्माऽस्तु निर्भयः ॥ ८०९ ॥**

नन्वेकत्वश्रुत्या तावद्भेदः प्रतिषेध्यः । सा चेदभावद्वैतमते नान्योन्याभावप्रतिषेधिका तर्हि तस्या निरर्थकत्वमेव स्यादित्यतस्तत्सार्थक्यप्रकारं परीत्यैवाह **पृथक्त्वमिति** । पृथक्त्वं भावरूपो गुणोऽन्योन्याभावातिरिक्त इति तार्किकैरुपगमात् । तवेत्युक्त्या, वस्तुत एकपदस्य 'एके मुख्यान्यकेवला' इत्यनेकार्थस्य भेदनिषेधकत्वमेव नेति भावः । सर्वथाऽन्योन्याभावस्यैक्यवाक्यान्न बाधभय इत्याह **निर्भय इति** । तत्र हेतुमाह **अभावात्मेति** । दृष्टान्तमाह **अभावधर्मवत् इति** ॥ ८०९ ॥

**अन्योन्याभावातिरिक्तं पृथक्त्वं तत्ववादिना ।**
**निषेद्धुं शक्यते जीवे विभागाख्या भिदा तथा ॥ ८१० ॥**

अस्त्वेवं परीत्या । स्वमते तु नैषा गतिरेकत्वश्रुतेः **संभावनार्हा** । 'पृथक्त्वाभावतद्रूपान्भेदांस्त्रीन् कल्पयन्ति चेत् ॥ कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिनः' ॥ इति परप्रक्रियाखण्डनेन भेदस्यैकरूपत्वव्यवस्थापना-

दिति तत्राह **अन्योन्याभावातिरिक्तमिति** । कुसमयप्राप्तमप्रामाणिकमेव पृथक्त्वं प्रतिषेध्यमस्त्वित्याह शक्यते इति । यद्वैतदस्वरसादाह **विभागाख्येति** । भेदो हि स्थानमतिभेदाद्यनेकरूपः । स्वरूपभेदस्यैकरूपत्वेन तन्निरासासंभवेऽपि विभागाख्यभेदस्य निषेधः स्वमतेऽपि श्लिष्ट इति नैकत्वश्रुतिविरोधः स्वरूपभेदस्येत्याह **विभागेति** । **असंयुक्तत्वं** स्थानभेद इति यावत् । तस्य च निषेधः सयुजाविति श्रुतिसिद्ध एव ॥ ८१० ॥

**तयोरन्य इति प्रोक्तस्त्वन्योन्याभाव इष्यते ।**
**श्रुतिप्रामाण्यरक्षार्थं नैर्गुण्ये त्वद्विवेकवत् ॥ ८११ ॥**

तयोरन्य इत्यनेन 'तयोरन्यः स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति श्रुतिं संगृह्णाति । अत्रान्यशब्दोऽन्योन्याभाववत्पर इत्याह **प्रोक्तस्त्विति** । विधावन्योन्याभावो निषेधे पृथक्त्वमित्यर्थभेदाश्रयणमस्वरसमिति चेत् । तर्हि तवापि विधौ अभावधर्माणां, निषेधे भावधर्माणां गुणशब्दार्थतया ग्रहणात् निर्गुणशब्दस्यार्थभेदाश्रयणमस्वरसम् । अथ न मत्पक्षेऽस्वारस्यम् । निर्गुणश्रुत्याऽभावधर्माणामपि निषेधे स्वव्याघातेनाप्रामाण्यापत्तिः । अतस्तत्प्रामाण्यरक्षार्थं विवेकाश्रयणमवश्यमिति चेत् । समं ममापीत्याह **श्रुतीति** । सर्वथा भेदनिषेधे अन्योन्याभावविधात्रीणां द्वा सुपर्णेत्यादिसुबहुश्रुतीनामप्रामाण्यापत्तेरिति हृदयम् । इदं च प्रतिबन्दीग्रहणं स्वपक्षेऽस्वारस्यमभ्युपेत्य । वस्तुतस्तु निर्गुणशब्देन सत्त्वादिगुणनिषेधेऽस्वारस्यप्रसक्तिरेव नेत्यनुसन्धेयम् ॥ ८११ ॥

**आत्महत्येव यल्लोके परहत्याऽपि दूषणम् ।**
**अतस्स्वव्याहतेर्भीतौ भयं भेदश्रुतेर्न किम् ॥ ८१२ ॥**

इयांस्तु विशेषः । त्वद्रीत्या निर्गुणश्रुत्याऽभावधर्मनिषेधे स्वव्याघातेन स्वाप्रामाण्यापत्तिः । ऐक्यश्रुत्या भेदनिषेधे परासां भेदश्रुतीनामप्रामाण्यापत्तिः न तु स्वस्याः । तथा चैकत्रात्महत्या । अपरत्र सुबहुपरहत्या । तथा च हत्यादोषस्य साम्ये सति दर्शितवैषम्यमकिञ्चित्करमित्याह **आत्महत्येति** । इयमप्युपेत्योक्तिः । यथाऽस्मत्पक्षे निर्गुणश्रुतेरप्रामाण्यप्रसक्तिरेव न तथोपपादितमधस्तात् ॥ ८१२ ॥

**ज्ञातत्वाभावधर्मित्वपूर्वात्सा न बिभेति किम् ॥ ८१३ ॥**

ब्रह्मणि सर्वथा भावधर्मनिषेधोऽशक्य एवेत्याह **ज्ञातत्वेति** । निषेधार्थं ब्रह्मणो ज्ञातत्वस्याभावधर्मधर्मित्वस्येत्यादीनां भावधर्माणां, तथाऽभावस्याभावत्वप्रमेयत्वाश्रितत्वादीनां भावधर्माणां उपनिपातादित्याह **ज्ञातत्वेति** । यथोक्तं वादावल्यां 'न ह्यज्ञाते धर्मिणि कस्यचिद्धर्मस्य विधानं निषेधो वा युज्यते' इति ॥ ८१३ ॥

**व्यवस्थितादियं तत्त्वंपदार्थत्वाच्च ते श्रुतिः ।**
**कथं न भीता भेदं वा विशेषं वा विना वद ।**
**विशेषो नास्ति भावस्ते भेदोऽभावो गतिर्ध्रुवा ॥ ८१४ ॥**

अभावद्वैतवादे तत्वमसि श्रुतिरप्यन्योन्याभावपरैवेत्याह **व्यवस्थितादिति** । तत्त्वंपदे तावदपर्याये । अतस्तत्पदस्येश्वर एवार्थस्त्वंपदस्य च जीव एवेति व्यवस्थितिः । इयं च भेदकार्यत्वाद्भेदं तदभावे तत्प्रतिनिधिं विशेषं वाऽऽक्षिपेत् । तत्र भावरूपत्वाद्विशेषस्तव मते नास्ति । अतोऽन्योन्याभावात्मा भेदोऽङ्गीकार्य एवेत्याह **ध्रुवेति** ॥ ८१४ ॥

**व्यावहारिकभेदाच्च नात्र तत्त्वंपदार्थता ।**
**यत्सत्ययोरैक्ययोग्यचितोरेव कथा तत्र  ॥ ८१५ ॥**

अस्याः श्रुतेस्तत्त्वावेदकत्वं ब्रुवाणेन परेण उक्तव्यवस्थायास्तन्निर्वाहक-भेदस्य वा व्यावहारिकत्वं दुर्वचमित्याह **यदिति** । यस्मादित्यर्थः । ॥ ८१५ ॥

**यद्वा ब्रह्मस्थितैक्यस्य भावरूपस्य तद्रिपोः ।**
**निर्गुणोक्तिश्शिरश्छिन्द्यात्तेनैवास्याः पराभवे ॥ ८१६ ॥**
**सर्वज्ञशर्वशक्तित्वश्रुतिरर्थबलोर्जिता ।**
**पट्टं बध्नाति भेदस्य हन्ति चास्य विरोधिनम् ॥ ८१७ ॥**

किञ्चैक्यश्रुतिर्भावरूपमैक्यं वक्ति । निर्गुणश्रुतिस्तु भावनिषेधपरा भावत्वादैक्यं प्रतिवक्ति । एवं विरोधे स्थिते, उभयोः प्रामाण्यस्याप्रामाण्यस्य वाऽयोगात् अन्यतरस्य प्राबल्यमाश्रित्य तेन तदितरस्य बाधोऽवश्यं वक्तव्यः । तत्र विचार्यते कस्य प्राबल्यमिति । निर्गुणोक्तिः प्रबला चेदाह **ब्रह्मेति** । ऐक्यस्य शिरश्छिन्द्यात् । कुत इत्यत आह **तद्रिपोरिति** । तत्रापि हेतुमाह **भावरूपस्येति** । ऐक्यबाधे फलमाह **पट्टं बध्नाति भेदस्येति** । भेदस्य निराबाधा सिद्धिरित्यर्थः । परस्परविरुद्धयोरन्यतरनिषेधस्यान्य-तरविधिनान्तरीयकत्वात् । अस्तु तर्हि ऐक्यश्रुतिरेव प्रबलेति पक्ष इति तत्राह **तेनेति** । ऐक्येनेत्यर्थः । **अस्याः** निर्गुणश्रुतेः । **पराभवे** बाधे । **सर्वज्ञेति** । सगुणश्रुतिरित्यर्थः । **अर्थबलोर्जिता** अबाधितार्था । अर्थाद्विरुद्ध-धर्माधिकरणत्वरूपहेतुबलेनोर्जिता च । पट्टं बध्नाति भेदस्येत्यस्यात्रापि पक्षे योजना । तथा च पक्षद्वयेऽपि भेदसिद्धिरविकलेत्याशयः ॥ ८१६ ॥ ॥ ८१७ ॥

**किं च सङ्कोचमार्गेण पलायनपरां श्रुतिम् ।**
**प्रबलानन्तसगुणश्रुतिः कोणे क्वचित्क्षिपेत् ॥ ८१८ ॥**

**सङ्कोचमार्गेण** भावधर्ममात्रनिषेध इति प्रकारेण । **पलायनपरां** गुणमात्रनिषेधप्रकारं जहतीम् । **श्रुतिं** निर्गुणश्रुतिम् । **प्रबला** वक्ष्यमाण-प्रकारेण प्रसक्तिसम्पादकत्वेन उपजीव्यत्वात्, पदिन्यायेन विशेषविषयकत्वेन निरवकाशत्वाच्च स्वभावबलवती, **अनन्ता** बहुत्वनिमित्तकबलवती च सगुण-श्रुतिः **क्वचित्कोणे** भावधर्मेष्वपि सार्वज्ञादिगुणान्विहाय गुणत्रय-निषेधार्थकत्वे **क्षिपेत्** स्थापयेत् ॥ ८१८ ॥

**व्यावहारिकता चात्मधर्माणां स्यात्तदैव हि ।**
**यद्यहं प्रतिषेधामि नो चेत्तस्युरबाधिताः ॥ ८१९ ॥**

मायिमते दोषान्तरं वक्तुं श्रुतिसाध्व्या विमर्शमाह **व्यावहारिक-तेत्यारभ्य स्वभर्तृवदित्यन्तैरष्टभिः श्लोकैः** । इदमत्राकूतं निर्गुणश्रुतेः । आत्मधर्माणां व्यावहारिकताऽपरपर्यायबाध्यता परेणाभिलषिता । तत्र **द्वौ प्रकारौ** संभावितौ । असङ्कोचेन भावधर्ममात्रनिषेधरूपमुख्यार्थाश्रयणेन वा लक्षणया चिन्मात्रबोधनेन वा । तत्र द्वितीये न परस्याभिलषितसिद्धिरित्याह **यदीति** । न ह्यखण्डार्थपरवाक्येन धर्माणां निषेधः संभवति । स्वरूपमात्रपरस्य निषेधाद्युदासीनत्वात् । **नो चेत्** चिन्मात्रबोधिका चेदिति यावत् । **ते** आत्मधर्माः ॥ ८१९ ॥

**अहं च मुख्यतस्स्वार्थपरैवान्यविरोधिनी ।**
**न हि गङ्गापदं लक्ष्ये तीरे स्वार्थविरोध्यपि ।**
**तीरत्वघोषावासत्वपार्थिवत्वादिकं क्षिपेत् ॥ ८२० ॥**

अगत्या तेनाद्यप्रकार एवानुसरणीय इत्याह **अहं चेति** । विरोध्याकारसमर्पणेन विनाऽऽकारान्तरप्रतिक्षेपोऽलौकिक इत्यत्र लोकदृष्टान्तमाह **न हीति** ॥ ८२० ॥

**अतश्शाब्दत्वादिधर्मबलादन्यनिषेधिका ।**
**कथं तानेव बाधेऽहं हसिष्यति सहोदरी ।**
**कृतघ्नं दूषयन्ती वागुपजीव्यविरोधिनीम् ॥ ८२१ ॥**

भावमात्रनिषेधरूप आद्यः प्रकारोऽपि न विचारसह उपजीव्यविरोधापत्तेरिति वक्ति **अत इति** ॥ अर्थे निर्गुणत्वे शाब्दत्वादिकं, एवं स्वस्मिन्निर्गुणशब्दे शब्दत्वादिकं इत्यपि ग्राह्यम् । यथोक्तं न्यायामृते सामान्येन मिथ्यात्वनिरासभङ्गे 'श्रुत्या स्वस्वरूपस्वप्रामाण्यतद्धेतुयोग्यताऽऽदेर्मिथ्यात्वाबोधने प्रत्यक्षादिसिद्धतत्सत्यत्वोपजीवने ब्रह्मेतरसर्वमिथ्यात्वासिद्धेः । —— । बोधने श्रुतिबोध्यार्थस्य तात्त्विकत्वासिद्धेः' इति । शाब्दत्वादीन्भावधर्मानुपजीव्य पुनर्भावधर्ममात्रनिषेधे उपजीव्यविरोधः स्फुटः । अस्तूपजीव्यविरोध इत्यत आह **हसिष्यति सहोदरीति** । **सहोदरी** पञ्चमवेदत्वेन परिगृहीता, 'कृतघ्ने नास्ति निष्कृतिः' इत्युपजीव्यविरोधस्य महाप्रत्यवायापादकत्वं स्थापयन्ती स्मृतिः । श्रुतीनामुच्चारयितुः स्मृतीनां निर्मातुश्च भगवत एकत्वेन तासां सहोदरीत्वम् । **हसिष्यति** स्वानुकूलार्थे योजयिष्यति ॥ ८२१ ॥

**बाध्यस्य चोपजीव्यत्वमबाध्यं चोपजीवकम् ।**
**न श्रुतं न हि सत्सर्पो रज्जुसर्पोपजीवकः ॥ ८२२ ॥**
**ततोऽपि निर्गुणत्वं न स्वोपजीव्यस्य बाधकम् ॥ ८२३ ॥**

**न श्रुतं** । अप्रामाणिकमिति यावत् । यो येनाबाध्यो न स तदुपजीवक इति एतत् दृष्टान्तेन स्पष्टयति **न हीति** । **स्वोपजीव्यस्य** भावधर्मस्य ॥ ८२२ ॥ ८२३ ॥

**तस्माच्छाब्दत्वबोध्यत्वधर्मित्वादिगुणानुगा ।**
**एकत्र च्छिन्नधारेण कुठारेणापरं वने ॥ ८२४ ॥**

**तज्जातीयं कथं छिन्द्यां मन्दाशङ्कितदुर्गुणान् ।**
**छिनद्मि मन्दधाराऽपीत्यगान्निर्गुणवाग्बहिः ॥ ८२५ ॥**

**गुणानुगा** तन्निषेधासमर्था । **एकत्र** शाब्दत्वादौ । **कुठारेण** निषेधार्थकनिरितिशब्देन । **वने** आरण्यकाद्यनन्तश्रुतिप्रतिपाद्ये परमात्मनि । **अपरं** सार्वज्ञाद्यनन्तभावगुणसमुदायम् । **छिन्द्याम्** निराकुर्याम् । **आशङ्कितेति** वस्तुगत्याऽविद्यमानेत्यर्थः । **छिनद्मि** अत्यन्ताभावप्रतियोगित्वेन ज्ञापयामि । **बहिः** प्रमितान्यनिषेधकत्वेन **अगात्** व्यवस्थिता ॥ ८२४ ॥ ॥ ८२५ ॥

**उपजीव्यसजातीयास्सर्वेऽपि ह्युपजीव्यवत् ।**
**भर्तुस्सहोदरास्सर्वे किं न पोष्यास्स्वभर्तृवत् ॥ ८२६ ॥**

ननु शाब्दत्वादीनामुपजीव्यत्वेऽपि सार्वज्ञादीनां न तथात्वम् । भावत्वेन सजातीयत्वादिति चेत् किं तावता । नोपजीव्यत्वजातीयत्वमेवोपजीव्यत्वमित्यत आह **उपजीव्यसजातीया इति** । **उपजीव्यवदिति** । उपजीव्यसदृशाः । तद्वदेवाबाध्या बाधकाश्चेत्यर्थः । प्राबल्योपेता इति यावत् । उक्तं हि न्यायामृते प्रत्यक्षस्योपजीव्यत्वेन प्राबल्यविवरणभङ्गे 'दृष्टं च नरशिरःकपालाशुचित्वागमस्य तच्छुचित्वानुमानादुपजीव्यशुचित्वग्राहिशब्दसाजात्यमात्रेण प्राबल्यमि'ति । अत्र भावत्वेन सजातीयत्वं द्रष्टव्यम् । उक्तन्यायं निदर्शयति **भर्तुरिति** । तदुक्तं भागवते 'स्त्रीणां तु पतिदेवानां तच्छुश्रूषाऽनुकूलता । तद्बन्धुष्वनुवृत्तिश्चे'ति ॥ ८२६ ॥

**किञ्च सर्वज्ञत्वपूर्वापूर्वसर्वगुणा हरौ ।**
**तत्तच्छ्रुतिप्रसक्ताश्चेन्निषेध्यास्स्युर्न चान्यथा ॥ ८२७ ॥**

यद्वैतदस्वरसात्साक्षादुपजीव्यत्वमेवात्रेति समर्थयते **किञ्चेत्यादिना षड्भिः** । येन विना यस्यानुत्थितिस्तत्तस्योपजीव्यमिति लक्षणान्तरमनुरुध्य निषेध्यसमर्पकत्वेनोपजीव्यत्वमाह **सर्वज्ञत्वेति** । **अपूर्वाः** भगवदेकनिष्ठाः श्रुत्येकसमधिगम्याश्च **सर्वे** अनन्ताः प्रत्येकं पूर्णाश्च । **तत्तच्छ्रुतिप्रसक्ताः** अनन्तापर्यायवैदिकशब्दैर्योगवृत्त्या प्रतिपाद्याः । **अन्यथा** योगेनाप्रतिपाद्यत्वे ॥ ८२७ ॥

**तत्तच्छ्रौतपदान्येषां प्रसक्त्यै स्युस्तदैव हि ।**
**यदि मुख्यतयैवैतानभिदध्युर्गुणानपि ॥ ८२८ ॥**

उपपादयति **तत्तदिति** । **मुख्यतयैव** योगेनैव । न त्वज्ञरूढ्या लक्षणादिना वा । न हि तथात्वे गुणप्रसक्तिः ॥ ८२८ ॥

**मुख्या वृत्तिश्च गुणिनि तत्तत्सत्तामपेक्षते ।**
**कथं तत्रैव तद्धर्मसत्तापेक्षावती पुनः ॥ ८२९ ॥**
**तांस्तत्रैव निषेधामि याऽहं तदुपजीविनी ।**
**यदा यत्र घटस्तत्र तदा किं तन्निषेधनम् ॥ ८३० ॥**

**मुख्या वृत्तिः** अवयवार्थं निमित्तीकृत्य प्रतिपादकत्वरूपा योगवृत्तिः । **तत्तत्सत्तां** अवयवार्थभूतगुणसत्ताम् । अन्यथा श्रुतेरर्थसत्ताघटितप्रामाण्यस्यैवायोगात् । यद्देशकालयोः यत्प्रमितं न तद्देशकालयोस्तन्निषेध इत्येतन्निदर्शयति **यदेति** ॥ ८२९ ॥ ८३० ॥

**इत्थं प्रसञ्जकं वाक्यं यस्मादासीत्प्रसाधकम् ।**
**अतोऽपि सा श्रुतिस्सर्वा ह्युपजीव्यैव मे भवत् ॥ ८३१ ॥**

ननु न प्रसंजकत्वरूपोपजीव्यत्वमात्रेण प्राबल्यसिद्धिः । तथा सति नेदं रूप्यमिति धियो निषेध्यसमर्पकत्वेनेदं रूप्यमिति धीरूपजीव्येति तस्या अपि प्राबल्यसिद्धेः । किन्तु प्रमाणत्वेन परीक्षितत्वे सति निर्णीतत्व-विशिष्टम् । सत्यमेवम् । प्रकृते च प्राबल्यप्रयोजकं विशिष्टमेवास्ति । तेन सगुणवाक्यानां प्राबल्यं सिध्यत्येवेत्याह **इत्थमिति** । **प्रसाधकम्** अर्थ-सत्त्वव्यवस्थापकप्रामाण्योपेतम् । अपौरुषेयत्वेन श्रुतीनां स्वतः प्रमाणत्वात् । **उपजीव्यैव** प्रबलैव ॥ ८३१ ॥

**बिभेमि तद्विरोधाय त्रिगुणास्तु जडात्मकाः ।**
**जीवेषु प्रमिता भ्रान्त्या प्राप्ता ब्रह्मणि निर्मले ।**
**निरवद्यश्रुतिस्थेम्ने निषेध्या इत्यगाद्बहिः ॥ ८३२ ॥**

**तद्विरोधाय** गुणनिषेधात् । तर्हि प्रकृतिगुणानामपि कथं निषेध इत्यत आह **त्रिगुणास्त्विति** । जीवेषु प्रमिताः बन्धकत्वेनेति शेषः । एवं प्राप्ता इत्यत्रापि । **निषिध्यन्ते** । तन्निमित्तको लेपरूपदोषः ईश्वरे आरोप्य निषिध्यते इति यावत् । प्रामाणिकत्वेन गुणानामेव निषेधायोगात् । अप्रामाणिकस्यैवात्यन्ताभावप्रतियोगित्वमग्रे भेदसौरभे स्पष्टीकरिष्यते ॥ ८३२ ॥

**अभावशेषे याऽप्याशा सुगुणद्रोहिणां हरेः ।**
**तस्याश्चोक्तात्मधर्माणां पक्षपातो भयङ्करः ॥ ८३३ ॥**

सुगुणा भावभूता तेभ्यो द्रुह्यन्तीति तेषाम् । तन्निषेधायाभावशेष-मभिलषतां मायिनाम् । **तस्याः** शेषाशायाः । वानरप्रतिषेधाय सर्पाश्च

प्रयोक्तुरिन्द्रजित आशाया इवेति ध्वनिः । उक्ता आत्मधर्माः ज्ञानानन्दादयः । यद्वा, उक्तात्मानो ये धर्माः शाब्दत्वज्ञेयत्वादयः । तेषां पक्षपातः । उपजीव्यत्वेन तदपरित्यागे आग्रहः । अन्यत्र पक्षिश्रेष्ठस्य गरुडस्योपनिपातः आत्मधर्माणां परमात्मसेवार्थं युद्धधर्मनिरतानां वानराणाम् । **पक्षपातः** स्नेहः ॥ **भयङ्करः** अभावद्वैतदूषकः । अन्यत्र सर्पास्त्रविनाशकः । ॥ ८३३ ॥

**अभावे गौरवं प्राहुर्भावे च लघुतां बुधाः ।**
**चित्रं श्रुत्यङ्गना धत्ते शिलां न किल मालिकाम् ॥ ८३४ ॥**

**गौरवं** तज्ज्ञानस्य धर्मिप्रतियोगिबोधपराधीनत्वात् । **लघुता** तन्निरपेक्षज्ञानविषयत्वात् । गौरवमनादरणीयमित्येतत्साहित्यमुद्रया रञ्जयति **चित्रमिति** । **शिलां** गुर्वीं स्वानर्थकरीम् । किलेत्यपहासे ॥ ८३४ ॥

**भावो हि योषितां भूषा भावो वाचां च भूषणम् ।**
**तं भावं वाग्वधूरेषा दूषयेत्केन हेतुना ॥ ८३५ ॥**

**तं** उभयविधम् । **एषा** उभयरूपा । किमाक्षेपे ॥ ८३५ ॥

**किञ्च किञ्चनशब्दस्य भावं यो वेत्ति कश्चन ।**
**अभावशेषं स कथं दोषं न मनुते बुधः ॥ ८३६ ॥**

परपक्षे किञ्चनशब्दस्य भावमात्रार्थाश्रयणेऽस्वारस्यं च दोषः इत्याह **किञ्चेति** । स्वमते तु गुणक्रियाऽवतारादीनां सर्वेषामपि ग्रहणान्न स इत्यपि मन्तव्यम् ॥ ८३६ ॥

**स्वव्याहतिभयात्स्वार्थं नाभावं यर्हि वारयेत् ।**
**न मारयेत्तर्हि नित्यां स्वां च भावस्वभाविनीम् ॥ ८३७ ॥**

स्वशब्दः स्वीये स्वस्मिंश्च व्युत्पन्नः। श्रुतेश्च द्वयी गतिः। अभावनिषेधः भावनिषेधश्च। तत्राद्ये स्वीयस्य विषयस्य निषेधान्निर्विषयत्वलक्षणा-मानत्वप्राप्त्या स्वव्याहतिः। द्वितीये भावात्मिकायाः स्वस्या एव निषेध-प्राप्त्या स्वव्याहतिः। अतः स्वव्याहतेर्बिभ्यता अभावधर्मा यथा न वारणीयास्तथा भावात्मकं श्रुतेः स्वस्वरूपमपि न मारणीयमित्याह **स्वेति**॥ व्याहतेरुभयत्राविशेषादिति भावः॥ ८३७॥

**मानत्वधर्मनाशस्स्याद्भावप्रतिषेधने।**
**धर्मिनाशो भवेद्धन्त भावार्थप्रतिषेधने ॥ ८३८॥**

वस्तुतस्तु नाविशेषः। एकत्र धर्ममात्रहानिः अपरत्र धर्मिणः स्वरूपस्यैव हानिरिति विशेषस्यैव सद्भावादित्याह **मानत्वेति**॥ ८३८॥

**सति धर्मिणि धर्मस्य चिन्तामाहुर्विपश्चितः।**
**धर्मिनाशाद्भयं नो चेद्धर्मनाशेन किं भयम्॥ ८३९॥**

तत्र द्वितीयः पक्षो यत्नतः परिहरणीयो 'धर्मिनाशाद्धर्मनाशो वरं' इति विपश्चितां वचनादित्याह **सतीति**। 'आत्मार्थे पृथिवीं त्यजेदि'ति न्यायात्॥ ८३९॥

**यदि तत्वज्ञानतायै न बोध्यस्य निषेधनम्।**
**तदर्थमेव तर्ह्यज्ञ बोधकं च न बाध्यताम् ॥ ८४०॥**

वेदस्तत्वावेदकः। तद्बोध्यस्याभावस्य तत्वतायामेव तथात्वं सिध्यति। अतो नाभावस्य निषेध इति शङ्कते **यदीति**। परिहरति **तदर्थमिति**। बोध्यसिद्ध्यर्थमेव। न हि वन्ध्यासुतवचसाऽर्थसिद्धिरिति भावः॥ ८४०॥

**वक्तृत्वगुणबाधे हि श्रुतेर्बाधे न बोधकम्।**
**नेह नानेति वाक्ये तु साक्षाद्बाधान्न बोधकम्॥ ८४१॥**

ननु नेहनानेति वाक्येन भावमात्रनिषेधात्स्वस्यापि निषेधप्राप्त्याऽस्तु तस्य वन्ध्यासुतवचस इवाबोधकत्वं, निर्गुणश्रुतिस्तु भगवद्गुणमात्रनिषेधपरा। अतो न तया श्रुतिस्वरूपबाधः नतरामबोधकत्वमिति मन्दाशङ्कां निराह **वक्तृत्वेति**। शब्दो न सत्तया बोधकः किं तु ज्ञातकरणम्। तज्ज्ञानं चोच्चरितस्य। उच्चारकश्चादिवक्ता भगवान्। 'यो वेदांश्च प्रहिणोति तस्मै' इति श्रुतेः। ततश्चेश्वरे वक्तृत्वगुणनिषेधे उच्चारणाभावेन बोधकत्वं न सिध्यतीत्याह **न बोधकमिति**॥ वक्तृत्वेत्युपलक्षणम्। बुद्धिशक्त्यादि-भावगुणेत्यपि ग्राह्यम्। एतेनैतदपि निरस्तम्। उच्चारणाभावेऽपि न श्रुति-स्वरूपं हीयते। तस्य नित्यत्वेन विष्णुबुद्धावस्थितेः। तदुक्तं 'नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगा' इति। नापि तद्बोधकत्वम्। अर्थ-प्रतिपादनादिशक्तेस्तत्स्वभावत्वात्। अतः 'श्रुतेर्बाधे न बोधकमि'त्युक्त-मसदिति। भावधर्ममात्रनिषेधे बुद्धेरपि निषेधेन तद्बुद्ध्यवस्थानायोगात्। एवं शक्तेरपि निषेधेन तच्छक्यस्य स्वभावस्यापि बोधकत्वस्यानवस्थानादेव। तदुक्तं गायत्रीनयानुव्याख्याने 'तादृशत्वाच्च तच्छक्तेरि'ति। तत्रैव सुधायां च 'तादृशी खल्वीश्वरशक्तिः। यन्नित्यानित्यस्वभावास्वभावविषया। अन्यथा सर्वेश्वरत्वहानेः' इति। अतः साधूक्तं 'श्रुतेर्बाधे न बोधकमि'ति॥ अस्तु वा श्रुतिस्वरूपम्। तथाऽपि तदुच्चारणाभावे तव तेन त्वदद्वैतबोधा-सिद्धिरेव। शब्दस्य ज्ञातकरणत्वादित्युक्तमेवेति यत्किञ्चिदेतत्। इयानेव विशेषो वाक्यद्वयस्येत्याह **त्विति**। निर्गुणवाक्येन तु वक्तृत्वगुणनिषेध-द्वारा। बोधकत्वाभाव उभयत्र सम इति स्थितम्॥ ८४१॥

**सतोऽपि दोषतो दोषस्त्वासत्त्वे किं न दुष्टता॥ ८४२॥**

तदेव विशदयति **सत इति**। निर्गुणश्रुतिपक्षे विद्यमानस्यापि श्रुतिस्वरूपस्य। **दोषतः** योग्यताऽऽदिभावधर्मनिषेधेनापतितायोग्यताऽदि-

दोषतः । **दोषः** यथार्थज्ञानजनकत्वाभावः । कथञ्चिज्ज्ञानजनकत्वेऽपि यथार्थत्वरूपविशेषणाभावाद्विशिष्टाभावः । **स्वासत्त्वे** नेहनानास्तिश्रुतिपक्षे । **किं न दुष्टता** उभयाभावादेव विशिष्टाभावः सिध्यत्येव । यद्वा वाक्यद्वयेनापि श्रुतिस्वरूपस्यैवोक्तदिशाऽसत्त्वम् । सतोऽपीति तु कैमुत्यव्युत्पादनार्थम् ॥ ८४२ ॥

**धर्मी स(र्वा)त्वात्मना रक्ष्यो न चेद्ब्रह्मैव शाम्यति ।**
**तदिहेति पदात्सच्चेत्तत्पदं चात एव सत् ॥ ८४३ ॥**

किञ्च ब्रह्मणि धर्मनिषेधार्थमपि नेहनानेति वाक्येन स्वस्वरूपं सर्वथा रक्ष्यम् । अन्यथा धर्मिणो ब्रह्मणोऽपि तेनासिद्ध्या कुत्र धर्मान्निषेधेत् । यत्र क्वापि धर्मनिषेधे ब्रह्मणि तदसिद्धेः इत्याह **धर्मीति** । ननु न धर्मिणो ब्रह्मणोऽसिद्धिः । इहेति पदेन तत्सिद्धेरिति मन्द आशङ्कते **तदिति** । परिहरति **तत्पदमिति** । **अत एव** बोध्यस्य ब्रह्मणः सत्त्वादेव । करणस्य सत्यत्वे विषयस्य सत्त्वं इति यद्यपि न नियमो भ्रमस्थलीयदुष्टकरणे व्यभिचारात् तथाऽपि विषयसत्त्वे करणसत्त्वनियमेनेहेतिपदसत्त्वमेष्टव्यं समानन्यायेन निषेधसिद्ध्यर्थं पदान्तरसत्त्वमपीत्याशयः ॥ ८४३ ॥

**व्यावहारिकसत्त्वेन बोधकं यदि बोधकम् ।**
**व्यावहारिकसत्त्वेन बोध्यस्याप्यस्तु बोध्यता ॥ ८४४ ॥**

स्यादेतत् । नेह नानेतिवाक्येन न स्वस्य स्वघटकेहपदस्य वा स्वरूपेण निषेधः येनासाधकत्वम् । किन्तु पारमार्थिकत्वाकारेणैव । व्यावहारिकसत्त्वं त्वनुमतम् । अतो न धर्मिणो ब्रह्मणोऽसिद्धिः नापि धर्मनिषेधस्य इत्याशङ्कते **व्यावहारिकेति** । **बोधकं** इहपदं वाक्यं च । **बोधकं** ब्रह्मणः तद्धर्मनिषेधस्य च । परिहरति **व्यावहारिकसत्त्वेनेति** ।

**बोध्यस्य** ब्रह्मणः धर्मनिषेधस्य च । न च निषेधस्य व्यावहारिकसत्त्वमिष्टमेवेति वाच्यम् । तस्य ब्रह्मस्वरूपत्वाभ्युपगमात् अन्यथाऽद्वैतहानेः । श्रुतेरतत्त्वावेदकत्वापत्तेश्च ॥ ८४४ ॥

**घटधीरिव तद्धीश्च स्यादविद्यानिवर्तिका ॥ ८४५ ॥**

अतत्वावेदकत्वं साध्यतयाऽभिहितं नत्वापाद्यतयेति भ्रान्त्या शङ्कमानं प्रत्याह **घटधीरिति** । अयमाशयः । श्रुतेरतत्वावेदकत्वे तज्जन्यज्ञानस्यापारमार्थिकत्वं प्राप्नोति । ब्रह्मज्ञानस्य चापारमार्थिकत्वे न तेन तदज्ञाननिवृत्तिरिति शास्त्रस्य निष्प्रयोजनत्वमापद्यते । ज्ञानस्याज्ञाननिवर्तकत्वे पारमार्थिकत्वमेव तन्त्रमिति नियमादिति किल शङ्कितुरभिप्रायः । न स युक्तः । घटज्ञानस्यापारमार्थिकत्वेऽपि तदज्ञाननिवर्तकस्य दृष्टत्वन्नियमस्यैवायोगादिति । तदेतदाह **घटधीरिति** । **तद्धीः** व्यावहारिकब्रह्मधीः । इदं च साधकत्वमिति शङ्कितुरभिप्रायमभ्युपेत्योक्तिः । वस्तुतस्त्वज्ञानानिवृत्तिरपि अस्माभिरेवापाद्यत इति ध्येयम् ॥ सत्ताप्रभेदस्यानङ्गीकारादिति भावः ॥ ८४५ ॥

**एवं च यदि बोध्यस्य तत्वतायां भरो मम ।**
**बोधकस्यापि तद्भावे भरोऽवश्यमपेक्षितः ॥ ८४६ ॥**

श्रुतेर्विमर्शप्रकारमुपसंहरति **एवं चेति** ॥ ८४६ ॥

**न हि वन्ध्यासुतं सूते नाप्यात्मानं जिघांसति ।**
**अतो भावाभावतया न विभागो ममोचितः ॥ ८४७ ॥**

अत्र तर्कद्वयं विवक्षितम् । यदि भावाभावतया विभज्य भावधर्मानेवाहं यदि निषेधेयं तर्हि बोधकत्वलक्षणमातृत्वरूपभावधर्मनिषेधेन मम वन्ध्यात्वापत्त्या ज्ञानरूपसुतजननीत्वं न स्यात् । शब्दत्वरूपधर्म-

निषेधेन स्वहत्या च कृता स्यात् इति । आद्ये व्याप्तिं निदर्शयति **नहीति** । द्वितीयेऽपि तां निदर्शयति **नापीति** । अत्र वन्ध्येत्यस्य नानुषङ्गः । यः कोऽपि विवेकीत्युपस्कर्तव्यम् ॥ तर्कद्वयस्यापि पर्यवसानं **अत इति** ॥ ८४७ ॥

**तद्यत्र नास्ति तत्तत्र निषेधामीति वागियम् ।**
**त्रैगुण्यवर्जिते विष्णौ गुणत्रयमदूषयत् ॥ ८४८ ॥**

**तत्** तस्मात् भावधर्माणां प्रमितानां निषेधायोगात् । **तत्** प्रमितेतरम् ॥ **इति** विमृश्येति शेषः । **इयं निर्गुणवाक्** नेहनानास्तीति वाक् च । **त्रैगुण्यवर्जिते** । 'गुणेभ्यश्च परं वेत्ती'ति इति गीतोक्तेः । स्वगतभेदविवर्जिते च । एवं धर्मानिति श्रुतेः । **गुणत्रयं** स्वगतभेदं च ॥ ८४८ ॥

**ह्रीमत्या मम सङ्कोचगमनं नैव दूषणम् ।**
**गुणिनां गुणनिन्दा तु महादोषप्रदा किल ॥ ८४९ ॥**
**इति निर्गुणवाग्धर्मवशीकृतमतिः प्रभोः ।**
**धर्मनिर्मूलनं धर्मं न मेन इति मे मतिः ॥ ८५० ॥**

**ह्रीमत्याः** पूर्वोत्तरविरोधात्प्रमाणान्तरविरोधाच्च बिभ्यत्याः । **सङ्कोचगमनं** गौणाद्यर्थस्याप्याश्रयणम् । तदुक्तं **'प्रत्यक्षादिविरोधे तु गौणार्थस्यापि संभवादि'**ति ॥ ८४९ ॥ ८५० ॥

**अपि चैकत्वधर्मस्य सत्त्वे भावगुणोऽस्ति ते ।**
**तदभावे गतं शास्त्रमैक्यमेकत्वमेव यत् ॥ ८५१ ॥**

अन्तरङ्गं पूर्वपदविरोधं च श्रुतिर्विमृशतीत्याह **अपि चेत्यादित्रिभिः** ॥ पूर्वपदं एकपदं एकत्वरूपं भावधर्मं विदधाति । सः सन्वाऽसन्वा ।

नाद्यः इति वदति **भावेति** । द्वितीये दोषमाह **शास्त्रं तव** विमतं श्रुतितन्मीमांसाशास्त्रम् । **गतं** अनारम्भणीयं स्यादिति शेषः । अयथाभूतैकत्वप्रतिपादकत्वे इति भावः । यद्वा **तव शास्त्रं** श्रुतिमीमांसे अन्यथाव्याकुर्वन्मायावादिशास्त्रम् । **गतं** अनारम्भणीयमेवेति मायावादखण्डनटीकोक्तरीत्या द्वेधा योज्यम् । ननु एकशब्द एकत्वमेव विदधाति न त्वैक्यम् । अतो निर्गुणपदेनैकत्वनिषेधेऽपि मच्छास्त्रविषयैक्यस्यानिषेधान्नोक्तदोष इत्यत आह यदिति यस्मादेकत्वमैक्यमिति चानर्थान्तरमिति भावः ॥ ८५१ ॥

**सुन्दोपसुन्दन्यायेन निर्गुणैक्यश्रुती मिथः ।**
**विरोधेन हते कुर्यान्मायामततिलोत्तमा ॥ ८५२ ॥**

कुर्यादित्यापादनम् । यदि मायामतं प्रमाणं स्यात् तर्हि श्रुत्योर्मिथो विरोधेनाप्रामाण्यं स्यात् । न च तद्युक्तम् । अतो मायामतमप्रमाणमेवेति तर्को ध्येयः । तिलोत्तमेति व्यतिरेकदृष्टान्तः । सा मोहनेन दुष्टौ घातयित्वा स्वयं सद्गतिमाप । मायी तु नित्यशुद्धवाचौ कलङ्कयितुमुद्यतोऽधोगतिमवाप ॥ ८५२ ॥

**इत्याद्यालोच्य नैर्गुण्यश्रुतिरैक्यश्रुतिं सर्वाम् ।**
**आदाय भारतीप्राणनाथं शरणमीयुषी ।**
**स्वमिथ्यात्वभयाभावात्तदुक्तार्थेष्ववर्तत ॥ ८५३ ॥**

**इत्याद्यालोच्य** 'एवं विमृश्याव्यभिचारिसद्गुणं' इति भागवतोक्तरीत्या समुद्रमथनकाले इव विचार्य । **ऐक्यश्रुतिं** उपलक्षणम् । 'सर्वे वेदा युक्तयः सुप्रमाणा' इति भाष्योदाहृतसर्वशाखा **आदाय** एकस्मिन्नविरुद्धार्थे तात्पर्यवत्त्वेन स्वीकृत्य **भारती** वेदमुख्याभिमानिनी महालक्ष्मीः । **प्राणनाथं** स्वस्याः परविद्यात्वसम्पादकसूत्रकृतं **शरणं ईयुषी** अनुग्राहकत्वेन

स्वीकुर्वाणा । **तदुक्तार्थेषु** 'तद्गुणसारत्वात्तु तद्व्यपदेश' इत्यादिभिः **सूत्रै-र्निर्णीतार्थेषु** । **अवर्तत** अनुकूलतया सदा वर्तते । यद्वा **भारती** 'वेदविद्या च पार्षती' इत्युक्ता वायुपत्नी । **प्राणनाथं** मध्वम् । **भयाभावात्** एकविंशतिकुभाष्यभयाभावात् । **तदुक्तार्थेषु** भाष्योक्तार्थेषु । अन्यत्समम् । एतेन श्रुतीनां जडत्वात् विमृश्य ईयुषी इत्याद्युक्तो विरम्य व्यापारः कथमिति शङ्काऽनवकाशः । अभिमानिदेवतानामपि सज्जनबोधनायैव विमर्श-प्रदर्शनम् । स्वयं सन्देहाभावात् । अतः 'तद्वाक्यस्याग्रतो भवेदि'ति अनुव्याख्यानसुधोक्तरीत्या परीक्षकबुद्धय एव प्रामाण्यावधारणायैवं क्रमेण प्रवर्तन्त इति भावः अनुसन्धेयः ॥ ८५३ ॥

**विद्वत्प्रयोगबाहुल्याच्छब्दस्यार्थोऽभिधीयते ।**
**पदलभ्यत्वतो नैव यद्वा तद्वा निगद्यते ॥ ८५४ ॥**

किञ्च निर्गुणशब्दस्य चिन्मात्रबोधकत्वं किमभिधावृत्त्या लक्षणया वा । नाद्यः अभिधाया ज्ञापकस्य प्रयोगस्याभावादित्याह **विद्वदिति** । यथोक्तं 'प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते' इति । विद्वद्रूढेरविद्वद्रूढ्य-पेक्षया बलीयस्त्वज्ञापनाय विद्वत्प्रयोगेत्युक्तम् । तदुक्तं चन्द्रिकायां 'रूढि-त्वाविशेषेऽपि विद्वद्रूढेरेवासम्भाविताज्ञानमूलाया बलीयस्त्वोपपत्तेश्चे'ति ॥ निमित्तं पदलभ्यमस्तीत्येतावता विद्वांसो यत्र क्वचिदप्रामाणिकेऽर्थे पदं न प्रयुञ्जत इत्याह **पदेति** । यदाहुः 'प्रयोगे सति निमित्तानुसरणं, न तु निमित्तमस्तीति प्रयोग' इति ॥ ८५४ ॥

**न हि पङ्कजशब्देन भेकं लोकोऽनुमन्यते ।**
**किं वा सुवर्णशब्देन वह्निः केनापि कथ्यते ॥ ८५५ ॥**

तदेव निदर्शनाभ्यां द्रढयति **न हीति किं वेति च** ॥ ८५५ ॥

**अशब्दे ते प्रयोगो न प्रयोगबहुता कुतः ॥ ८५६ ॥**

प्रकृतोपयोगमाह **अशब्दे इति**। **ते** त्वया अवाच्यत्वेनाभ्युपगते चिन्मात्रे। **प्रयोगो न** तथा सति शाब्दत्वापत्तेरिति भावः। नतरां विद्वत्प्रयोगः। नतमां तद्बाहुल्यम्। येनाभिधासिद्धिः॥ एतेन लक्षणा-पक्षोऽपि परास्तः। 'सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेः' इति भगवत्पादी-योक्तेः॥ ८५६ ॥

**श्रौतस्मार्तप्रयोगश्च हरावेव प्रदर्शितः।**
**बलात्त्वया स नीतश्चेत्कूर्मरोमण्यपरो नयेत् ॥ ८५७ ॥**

**श्रौतः** केवलो निर्गुणश्चेत्यादिः। **स्मार्तः** निर्गुणं गुणभोक्तृ च' 'योऽसौ निर्गुण इत्युक्तः' इत्यादिः। **एवेति** मुख्यप्रयोग इत्यर्थः। 'तं भजन्निर्गुणो भवेत्' इति मुक्ते जीवे प्रयोगस्तु न मुख्यः। तदुक्तमनु-व्याख्याने 'इतो हि रूढताऽन्येषामुपजीव्यत्वमत्र हि' इति। **बलात्** प्रयोगरहितान्निमित्तमात्रसद्भावात्। **अपरः** त्वत्प्रतिवादी। **नयेत्** तच्छब्द-प्रयोगः स्यादित्यापादयेत्। अतो निमित्तसद्भावमात्रेण न प्रयोगः नाप्य-भिधावृत्तिरिति निष्टंकितम्॥ ८५७ ॥

**तत्तत्पदार्थसामर्थ्यानुपमर्दन शब्दतः।**
**अर्थो बोध्यो न शब्दस्य सत्त्वादर्थोपमर्दनम् ॥ ८५८ ॥**
**गुरौ गुरुपदं हि स्यादुपदेशादिकैर्गुणैः।**
**भारेण तु शिलायां स्यात्कल्पनायां बहुत्वतः ॥ ८५९ ॥**

शब्दार्थयोर्मध्येऽर्थस्यैव प्राधान्यादर्थानुसारेणैव शब्दो नेयः। न तु पुनः शब्दस्य संभवदनेकेष्वर्थेषु यं कमपि गृहीत्वाऽर्थस्य क्लृप्तस्वरूपो-पमर्दनमिति सदृष्टान्तमाह **तत्तदिति**। गुरुपदस्यानेकार्थानाह **गुरौ इति**।

पदं खलु स्वार्थे योग्यं स्वप्रवृत्तिनिमित्तं धर्मं समर्पयत्सत् तद्विरोधिधर्मं ततो व्यावर्तयतीति पदानां स्वभावः । तद्यथा । आचार्ये विद्योपदेष्टृत्वं समर्पयत्तस्मात्तद्विरोधिनं तत्वज्ञानाभावादिकं व्यवच्छिनत्ति । पाषाणे भारवत्त्वं व्यवस्थाप्य लाघवं निवारयति । मायिमतेऽज्ञानमिथ्यात्वे कल्पनागौरवं दोषं निरूपयत् कल्पनानां प्रामाणिकत्वैकत्वे निराकरोति । न तु पुनः तेषु तेष्वर्थेषु प्रामाणिकत्वेन विद्यमानानेव धर्मानपलपति । एवं निर्गुणपदं 'बृहन्तोह्यस्मिन्गुणा' इति श्रुतिसिद्धकल्याणगुणाकरे ब्रह्मणि प्रयुक्तं विष्णावनन्तमङ्गलगुणान्समर्पयत्तद्विरुद्धं गुणत्रयबद्धत्वमेव निराकरोति न तु स्वेनैव प्रतिपादितज्ञानानन्दादीन्गुणानिति भावः ॥ ८५८ ॥ ८५९ ॥

**कन्यकाऽनुदरेत्युक्ते काष्ठैः संयोजयन्ति किम् ॥ ८६० ॥**

पदानामर्थसङ्कोचोऽपि प्रमाणाविरोधेनैव कार्य इत्याह **कन्यकेति** । अन्यथाऽतिप्रसङ्गमाह **काष्ठैरिति** । यावद्धर्मिभाविधर्मापलापे धर्म्यपलाप एव कृतः स्यादिति भावः ॥ ८६० ॥

**अशोभनगुणैः पूर्णे प्रयुक्ता निर्गुणाभिधा ।**
**सुशोभनगुणानेव निषेधति न तान्गुणान् ॥ ८६१ ॥**

**सुशोभनगुणैः पूर्णे प्रयुक्तं तत्पदं हरौ ।**
**अशोभनगुणानेव निषेधति न शोभनान् ॥ ८६२ ॥**

निषेधस्य सर्वत्र प्रमितेरप्रतियोगिकत्व एव पर्यवसायित्वमित्याह **अशोभनेति सुशोभनेति** च द्वाभ्याम् ॥ ८६१ ॥ ८६२ ॥

**यस्मात्तत्पुरुषः श्रेष्ठस्तस्माद्गुणसंज्ञया ।**
**गुणोऽप्रधानो नेतीशे प्रोक्ता सर्वप्रधानता ॥ ८६३ ॥**

निर्गुणशब्दनिर्वचनेनैव सर्वप्रधानत्वमर्थो लभ्यते इत्याह । **यस्मादिति** । निरित्युपसर्गस्य निषेधोऽर्थः । 'निस् निषेधे च निश्चये' इति मेदिनी । गुणशब्दस्य चाप्रधानेत्यर्थः । 'गुणो मौर्व्यामप्रधाने' इति मेदिनी । 'रूपादावप्रधाने चे'ति हेम० । गुणोऽप्रधानो न भवतीति निर्गुण इति तत्पुरुषः । नञ्द्वयमहिम्नाऽतिशयलाभेन सर्वप्रधानतालाभः । बहुव्रीहिस्तु अन्यपदार्थप्रधानत्वाज्जघन्यः । तत्पुरुषः समासः श्रेष्ठः । सचासौ पुरुषः परमात्मा च श्रेष्ठः । तस्मादित्यावृत्त्या योजना ॥ ८६३ ॥

**अप्रधानं जगदिदं सृष्टौ यस्माद्विनिर्गतम् ।**
**स निर्गुणो हरिस्सर्वस्रष्टृत्वाख्यमहागुणः ॥ ८६४ ॥**

यद्वा निर्गतः सृष्टिकाल उदरात् गुणः अप्रधानः अशेषप्रपञ्चो यस्येति बहुव्रीह्याश्रयणेऽपि सर्वस्रष्टृत्वाख्यगुणलाभ इत्याह **अप्रधानमिति** । ॥ ८६४ ॥

**शिवश्शक्तियुतश्शश्वत्त्रिलिङ्गो गुणसंवृतः ।**
**वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ८६५ ॥**
**ततो विकारा अभवन्षोडशामीषु वर्त्मसु ।**
**उपधावन्विभूतीनां सर्वासामश्नुते गतिम् ॥ ८६६ ॥**
**हरिस्तु निर्गुणस्साक्षात्पुरुषः प्रकृतेः परः ।**
**स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥ ८६७ ॥**

भागवतसमाख्ययाऽपि प्रोक्तमर्थं समर्थयते शिव इत्यादिना मत्तभाषितमित्यन्तेन (श्लो ८७९) ग्रन्थेन । अत्रादौ 'देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् । प्रायस्ते धनिनो ब्रह्मन्न तु लक्ष्मीपतिं हरिमि'ति राज्ञः शुकं प्रति कृतं चोद्यं अनुसन्धेयम् । **अशिवं** बहिर्धियां तथा प्रतीयमानम् । 'त्वमशिवोऽप्यनन्तधियामि'ति शिवस्तुतिवचनात् । वस्तुतः शिवं पवित्रम् ।

'तथाऽपि भवतः पदं शिवशिवेत्यदो जल्पतामि'त्यादि तत्रैवोक्तेः । **ते धनिनः** 'ससुरसिद्धविद्याधराः । भवत्पदपरायणाः श्रियमिमामयुरि'ति च । **न तु लक्ष्मीपतिं** हरिम् । त्रैलोक्यदानेऽपि बलेरैश्वर्यभ्रंशस्यैव जातत्वात् । 'ब्रह्मन्यमनुगृह्णामि तद्विशं विधुनोम्यहं' इति कण्ठत एव वामनोक्तितश्च । कपालिनः सेवयैश्वर्यलाभः लक्ष्मीपतेराराधनेन तु तद्भ्रंश इत्येतद्विरुद्धं कथमिति राज्ञश्चोद्याभिप्रायः । परिहरति शुकस्त्रिभिरिति तान्श्लोकान्पठति **शिव इत्यादिना** ॥ ८६५ ॥ ८६६ ॥ ८६७ ॥

**इति भागवते प्रोक्तो हरिरेव हि निर्गुणः ।**
**समस्तगुणसंपूर्णश्श्रुत्या स्मृतिसमार्थया ।**
**केवलो निर्गुणश्चेति व्यापी देवस्स कथ्यते ॥ ८६८ ॥**

**अतस्त्रिगुणशून्यत्वाद्गुणसर्वस्वबृंहितः ।**
**स एव निर्गुणं ब्रह्म शुद्धं ब्रह्म स एव नः ॥ ८६९ ॥**

श्लोकान्प्रकृतोपयोगं दर्शयन्नेव व्याख्याति **इतीति** । प्रकृतेः पर इति समाख्यया लब्धोऽर्थो **निर्गुण इति** । पुरुषः सर्वदृगुपद्रष्टेत्यस्याशयः **समस्तगुणसंपूर्ण इति** । यथोक्तं गीतायां 'उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः पर' इति । गुणसर्वस्वबृंहितः इति शुद्धत्वे हेतुः 'प्रच्युतोऽशेषदोषैः सदा पूर्तितः' इत्युक्तेः ॥ ८६८ ॥ ८६९ ॥

**नैर्गुण्याख्यो महामोक्षो यत्पादभजनाद्भवेत् ।**
**शबलं ब्रह्म स किल गङ्गा यत्पदसङ्गतः ।**
**सद्यश्शुद्धिकरी नृणां सोऽशुद्धः किल दुर्धियाम् ॥ ८७० ॥**

'तं भजन्निर्गुणो भवेदि'त्युक्तमोक्षप्रदत्वाच्चैवमित्याह **नैर्गुण्येति** । न वर्तते यत्र रजस्तमस्तयोः सत्वं च मिश्रमि'ति गुणत्रयातीतत्वान्महामोक्षस्य नैर्गुण्याख्या । 'गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् । जन्ममृत्युजराव्याधिविमुक्तोऽमृतमश्नुते' इति गीतोक्तेश्च । एवंविधस्य शबलत्वोक्तिरपहास्येत्याह **किलेति** । 'गौणश्चेन्नात्मशब्दात्' 'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रकृतैव प्रतिषेधात् । अन्यगतशुद्धिं प्रति स्वातन्त्र्याच्च तत्र महायोगेन शुद्धपदवृत्तिरित्याह **गङ्गेति** । तदुक्तं 'स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् ॥ स्वातन्त्र्यं तत्र मुख्यं स्यादि'ति । **अशुद्धः किल** मायाशबलः किल । **दुर्धियाम्** । तदुक्तमनुव्याख्याने 'कथं न जायते लज्जा' इति 'वन्ध्यापुत्रोपमं मायाशबलं वाच्यमित्यपी'ति च ॥ ८७० ॥

**मोक्षस्य निर्गुणत्वं च त्रैगुण्योज्झिततैव हि ।**
**समस्तधर्मशून्यत्वे मोक्षाय प्रयतेत कः ॥ ८७१ ॥**

निर्विशेषब्रह्मभावस्य मोक्षोक्तिस्तस्य पुरुषार्थत्वमेव व्याहन्तीत्याह **प्रयतेत क इति** ॥ ८७१ ॥

**धर्माय यशसेऽर्थाय ज्ञानाय यतते जनः ।**
**लुप्त्यै समस्तभाग्यानां को नून्मत्तःप्रवर्तते ॥ ८७२ ॥**

एवंविधं मोक्षं महोन्मत्तोऽपि नेच्छति दूरे स्वस्थात्मेत्याह **धर्मायेति** । **प्रवर्तते** इच्छति दूरे तत्साधनप्रयत्नः । महादुःखात्मकत्वात् । तदुक्तं तत्वनिर्णये 'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेदि'ति ॥ ८७२ ॥

**सगुणप्रीतिलभ्यस्य नैर्गुण्यं तद्वदेव हि ।**
**यथोपास्ते तथैवासौ भवतीति हि वेदवाक् ॥ ८७३ ॥**

मोक्षो हि भगवदुपासनासाध्यः । भगवांश्च ज्ञानानन्दादिगुणवान् प्रकृतिगुणरहितश्च । यथा यथोपासते तथैव भवतीति च श्रुतिः । अतो मोक्षोऽपि स्वयोग्यज्ञानानन्दाद्यभिव्यक्तिमान् प्रकृतिबन्धरहितश्चेत्याह **सगुणेति** । तद्वदेवेति च ॥ ८७३ ॥

**न हि निर्गुणशब्दोऽयं चिन्मात्रस्य विवक्षया ।**
**भाविनैर्गुण्यदृष्ट्या वा शिवस्यापि प्रसक्तितः ॥ ८७४ ॥**

ननु हरौ प्रयुक्तो निर्गुणशब्दो न मुख्यवृत्त्या । येन तस्यैव निर्गुणत्वसिद्धिः । किं तु लक्षणया चिन्मात्रपरः । यद्वा मायाऽपगमे तस्यैवोत्तरत्र नैर्गुण्यं भविष्यतीति दृष्ट्या । मैवम् । तथा सति हरिस्तु इत्यत्र तुशब्दोक्तस्य शिवाद्यद्वैलक्षण्यस्यासिद्ध्या तद्वैयर्थ्यापत्तेरित्याह **न हीति** । कुत एवमित्यत आह **शिवस्येति** ॥ उक्तप्रकारद्वयस्य तत्रापि साम्यादिति भावः ॥ ८७४ ॥

**अतो निर्गुणशब्दोऽयं हरौ त्रिगुणवर्जनात् ।**
**मुक्तोऽपि तेन तच्छब्दो गुणबद्धाश्शिवादयः ॥ ८७५ ॥**

**अतः** नित्यमुक्ते हरौ तथा मुक्ते जीवे च निर्गुणशब्दप्रयोगात् बद्धे शिवे च तदप्रयोगात् प्रत्युत गुणसंवृत इति प्रयोगात् । उभयत्र गुणशब्दो बन्धकत्रिगुणपर एवेत्याह **हरौ मुक्तोऽपीति शिवादय इति च** । आदिपदेन शिवोपासका ग्राह्याः ॥ ८७५ ॥

**प्रकृतेः पारगत्वोक्त्या निर्गुणोऽतद्गुणो हरिः ।**
**प्राकृताहंकृतेरुक्त्या सगुणस्तद्गुणश्शिवः ॥ ८७६ ॥**

**इत्येव सर्वथा वाच्यं न चेद्यर्थे विशेषणे ।**
**गुणसंवरणं चोक्तं भवेदावरणैर्गुणैः          ।। ८७७ ।।**

उभयत्र विद्यमानविशेषणपर्यालोचनयाऽप्येवमित्याह **प्रकृतेरिति** । प्रकृतेः पर इति निर्गुणत्वे हेतुगर्भं विशेषणम् । एवं त्रिलिङ्ग इति गुणसंवृतत्वे । त्रिलिङ्ग इत्यस्य विवरणं **प्राकृतेत्यादि** । अहं त्रिधेत्यत्र अहंशब्दस्य शिवविग्रहः अहङ्कारतत्वमर्थः ।। संवृतशब्दोऽपि स्वविशेषणीभूतगुणपदार्थं आवरणभूतगुणा एवेति व्यवस्थापयतीत्याह **गुणेति** ।। ८७६ ।। ।। ८७७ ।।

**संपत्तेः प्राकृतत्वेन तद्बद्धोपासनेन सा ।**
**तद्धीना तु न सेत्याह या वाक्सा वक्ति मन्मतम् ।। ८७८ ।।**

संपत्तिः द्विविधा । 'प्रायस्ते धनिन' इति शिवोपासनाफलत्वेनोक्ता धनरूपा प्राकृता । 'निर्गुणो भवेदि'ति हर्युपासनाफलत्वेनाभिहिता मोक्षसंपत्तिः अप्राकृता इति । तत्राद्या स्वयं प्राकृतत्वेन प्रकृतिबद्धशिवोपासनया प्राप्येत्याह **संपत्तेरिति** । तद्बद्धेति प्रकृतिबद्धेत्यर्थः । **सा** धनसंपत्तिः प्राप्येति शेषः । **तद्धीना** प्राकृतत्वहीना मोक्षसंपत्तिः । तुशब्दो वैलक्षण्यपरः । **न सा** बद्धोपासनेन प्राप्या न भवति । 'अनुत्तीर्णः स्वयं पङ्कादि'ति न्यायात् । किं तु नित्यमुक्तहर्युपासनेनैवेति शेषः । **या वाक्** शिवांशस्यैव शुकस्य परिहारोक्तिः । **मन्मतं** हरिरेव नित्यमुक्तत्वेन निर्गुणः न तु तदतिरिक्तं निर्धर्मकं किमपि ब्रह्मेति सिद्धान्तम् ।। ८७८ ।।

**उपक्रमानुगुण्यार्थमथोऽत्रावश्यको ह्ययम् ।**
**न चेत्प्रक्रमरोधेन वाक्यं स्यान्मत्तभाषितम् ।। ८७९ ।।**

**उपक्रमेति** । हरिशिवयोस्तदुपासनाफलयोश्च वैलक्षण्ये मुखतः प्रतीयमानविरोधनिमित्तविषयकराज्ञःप्रश्नेत्यर्थः । **आनुगुण्यार्थं** परिहारस्य तत्साङ्गत्यर्थम् । **अत्र** परिहारवाक्ये । **अयं अर्थः** हरेर्मुक्तत्वं अत एव मोक्षदातृत्वम् । शिवस्य बद्धत्वं तत एव प्राकृतैश्वर्यमात्रदातृत्वं चेत्येवं पूर्वोक्तिः । **आवश्यकः** तात्पर्यविषयतया स्वीकार्यः । **प्रक्रमः** उपक्रमः । इदमुपलक्षणम् । अत्रैवोपसंहारे हरिणा वृकासुरभयाच्छिवस्य विमोचन-कथोक्तेश्चेति बोध्यम् । अभ्यासादिकमपि स्पष्टम् ॥ ८७९ ॥

**किं चाप्राकृतपुंसोऽस्य चिन्मात्राकारता ध्रुवा ।**
**स च सार्वज्ञादिधर्मा सर्वधर्मच्युतिः कदा ॥ ८८० ॥**

सर्वं वस्तु साकारमिति व्यवस्थापितं प्राक् । आकारो द्विविधः प्राकृतश्चिन्मयश्चेति । तत्र हरेः प्रकृतेः परत्वोक्त्या प्राकृताकारप्रतिषेधे परिशेषेण चिन्मात्राकारता सिद्धेत्याह **ध्रुवेति** । **सः** चिन्मात्राकारः । **सार्वज्ञादिधर्मा** । 'धर्मादनिजि'ति सूत्रादनिच्प्रत्ययान्तो बहुव्रीहिः । चितो नित्यत्वेन तत्स्वरूपभूतधर्माणामपि नित्यत्वमेवेति तन्निवृत्तिरसंभाविनीत्याह **कदेति** न कदाऽपि इति भावः ॥ ८८० ॥

**स सर्वदृगिति प्रोक्तो वाक्येऽस्मिन्नेव सद्गुणः ।**
**एकस्साक्षी देव इति श्रुतिवाक्येऽपि सद्गुणः ।**
**अतस्त्वदर्थकथने स्वविरुद्धैव वाग्भवेत् ॥ ८८१ ॥**

अन्यथा समाख्यायां भागवतवाक्ये, एको देवः इति श्रुतौ चोभयत्रान्तरङ्गविरोधमाह **सर्वदृगिति एकः साक्षी देव इति च** ॥ ८८१ ॥

**निषेद्धुमनुवादश्चेत्सिद्धं मम समीहितम् ।**
**अनूद्यते निर्गुणत्वमेक इत्यादिकोक्तितः ।**
**निषेद्धुमिति यच्छक्यं वक्तुं तद्वन्मयाऽपि हि ॥ ८८२ ॥**

ननु न विरोधः निर्गुण इति निषेधाय गुणानामनुवादादित्याशङ्क्य प्रतिबन्धोत्तरमाह **निषेद्धुमिति । समीहितम् ।** निर्धर्मकत्वनिषेधेन सगुणत्वस्य स्थापनम् । तत्कथमित्यत आह **अनूद्यत इति । निषेद्धुमिति** एकत्वादिगुणोक्त्या । **तद्वत्** स्वच्छन्दं एकमनुवादकं अपरं निषेधकमिति त्वद्रीत्यैव ॥ ८८२ ॥

**अभावस्य निषेधात्मा भावोऽपि हि विदां मते ।**
**बहुत्वान्मन्निषेधानां प्रबलत्वं च विद्यते ॥ ८८३ ॥**

एकत्वादीनां भावरूपत्वात्कथं तैर्निषेध इत्याशङ्कां निराह **अभावस्येति ।** अस्तु तर्हि पक्षद्वयसाम्यादनिर्णय इत्यत आह **बहुत्वादिति । निषेधानां** निर्गुणत्वनिषेधरूपाणामेकत्वादिविशेषणानाम् ॥ ८८३ ॥

**समुच्चिनोति किं श्रौतश्चशब्दोऽन्यनिषेधने ।**
**यद्येकतापक्षपाती मध्यस्थातिक्रमस्तदा ॥ ८८४ ॥**

चशब्दानुपपत्तिश्च परपक्षे समुच्चयस्याभावादित्याह **समुच्चिनोतीति । अन्येति** एकत्वादिकैवल्यान्तसकलेत्यर्थः । एकत्वमपि गुणत्वान्निषेध्यमेव न तु समुच्चयार्हमित्याशयः । मध्यस्थान्देवत्वादीनतिक्रम्य दूरस्थैकत्वमात्रे पक्षपातात्तत्परिगृह्य तन्मात्रसमुच्चये दोषमाह **यदीति ॥ अतिक्रमः** शाब्दमर्यादोल्लंघनापत्तिर्दोषः ॥ ८८४ ॥

**संख्यारूपो गुणस्सा हि धर्ममात्रगुणाः परे ।**
**प्रबलेन कृतस्नेहो दुर्बलान्न स गच्छति ।**
**स्थानभ्रंशं स्वार्थनाशं सहते न हि सोऽव्ययः ॥ ८८५ ॥**

तार्किकरीतिमाश्रित्य दोषान्तरमाह **संख्येति** । एकशब्दः एकत्वसंख्यारूपं गुणं विधत्ते । तदुक्तं वादावल्यां एकमेवाद्वितीयमितिश्रुतिव्याख्यानावसरे 'तस्यैकत्वसंख्याविधानपरत्वादि'ति । संख्या च तार्किकैः चतुर्विंशतिधा गुणान्विभजद्भिः गुणत्वेन परिगणितेति प्रसिद्धमित्याह **हीति** । **परे** देवत्वादयः । **धर्ममात्रगुणाः** उत्कर्षप्रयोजकधर्मत्वेन गुणशब्दवाच्याः । मात्रशब्देन तार्किकपरिभाषितगुणत्वं व्यवच्छिनत्ति । **प्रबलेन** एकत्वेन **कृतस्नेहः** तं समुच्चिन्वन् **दुर्बलात्** गुणत्वेन तार्किकापरिगणितात् देवत्वादिधर्मसमुदायात् । ल्यब्लोपनिमित्तापञ्चमी । तमसमुच्चित्य । **न गच्छति** तानपि धर्मान्समुच्चिनुयादेवेति भावः । तथा च निर्गुणपदस्य स्वघटितवाक्यघटकेतरपदबोध्यधर्मनिषेधे न तात्पर्यमित्येव हृदयम् । न तु देवत्वादिगुणानां दौर्बल्यादावित्यवधेयम् ॥ किंचैवं दूरस्थेन एकशब्देन चशब्दान्वये तस्याव्ययस्य स्थानभ्रंशः देवत्वादिधर्मनिषेधे समुच्चयरूपस्वार्थभ्रंशश्च स्याताम् । 'यन्न व्येति तदव्ययम्' इति लक्षणोपेतश्चशब्द एतदुभयं न सहते इत्याह **स्थानेति** ॥ ८८५ ॥

**एकत्वरूपमैक्यं च निषेध्यं स्यात्कथं तव ।**
**एकपात्रस्थपक्वान्ने पाकश्चैकविधो भुवि ।**
**अतस्तत्तद्गुणौघेषु त्यागोऽत्यागश्च नेष्यते ॥ ८८६ ॥**

एकत्वं नात्र संख्या किं त्वद्वैतं इत्यत आह **एकत्वेति** । अस्तु तावत् । एकत्वं निर्गुणशब्देन निषिध्यते न वा । द्वितीयेऽपि सर्वेपि न

निषिध्यन्ते उत एकत्वमात्रम् । आद्ये अपसिद्धान्त इत्याह **तवेति** । अद्वैतवादिनः । द्वितीये सगुणत्वप्रास्या निर्गुणत्वव्याघातः । तृतीये अर्धजरतीयापत्तिरित्याह **एकेति** । उपसंहरति **अत इति** । **त्यागः** देवत्वादीनां **अत्यागः** एकत्वस्य । **इष्यते** प्रामाणिकैरिति शेषः ॥ ८८६ ॥

**आदिरन्त्येन सहितस्तन्मध्यपतितान्गुणान् ।**
**संगृह्णात्यन्ततो नान्त्यः प्रत्याहारमनुस्मर ॥ ८८७ ॥**

किं चैकत्वादयः निरवकाशा बहवश्च निर्गुणत्वं तु सावकाशं एकं च । अतो दुर्बलत्वान्निर्गुणत्वस्यैव बाध इति व्याकरणमुद्रयाऽऽह **आदिरिति** ॥ 'आदिरन्त्येन सहेता' इति सूत्रस्यार्थतः संग्रहः । इत्स्थानीयस्य निर्गुणत्वस्यैव लोप इत्याह **नान्त्य इति** ॥ ८८७ ॥

**दूरस्थमर्त्यपानीयपानार्थं सेतुभेदने ।**
**तृषितानेकमध्यस्थतृप्तेः पश्चात्स तृप्यति ॥ ८८८ ॥**

**तव प्रियैक्यरक्षार्थं सङ्कोचे तु नञः कृते ।**
**मम प्रियगुणौघस्य रक्षा पूर्वं भविष्यति ॥ ८८९ ॥**

किं चैकत्वादिगुणप्रवाहप्रतिबंधकः सेतुरिवासौ निर्गुणशब्दः । तस्य च दूरस्थैकत्वरिरक्षा वर्तते । अस्यास्तृषाया निवृत्त्या तत्तृप्तिस्तदा स्याद्यदा जलनिर्गमनार्थः सेतुभेदः कृतो भवेत् । कृते च तस्मिन् निःसृतो जलप्रवाहो दूरस्थैकत्वप्राप्तेः पूर्वमेव मध्ये विद्यमानकेवलत्वसाक्षित्वादिगुणांस्तर्पयेदेव । पश्चादेवैकत्वस्य तृप्त्याशेत्याह **दूरस्थेति द्वाभ्याम्** ॥ ८८८ ॥ ॥ ८८९ ॥

**इयं राजवधूः कामचारा वाराङ्गना न ते ।**
**स्वेच्छानुसारसञ्चारो मानच्छेदाय ते भवेत् ॥ ८९० ॥**

एकवाक्यं भंक्त्वा, तदेकदेशस्यानुवादकत्वेनातत्वावेदकत्वोक्तिः श्रुतेरशक्येत्याह **इयमिति** । या यस्मिन्नादरवती सा न तद्गुणापलापिनी राजवधूवत् व्यतिरेकेण वाराङ्गनावत् इति सामान्यव्याप्तिः । सर्वाऽपि श्रुतिः, प्रमाणमेव, नियतैकप्रकारत्वात् । व्यतिरेकेण विप्रलम्भकमायिवाक्यवदिति प्रयोगोऽभिप्रेतः । मायिव्याख्या तु मुखतो ब्रह्मणो विषयत्वं ब्रुवन्ती, पुनस्तस्य नैर्गुण्यमाघोष्य छद्मना शून्यमेव तत्वं साधयन्ती वाराङ्गनामनुकरोति इत्याह **त इति** । त्वद्भाष्यकारव्याख्येवेत्यर्थः ॥ ८९० ॥

**व्यासश्श्रौतगुणाम्भोधौ नैकत्यागं च मन्यते ।**
**सर्वधर्मोपपत्तेश्चेत्याह यत्स्वयमञ्जसा ॥ ८९१ ॥**

चस्त्वर्थो व्यास इत्यनेन संबध्यते । यद्वाऽप्यर्थः । यथाश्रुतैव योजना । किमुताखण्डार्थत्वाश्रयणेन सर्वत्यागमिति कैमुत्यं द्योत्यते । कुत एवमित्यत आह **सर्वेति** । **अञ्जसा** स्वातन्त्र्ययुक्त्या सर्वदोषदूरत्वं सकलगुणपूर्तिं च प्रसाध्य ॥ ८९१ ॥

**वेद वेदार्थमखिलं वेदव्यासस्सतां पतिः ।**
**स हि श्रुतिसतीकण्ठसूत्रसूत्रकृदीश्वरः ॥ ८९२ ॥**

**वेदव्यासः** एवेत्यध्याहारः 'नान्यो मद्वेद कश्चने'ति भागवतात् ॥ हीति 'पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणी'ति प्रसिद्धिमाह ॥ ८९२ ॥

**नञो विभज्य योगे तु श्रौतं तत्तन्निषेधनम् ।**
**समस्तनञ्विभागस्यायोगादार्थं निषेधनम् ॥ ८९३ ॥**

**नञः** निषेधार्थकनिरित्युपसर्गस्य । **विभज्य** समस्तनिर्गुणपदात्पृथक्कृत्य । **योगे** एक इत्यादिपदैर्योगे । **श्रौतं** शब्दवाच्यम् । **तन्निषेधनं** एकत्वादिगुणानां निषेधनं स्यादिति शेषः । न च तथा संभवतीत्याह **समस्तेति** । **अयोगात्** निरित्यस्यासामर्थ्यापत्त्या गुणपदेन समासायोगात् । **आर्थं** सामान्यनिषेधस्य यावद्विशेषनिषेधाविनाभावानुसन्धानेनात एव विलम्बेनोपस्थितम् ॥ ८९३ ॥

**अतस्तवार्थिकादस्मान्निषेधान्मे विधिश्श्रुतः ।**
**बलीयांस्तन्निषेधाय दुर्बलोऽसौ न शक्नुते ॥ ८९४ ॥**

**अतः** न्यायामृते प्रत्यक्षप्राबल्यव्युत्पादनावसरे निरूपितदिशा, असञ्जातविरोधित्वात्, शीघ्रगामित्वात्, विशेषविषयकत्वात्, निरवकाशत्वात्, उपजीव्यत्वात् बहुत्वाच्च । **बलीयान्** अतिप्रबलः । **दुर्बलः** पूर्वोक्तप्रकारशून्यः । **असौ** निर्गुणशब्दः ॥ ८९४ ॥

**एक इत्यादिशब्दानां नञ्योगादर्शनाच्छ्रुतौ ।**
**संभावितक्रियायोगाद्भवतीत्येव योजना ॥ ८९५ ॥**
**नचेद्वाक्यमपूर्णं स्यात्समस्तपदसंस्थितः ।**
**निषेधार्थो यतश्शब्दो बुधैश्छेत्तुं न शक्यते ॥ ८९६ ॥**

नञ्योगादर्शनात् इत्यत्र हेतुः समस्तपदसंस्थित इत्यादिः । **संभावितेति** । अस्तिभवत्योः सार्वत्रिकत्वात् । **योगात्** अध्याहारात् । तत्र बीजोक्तिः **न चेदिति** ॥ ८९५ ॥ ८९६ ॥

**पुनस्तेषामेव बाधे वाक्यं स्यान्मत्तभषितम् ।**
**अतस्त्रिगुणशून्यत्वान्निर्गुणत्वं बलाद्भवेत् ॥ ८९७ ॥**

**बलात्** परिशेषात् ॥ ८९७ ॥

**अनुवादकलिङ्गं च यत्तदित्यादिकं न हि ।**
**भिन्नवाक्यतया यत्र निषेधस्तत्र तद्ध्रुवम् ।**
**एकवाक्ये निषेधे तु नञ्लिङ्गमितरत्र तत् ॥ ८९८ ॥**

'यत्तदित्यादिवचनं परिहारे विशेषयुक्तिं च विनाऽनुवादायोगादि'ति वादावल्युक्तं हृदिकृत्वाऽऽह **अनुवादकेति** । आदिकमित्यनेन परिहारे विशेषयुक्तिर्ग्राह्या । तुर्यत्तदित्यादिवचनं व्यवच्छिनत्ति । **नञ्लिङ्गमिति** विशेषयुक्तिमित्यस्यार्थः । निषेधसमभिव्याहाररूपविशेषयुक्तिमित्यर्थः । **लिङ्गं** ज्ञापकम् । **इतरत्र** भिन्नवाक्यनिषेधे **तत्** उक्तमुभयम् । **यत्तदिति** वचनं अनूदितार्थप्रतिषेधसमर्थबलवत्प्रमाणं चेति ॥ ८९८ ॥

**मानसिद्धानुवादे तु तेनैव स्युर्गुणा हरेः ।**
**निषेधश्च न ते मानामानतादूषणं शृणु ॥ ८९९ ॥**

अनुवादाय प्राप्तिस्तावदावश्यकी । एकत्वादिगुणानां प्राप्तिः प्रमाणतः अन्यथा वा । आद्ये सिद्धं नः समीहितमित्याह **तेनैवेति** । प्रापक-प्रमाणेनैवेत्यर्थः । तत्प्रमाणविरोधादेव गुणनिषेधो न संभवतीत्याह **निषेधश्चेति** । एकत्वादिपरप्रमाणानां प्रामाण्यं नोपेयते इति द्वितीयपक्षे दोषं प्रतिजानीते **शृण्विति** ॥ ८९९ ॥

**निर्गुणत्वे स्थिरे तेन मानानां स्यादमानता ।**
**तत्सत्त्वे चाविरुद्धं ते निर्गुणत्वं स्थिरं भवेत् ॥ ९०० ॥**

अन्योन्याश्रयमाह **निर्गुणत्व इति** ॥ ९०० ॥

**निर्गुणोक्तौ गुणोक्त्यैव निषेध्यस्यानुवादनात् ।**
**एकत्वाद्यनुवादत्वकथा चेयं वृथा तव ॥ ९०१ ॥**

**निर्गुणोक्तौ** एकवाक्यनिषेधपक्षाश्रयणेन यत्तदित्यादिलिङ्गाभावेऽपि अनुवादोपपत्तिरित्यभिप्राये इत्याशयः । दूषयति **गुणोक्त्यैवेति** । **निर्गुण-**

पदे वाक्यतुल्ये घटकं यद्गुणपदं तेनैवेत्यर्थः । **निषेध्यस्य** गुणस्य । **एकत्वादीति** अनुवादनार्थमन्यवाक्यानपेक्षणादिति पूरणीयम् ॥ १०१ ॥

**वेदैकप्राप्तसार्वज्ञपूर्वसर्वगुणा हरेः ।**
**अमानत्वार्हवेदान्यमानप्राप्तो न कश्चन ॥ १०२ ॥**

गुणप्राप्तिर्न प्रत्यक्षानुमानपौरुषेयागमैरित्याह **वेदैकप्राप्तेति** । तत्कुत इत्यत आह **अमानत्वेति** । अमानत्वार्हाणि अप्रामाण्यशङ्काकलङ्कितानि च तानि वेदान्यमानानि च तैः प्राप्तः । **न कश्चन** एकोऽपि गुणः । किमु अनन्ताः । तथा हि न तावत्प्रत्यक्षेण प्राप्तिः । अतीन्द्रियत्वेन तदगोचरत्वात् । तदुक्तं **अमानत्वार्हेति** तद्विषयीकारित्वयोग्यताशून्येत्यर्थः । नाप्यनुमानं तत्प्रतिबद्धलिङ्गाभावात् कामचारित्वाच्च । नापि पौरुषेयवाक्येन । अज्ञानविप्रलम्भादिप्राप्तेः । अत्र विस्तरः 'अन्यत्रादृष्टस्य सर्वज्ञत्वस्य' इत्यादि तत्वनिर्णयतट्टीकयोः ॥ १०२ ॥

**वाक्यार्थे तेऽप्यसन्देहात्समयप्राप्तताऽपि न ।**
**कथमित्थमपूर्वार्था गुणोक्तिरनुवादिका ॥ १०३ ॥**

नापि कुसमयेन प्राप्तिः । यत्र श्रुत्या प्राप्तिर्विप्रतिपन्ना 'असदेवेदमग्र आसीदि'त्यत्र शून्यकारणत्वस्य 'तत्वमसी'त्यादावैक्यस्य, तत्र प्राप्त्यर्थं कुसमयानुसरणेऽपि यत्रानूद्यार्थस्य श्रुत्यर्थतया सम्प्रतिपत्तिर्न तत्र कुसमयपर्यन्तधावनम् । यथा प्रकृत इत्याह **वाक्यार्थ इति** । **तेऽपि** गुणानामनुवाद इति वक्तुरपि । **इत्थं** गुणानां श्रुत्यनुपजीविमानान्तरेणाप्राह्यत्वात् । ॥ १०३ ॥

**श्रुतिप्राप्तस्य च श्रुत्या निषेधे मानता हता ।**
**एतद्बाधे सावकाशे निर्गुणैक्यागमे तव ।**
**विश्वासस्स्यात्कथं नृणां गजे मग्ने क्व गर्दभः ॥ १०४ ॥**

**मानता** प्रापकश्रुतेः इत्यध्याहारः । **हता** स्यादिति शेषः । न चापौरुषेयस्याप्रामाण्यं युज्यते अतो निषेधो न वक्तव्य इति विपर्यये पर्यवसातव्यम् । अथ ब्रूयान्नेदमनिष्टम् । निर्गुणश्रुत्या बाधाभ्युपगमादिति तत्रेदमुपतिष्ठते **एतद्बाध इति** । सगुणश्रुतेर्बाधे तथा च तत्रानाश्वासे सति **तव** त्वया निर्गुणपरत्वेनाङ्गीकृतस्यागमस्यापि ऐक्यागमस्यापि अप्रामाण्यं स्यादविशेषादिति । अविशेषादिति मुखतः । वस्तुतस्तु सगुणश्रुतेर्निरवकाशत्वेन तयैव सावकाशनिर्गुणैक्यागमस्य बाधः तथा च तत्रानाश्वास एवेत्याह **सावकाश इति** । तत्र दृष्टान्तो **गज इति** ॥ ९०४ ॥

**हिमस्य भेषजं ह्यग्निरिति श्रुत्याऽप्यनूदिते ।**
**किमेकामानता वह्नेश्शीतता वा भवेद्वद ॥ ९०५ ॥**

**अतोऽनुवादमात्रेण नार्थस्य स्याद्धि दूषणम् ।**
**बहुप्रमाणसंवादाद्दाढर्यमेव भविष्यति ॥ ९०६ ॥**

'बहुप्रमाणसंवादश्च दार्ढ्यहेतुरेवे'ति तत्त्वनिर्णयोक्तमाह **हिमस्येति** । शैत्यबाधनिवारक उष्ण इति यावत् । **एकामानतेति** । समानविषयकत्वेनाधिगतार्थगन्तृत्वापत्त्याऽन्यतरस्याप्रामाण्यमित्यर्थः । यद्वा एकस्या अनुवादिन्याः श्रुतेरप्रामाण्यमित्यर्थः । इष्टापत्तिं अनुभवविरोधप्रदर्शनेन परिहरति **वह्नेरिति ॥ अतः** अधिगतार्थगन्तृत्वस्य प्रमाणलक्षणत्वासंभवात् ॥ ९०५ ॥ ॥ ९०६ ॥

**निषेद्धुमनुवादश्च मानसिद्धस्य नेष्यते ।**
**निषेध एवान्यगामी स्यादहिंसाश्रुतौ यथा ॥ ९०७ ॥**

अनुवादोऽधिकविधानार्थः क्वचिद्दृष्टः यथा 'दध्ना जुहोती'त्यादौ । न चासौ पक्षः परस्यात्र संमतः । अतो निषेधार्थ एव वक्तव्यः । गुणाश्च

श्रुत्यैव सिद्धा इति समर्थितम् । श्रुतिः सर्वाऽपि प्रमाणमिति च । प्रमाण-सिद्धस्य निषेध इत्येव व्याहतमित्याह **निषेद्धुमिति** । तर्हि निषेधस्य का गतिस्तत्राह **अन्यगामीति** । प्रमितेतरविषयकः इत्यर्थः । तत्र दृष्टान्तः **अहिंसेति** ॥ ९०७ ॥

**दृढप्रत्यक्षसिद्धौष्ण्यं याऽनुवक्ति श्रुतिस्सती ।**
**न मुञ्चति निषेद्धुं सा यथा यागवियोगभीः ॥ ९०८ ॥**

न केवलं प्रत्यक्षसिद्धं श्रुतिरत्र न निषेधतीति किं तु तन्निषेधस्यासंभव एवेत्याह **दृढेति** । तदुक्तं भगवत्पादैः 'न च प्रत्यक्षसिद्धमन्येन केनापि बाध्यं दृष्टमि'ति । कथञ्चिन्निषेधे यागविधीनामानर्थक्यापत्तिरित्याह **यागेति** । स्वभावहानौ अग्निस्वरूपस्यैव हानेरिति भावः ॥ ९०८ ॥

**एवं हरेर्हि सार्वज्ञं सा श्रौतं न निषेधति ।**
**दिव्येन्द्रियशरीरत्वं दिव्येच्छां च कृपालुताम् ।**
**नित्यत्वं ब्रह्मगुरुतां नित्यानन्दत्वमेव च ॥ ९०९ ॥**
**वंशस्य यद्दशाधं तत्स्वात्मनोऽपि भवेदिति ।**
**श्रौतस्यास्य त्यागसाम्यात्स्वार्थत्यागप्रसक्तितः ॥ ९१० ॥**

गुणनिषेधेऽप्यनिष्टमतिदिशति **एवमिति** । नित्यानन्दत्वमेव चेत्य-नन्तरं न निषेधतीत्यनुषञ्जनीयम् । सार्वज्ञस्य त्यागे कुत इतरेषां त्याग इत्यत आह **श्रौतस्येति** । श्रौतत्वाविशेषादिति भावः । तत्र लौकिकन्याय-माह **वंशस्येति** ॥ ९०९ ॥ ९१० ॥

**उपदेष्टुरभावेन स्वाप्रचाराच्च शङ्किता ।**
**जगत्कर्तुरभावेन चाध्येतॄणामभावभीः ॥ ९११ ॥**

**सर्वशक्तेरभावे च दैत्योपद्रवशङ्किता ।**
**सर्वेश्वरत्वाभावे च ब्रह्मासाध्याकृतेर्भयात् ॥ ९१२ ॥**
**इत्थं श्रौतगुणेभ्यो यच्छ्रुत्या एव प्रयोजनम् ।**
**अत(स्ते) एषामभावं सा स्वाभावं मनुते सती ॥९१३॥**

तत्र यागविधिमात्रानर्थक्यम् । अत्र तु स्वाभाव एवेति बहुतरमेवानिष्टमित्याह त्रिभिः **उपदेष्टुरित्यादिना । ब्रह्मेति ब्रह्मणा** चतुर्मुखेन **असाध्यस्य** वेदार्थनिर्णायकसूत्रप्रणयनादेः **अकृतेः** अकरणनिमित्तात् आत्मनोऽपरविद्यात्वप्राप्तेः **भयात्** शङ्कितेति समासाद्विविच्यानुषञ्जनीयम् । ॥ ९११ ॥ ९१२ ॥ ९१३ ॥

**प्राक्सृष्टेश्च सतस्तस्य सेहे नाज्ञानकार्यताम् ।**
**बाधां न सेहे नित्यां स्वां नित्यं धर्तुं यदीप्सितम् ॥ ९१४ ॥**

न च व्यावहारिकगुणाङ्गीकारादुक्तदोषनिस्तार इत्याह **प्रागिति** । ब्रह्माज्ञानकार्यं व्यावहारिकमिति परो मनुते । सार्वज्ञादिकं च ब्रह्मस्वरूपत्वात्प्रलयेऽपि सत् । न चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतीर्विना ब्रह्मणः स्रष्टृत्वं संभवति । सृष्टेः प्राग्विद्यमानस्य कार्यत्वमेव न । न तरामज्ञानकार्यत्वम् । न तमां ब्रह्माज्ञानकार्यत्वम् । सर्वज्ञस्याऽज्ञताऽयोगादित्याह **न सेहे इति** । श्रुतेरसंमतत्वात्तवैवाज्ञानकार्या गुणानां व्यावहारिकत्वकुकल्पनेति भावः ॥ प्रागभावस्यैवाभावे त्रैकालिकनिषेधलक्षणबाधस्तु सुदूरनिहित इत्याह **बाधामिति** । विष्णुबुद्धिगानां वेदानामबाधः विष्णुबुद्धिरूपगुणाभावे कथं निर्वहेदिति भावः ॥ ९१४ ॥

**अमुख्यनित्यतायां च ब्रह्म ते स्यात्तथैव हि ।**
**विष्ठितं ब्रह्म यावत्ते तावद्वाकिल विष्ठिता ॥ ९१५॥**

श्रुतेर्नित्यत्वं यावद्ब्रह्मकल्पं स्थितिमात्रमौपचारिकमिति नोक्तदोष इति शङ्कते **अमुख्यमिति** । दूषयति **ब्रह्मेति** । तत्र युक्तिमाह **यावदिति** । 'यावद्ब्रह्म विष्ठितं तावती वागि'ति श्रुतेरर्थकथनम् । 'सहस्रधा महिमानः सहस्रं' इति पूर्वभागः । श्रुत्यर्थस्तत्त्वनिर्णयटीकायामेवमुक्तः । 'यस्य सहस्रमपरिमिता महिमानः प्रत्येकमपि सहस्रधा अपरिमितविधाः तद्ब्रह्म यावद्देशकालव्यापितया विष्ठितं विशेषे स्थितं वाक् वेदवागपि तावती तावद्देशकालव्यापिनी' इति ॥ ९१५ ॥

**उपसर्गस्तयोस्सर्गो नोत्सर्गश्चेति शंसति ।**
**तस्माच्छ्रुतेर्हि विच्छेदे बधिरं ब्रह्म ते भवेत् ॥ ९१६ ॥**

वीत्युपसर्गः ब्रह्मवेदयोरुत्पत्तिनाशौ निषिध्योभयेषां निरुपचरितनित्यत्वमेव व्यवस्थापयतीत्याह **उपसर्ग इति** । **श्रुतेः** ब्रह्मण्येकैकप्रमाणस्य **विच्छेदे** प्रलये नाशे । **बधिरं** प्रतिपादकप्रमाणाभावादङ्गोपाङ्गविकलम् । श्रुतेः करणे व्युत्पत्त्या श्रवणेन्द्रियस्येति ध्वनिः ॥ ९१६ ॥

**बधिरं च न तज्जीवेत्सलज्जमिति मे मतिः ॥ ९१७ ॥**

**बधिरं** उक्तदिशा निरवयवम् । न जीवेत् । वन्ध्यासुतवत्सत्तामेव न लभेत ॥ ९१७ ॥

**अतः कर्तृत्वभोक्तृत्वफलदातृत्वपूर्वकात् ।**
**श्रुत्युक्तसर्वसर्वस्वादन्यत्किञ्चिन्निषेधति ॥ ९१८ ॥**

श्रुत्युक्तात् समन्वयाध्याये व्युत्पादितात् **सर्वसर्वस्वात्** निरवधिकानन्तानवद्यकल्याणगुणपूगात् **अन्यत् किञ्चित्** व्यतिरिक्तं क्षुद्रं प्राकृतगुणवत्त्वम् ॥ ९१८ ॥

**स्वयं संकुचितान्नोऽपि मानी ज्ञातिसुखं दिशेत् ।**
**अनेकश्रुतिरक्षार्थं पदमल्पनिषेधि तत् ॥ ९१९ ॥**

'प्रत्यक्षादिविरोधे तु गौणार्थस्यापि संभवात्' इत्यनुव्याख्यानोक्तं लौकिकदृष्टान्तोक्त्या भूषयति **स्वयमिति** ॥ ९१९ ॥

**निषेधबलवत्त्वे तु भेदवाग्बाधिका तव ।**
**तादात्म्यप्रतिषेधत्वं भेदस्याखिलसम्मतम् ॥ ९२० ॥**

निषेधकत्वादेव निर्गुणश्रुतेर्बाधकत्वं, विधित्वादेव सगुणश्रुतीनां बाध्यत्वमित्येतन्निराह **निषेधेति** । तव ऐक्यवाक्यस्येति शेषः ॥ ९२० ॥

**अन्धानां नास्तितावाक्यैर्बाध्यं स्यादस्तितावचः ।**
**शून्योक्तिर्ब्रह्मसत्त्वोक्तिबाधिकेत्यतिसङ्कटम् ॥ ९२१ ॥**

**शून्योक्तिः** 'असदेवेदमग्र' इति श्रुतिः । 'शून्यं तत्वमविज्ञेयमि ति शून्यवाद्युक्तिर्वा ॥ ९२१ ॥

**विरुद्धार्थमतो बाध्यमविरुद्धं न बाध्यते ।**
**अहेः पुच्छं हि कश्छिन्द्यान्मुखं छिन्दन्ति सर्वशः ॥ ९२२ ॥**

**अतः** तन्न्यायस्यातिप्रसङ्गदुष्टत्वात् । **विरुद्धार्थं** प्रबलप्रमाणविरुद्धार्थम् । **पुच्छं** विषाख्यविरुद्धार्थरहितम् । **मुखं** तादृशविषयुक्तम् । अत्र बाधो नाशः । दार्ष्टान्तिकेऽत्यन्ताभावः । अभावमात्रेण साम्यम् ॥ ९२२ ॥

**सर्वधर्मैष सर्वज्ञस्सर्वस्येशान इत्यपि ।**
**श्रुतयस्स्मृतयोऽगायन्गुणानित्यादयो न किम् ॥ ९२३ ॥**

सगुणवाक्यानां सुबहुत्वं सुप्रसिद्धतां चाह ॥ ९२३ ॥

**मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ॥ ९२४ ॥**
**जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः ।**
**न शक्यन्तेनुसङ्ख्यातुमनन्तत्वाऽन्मयाऽपि हि ॥ ९२५ ॥**

स्वगुणानन्त्यप्रतिपादकभगवद्वाक्यान्येव पठति **मय्यनन्ते** इति । ॥ ९२४ ॥ ९२५ ॥

**इत्यादिभगवद्वाक्यं श्लोक्यं स हि भुजङ्गजित् ॥ ९२६ ॥**

**भुजङ्गजित्** पदप्रहारैः कालियस्य यमुनायाः अपसारकः । एवं आनन्त्यबोधकपदप्रहारैः श्रुतिनद्या नैर्गुण्यविषपरिहारकः ॥ ९२६ ॥

**किञ्चानिर्गुणइत्येव पदच्छेदे लसत्पदम् ।**
**वाक्यं स्यान्नाङ्गविच्छेदस्तस्येत्यतिसमञ्जसम् ॥ ९२७ ॥**

नवविधदृष्टान्तानुगुण्याय अतदिति पदच्छेदवत् अनन्तसगुणवाक्यानुगुण्यायानिर्गुण इत्येव पदच्छेदोऽतिसमञ्जस इत्याह **किं चेति** ॥ ९२७ ॥

**समयप्राप्तनैर्गुण्यत्याजनं च फलं भवेत् ॥ ९२८ ॥**
**श्रुतिस्स्वोक्तगुणस्थेम्ने नैर्गुण्यं प्रतिषेधति ।**
**इति सङ्गतिरप्यस्ति वाक्यस्याप्येकवाक्यता ॥ ९२९ ॥**

एतत्पक्षे 'नाशब्दमि'त्यत्रैव परपक्षप्रतिक्षेपस्यापि लाभः फलमपीत्याह **समयेति** ॥ ९२८ ॥ ९२९ ॥

**किञ्च निर्गुणतावाक्ते गुणमात्रनिषेधने ।**
**ज्ञानानन्दाद्यभिमतगुणानां स्यान्निषेधिका ॥ ९३० ॥**

मायावादिना ब्रह्मभावरूपमोक्षस्य पुरुषार्थत्वसिद्धये, ब्रह्मणोखण्डज्ञानानन्दात्मकत्वं स्वीकृतम् । तथा च गुणमात्रनिषेधोक्तौ स्वाभिमतगुणानामपि निषेध आपद्यत इत्याह **किं चेति** ॥ ९३० ॥

**यद्यभिन्नं सुखं ज्ञानं गुणास्सर्वेऽप्यभेदिनः ।**
**सन्तु नेहेतिवाक्यस्य भयाद्भगवता हरेः ॥ ९३१ ॥**

ब्रह्मात्मकत्वात्तेषामनिषेधश्चेत्सार्वज्ञादीनामपि तथात्वमेवेत्याह **गुणाः सर्वेऽपीति** । नेहनानेति वाक्यं ब्रह्मणि तद्भिन्नान्गुणान्प्रतिषेधतीत्युक्तम् । सार्वज्ञादीनामपि ब्रह्मस्वरूपत्वेन तद्वाक्यविरोधोऽपि परिहृत इत्याह **संत्विति** । बिडालभयान्मूषकशावका बिलमिवेति ध्वनिः । अकुतोभयं भगवदुदरमिति भावः ॥ ९३१ ॥

**अनयैव गुणादीनामभेदोक्त्याऽस्त्वभिन्नता ।**
**गुणत्वोक्तिशतैश्चोक्तैर्गुणताऽप्यस्तु का (क्ष)हतिः ॥ ९३२ ॥**

गुण्यभेदः कुतः सिद्ध इत्यत आह **अनयैवेति** । नेहनानेति श्रुत्यैव । तर्हि स्वरूपत्वे गुणत्वं कथमित्यतः तथात्वप्रतिपादकश्रुतिशतैरेवेत्याह **गुणताऽपीति** ॥ ९३२॥

**निर्गुणोक्तिश्च भिन्नानां गुणानामस्तु बाधिका ॥ ९३३ ॥**

निर्गुणश्रुतिर्भिन्नानशुभान्गुणानेव निषेधत्वित्याह **निर्गुणोक्तिरिति** । ॥ ९३३ ॥

**भेदाभेदप्रमाणाभ्यां भेदाभेदौ यथा तव ।**
**घटादौ गुणकर्मादेस्तथात्र स्तां गुणैकते ।**
**नामुख्या तत्र गुणता यथाऽत्रापि तथैव न ॥ ९३४ ॥**

विरुद्धयोर्गुणत्वैकत्वयोः कथं समावेश इति चेद्द्रव्याणां गुणकर्मभिस्त्वदभ्युपगतो विरुद्धयोरपि भेदाभेदयोः कथं समावेशः । प्रामाणिकत्वेन समाधिरत्रापि सम इत्याह **भेदाभेदेति** ॥ ९३४ ॥

**नेहनानेतिभेदस्य साक्षादत्र निषेधनात् ।**
**गुणत्वघटकं चान्यत्कल्प्यमङ्कुरकर्तृवत् ॥ १३५ ॥**

तत्र भेदकार्यव्यवहारनिर्वाहको भेदोऽस्तीति चेदत्रापि कार्यबला-देवाङ्कुरस्याप्रसिद्धोऽपि कर्तेव भेदप्रतिनिधिस्तत्कार्यकारी कश्चन विशेषोऽङ्गीकार्य इत्याह **गुणत्वेति** ॥ १३५ ॥

**न ह्यबाधितकार्यस्य दृष्टहेतोरभावतः ।**
**अभावं म(न्व)न्यते लो(काः)कः किन्त्वन्यमनुम(न्व)न्यते १३६**

अस्माभिः निमित्तस्याज्ञातत्वमात्रेण न नैमित्तिकापलापो युक्त इत्याह **न हीति** । तदुक्तं वादावल्यां 'नैमित्तिकदर्शनादेव निमित्तकल्पनासौ-लभ्यादि'ति । वक्ष्यति च ग्रन्थकारः स्वयमेवाग्रे 'न चेदीशप्लुतं त्याज्यं नारिकेलफलं जलमि'ति ॥ १३६ ॥

**न शक्यन्तेऽनुसङ्ख्यातुमनन्तत्वान्मयाऽपि हि ।**
**इतीरयन्गुणादीनामानन्त्यं स्वगुणादिषु ।**
**गुणादित्वं च किं तत्वमुत्सिसृक्षति स प्रभुः ॥ १३७ ॥**
**पक्षीकृत्य गुणान्हेतूकृत्यानन्तत्वमञ्जसा ।**
**अनन्तजीवसंस्थात्मतनुवत्सङ्ख्ययोज्झितिम् ॥ १३८ ॥**
**प्रसाधयन्प्रभुः पक्षासिद्धिं हेतोरसिद्धताम् ।**
**यतो न सहते तस्मादनन्तत्वं गुणाश्च ते ॥ १३९ ॥**
**नोपचारादितस्सिद्धास्तत्सर्वं च स सर्वदा ।**
**आत्मशक्तिविशेषेण सर्वथा निर्वहेत्परम् ॥ १४० ॥**

'जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः' । इत्यादेर्मुचुकुन्दं प्रति श्रीकृष्णवचनस्य भागवतस्यार्थतः संग्रहः **नेत्यादि** । विमता गुणा न

सङ्ख्यावत्त्वेन भगवन्निरूपणार्हाः अनन्तत्वात् सङ्ख्यारहितत्वात् अनन्तजीवसंस्थभगवद्रूपवत् । यत् यद्रहितं न तत्तद्वत्त्वेन प्रेक्षावत्कर्तृकनिरूपणार्हं यथा शशो विषाणित्वेनेति प्रयोगोऽभिप्रेतः । तदनिरूपणे भगवतः सार्वज्ञहानिरिति त्वतीव मन्दम् । विद्यमानसर्वार्थविषयकज्ञानवत्त्वस्यैव सार्वज्ञत्वात् । जीवानां पापजातमप्यनन्तत्वादेव रमयाऽप्यगणेयमित्यभियुक्तोक्तिरप्यत एव सङ्गतेत्यवधेयम् । अत्र गुणानामभावे आश्रयासिद्धिरित्याह **पक्षासिद्धिरिति** । सिद्धान्ते तददोषत्वेऽपि प्रतिज्ञायाः प्रमाणविरोधोक्तौ तात्पर्यम् । अनन्तत्वानङ्गीकारे स्वरूपासिद्धिः । विपक्षे बाध्यशुक्तिकारजतद्रष्टृवदीश्वरस्य भ्रान्तत्वप्रसङ्गः । तथा च 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतिव्याकोपः । आगमिकत्वादेव गुणानन्त्यस्य नौपचारिकत्वशङ्काऽपीति न कश्चित्क्षुद्रोपद्रवः । ईश्वरशक्त्यैव च सर्वनिर्वाह इत्याह **नोपचारादित इति** ॥ ९३७ ॥ ९३८ ॥ ९३९ ॥ ९४० ॥

**यतस्सूत्रकृदप्याह विचित्रां शक्तिमात्मनि ।**
**धनी वक्ति धनानन्त्यमनुवक्त्यनुयाय्यपि ॥ ९४१ ॥**
**प्रतिवक्ति कथं यस्तौ न शृणोति न पश्यति ।**
**अतो विष्णोर्गुणानन्त्यमभूत्सर्वमनोरमम् ॥ ९४२ ॥**

तादृशशक्तौ सूत्रं प्रमाणयति **यत इति** । अनेन 'आत्मनि चैवं विचित्राश्च हि' 'सर्वोपेता च तद्दर्शनादि'ति सूत्रद्वयं संगृह्णाति ॥ एतेन भगवत एकत्वेन, गुणानामानन्त्येन, तेषां भगवताऽभेदे, भगवतोऽप्यानन्त्यं वा गुणानामेकत्वं वा स्यादिति अपास्तम् । विचित्रशक्त्यैव विरोधोपशमनात् । एतेनैव शक्तिर्नाम पदार्थ एव नास्तीति मन्यमानास्तार्किकाः अपि निरस्ताः । शक्तौ प्रमाणोदाहरणात् । **धर्मी** अनन्तकल्याणगुणैश्वर्यवान् कृष्णः । **अनुयायी** ब्रह्मा । **अनुवक्ति** 'नतोऽस्म्यनन्ताय दुरन्तशक्तये'इति ।

एवं रुद्रः 'अनन्तायाव्यक्ताय नमः' इति एवमन्येऽपि । एते नित्यं श्रवणरताः अपरोक्षिणश्च । मायावादी तूभयहीनः । ब्रह्मणः अवाच्यत्वम-दृश्यत्वं ब्रुवाणः । कथं प्रतिवक्ति ॥ ९४१ ॥ ९४२ ॥

**मिथ्योपाधिकसार्वज्ञमिथ्यात्वान्नैकतेति चेत् ।**
**सत्यविश्वस्य सामर्थ्यादिति तस्योत्तरं वदेत् ॥ ९४३ ॥**

ननु सर्वस्य मिथ्यात्वात्तदुपाधिकसार्वज्ञस्यापि मिथ्यात्वात् न तदभेदो ब्रह्मण इति शङ्कते **मिथ्येति** । परिहरति **सत्येति** । 'विश्वं सत्यमि'ति श्रुत्या सत्यत्वस्यैव प्रमितत्वेन न सर्वस्य मिथ्यात्वम् । तदुपाधिकसार्वज्ञ-मिथ्यात्वं तु कफोणिगुडायितमिति न तदभेदानुपपत्तिरिति भावः ॥ ९४३ ॥

**सत्यत्वे यदि सन्देहो मिथ्यात्वे कस्य निश्चयः ।**
**कलहेन विरुद्धेऽस्मिंस्तत्सत्यत्वे न बाधकम् ॥ ९४४ ॥**

सर्वस्य सत्यत्वं बाधितमिति चेद्बाधकं वक्तव्यम् । वादिसन्देहमात्रं त्वकिञ्चित्करम् । तथा सति परस्परप्रतिरोधेन कस्याप्यर्थस्यानवस्थानात् । श्रुतिप्रमिते बाधाप्रसरादित्याह **तत्सत्यत्व इति** ॥ ९४४ ॥

**घटोपाधिकवृत्तेश्च मनोरूपत्वमिष्यते ।**
**घटस्तु न मनोरूपो बाह्योऽसावान्तरं मनः ॥ ९४५ ॥**
**अतस्सार्वज्ञैकतायां सर्वस्यैक्यं च नोच्यते ।**
**मिथ्यारजतदृष्टेश्च साक्षिणस्सत्यता तव ॥ ९४६ ॥**

सार्वज्ञस्य ब्रह्मणाऽभेदे तदुपाधिभूतसर्वस्यापि अभेदः स्यादिति चेन्न । औपाधिकस्य यद्रूपं उपाधेरपि तदिति नियमाभावादित्याह **घटेति** । **मनो-रूपत्वमिति** । अन्तःकरणं चक्षुर्द्वारा निर्गत्य घटाकारेण परिणमते ।

सेयं वृत्तिरिति तत्प्रक्रियात्वात् । यदुक्तं विषयस्य सर्वस्य मिथ्यात्वेन तज्ज्ञानस्यापि मिथ्यात्वमिति तत्र दोषान्तराण्याह **मिथ्येत्यादिना** । रजतं मिथ्या तज्ज्ञानरूपः साक्षी सत्यः । तवेत्यनेन प्रातिभासिकरजतादिज्ञानस्य साक्षिरूपत्वाङ्गीकारं तन्मते सूचयति ॥ तथा च त्वन्नियमभङ्ग इति भावः । ॥ ९४५ ॥ ९४६ ॥

**मिथ्याभूतार्थसम्बन्धान्मिथ्या ज्ञानं यदीष्यते ।**
**सत्येशज्ञानसम्बन्धादर्थास्सत्याः कथं न ते ॥ ९४७ ॥**

ज्ञानविषययोः समसत्ताकत्वाङ्गीकारे तवैवानिष्टमित्याह **सत्येति** । ॥ ९४७ ॥

**तत्पादसङ्गिसलिलादशुद्धस्य हि शुद्धता ॥ ९४८ ॥**

अशुद्धजलसङ्गेऽपि निर्लेपत्वाद्ब्रह्मणोऽशुद्ध्यभावेऽपि, शुद्धस्य तस्य पादसङ्गाद्गङ्गासलिलस्य शुद्धिरेव दृष्टेति त्वदुक्तवैपरीत्यमेव युक्तियुक्तमित्याह **तदिति** ॥ ९४८ ॥

**निर्दोषेश्वरचिद्योगात्सत्यता लोकसम्मता ।**
**अबाधितार्थसम्बन्धाद्बाध्यताऽऽशा वृथा तव ॥ ९४९ ॥**

किं च विमतं सर्वं पारमार्थिकं निर्दोषेणेश्वरेण दृश्यमानत्वात् यत्प्रमाविषयस्तत्सत्यं यथा संमतमिति प्रयोगः सूचितः । विपक्षे **ईश्वरस्य** दोषित्वापत्त्या हेतूच्छित्तिः ॥ ईश्वरेति स्वरूपकथनम् । दोषाभावे ज्ञानमात्रस्य प्रामाण्यं तद्विषयस्याबाध्यतेत्याह **अबाधितेति** ॥ ९४९ ॥

**यदि सोपाधिकत्वं ते मिश्रणं क्षीरनीरवत् ।**
**तदा सर्वज्ञयोगीन्द्रहृदये स्याद्विदारणम् ॥ ९५० ॥**

किञ्चौपाधिकत्वं नाम उपाधिना मिश्रणं वा संबन्धमात्रं वा । नाद्य इत्याह **यदीति** । **हृदये** अल्पप्रदेशे महतां भूभूधरादीनामवस्थानासंभवात् । **विदारणं** हृदयस्य ॥ ९५० ॥

**शब्दाच्च शशशृङ्गस्य ज्ञाने शृङ्गी भवान्भवेत् ।**
**अत्यन्तासच्च ते ज्ञानं स्यात्तेन ह्यतिसङ्कटम् ॥ ९५१ ॥**

**शृङ्गी भवेदिति** । अत्र शशशृङ्गेत्यत्र शशेत्यविवक्षितम् । गवादिशृङ्गज्ञानेनापि शृङ्गित्वापत्तिसाम्यात् । एवं शब्दादित्यपि । ज्ञानमात्रेऽपि दोषापत्तितादवस्थ्यात् । दोषान्तरमाह **अत्यन्तासदिति** । अत्र शब्दादिति शशेति च द्वयमपि विवक्षितम् । शब्दाच्चेति लिङ्गाभाससमुच्चयः । इदं चासतोरपि मिश्रणमुपेत्योक्तम् । अन्यथा शशशृङ्गस्यापि सत्त्वं स्यादिति चशब्दसूचितं दोषान्तरं बोध्यम् ॥ ९५१ ॥

**ज्ञानेनान्तस्स्थितेनैव बहिस्स्थजगतो यदि ।**
**सम्बन्धः कश्चिदेव स्यात्तदैक्ये किं नु बाधकम् ।**
**सौरालोको जगद्व्यापी मण्डलाभिन्न एव हि ॥ ९५२ ॥**

ज्ञानस्य विषयेणोपाधिना संबन्धमात्रमिति द्वितीयपक्षस्तु संमत एव । सर्वविषयकज्ञानस्य ब्रह्मणैक्ये बाधकाभावादित्याह **ज्ञानेनेति** । **अन्तःस्थितेन** मनःपरिणामेन । ऐक्ये धीर्भीरित्येतत्सर्वं मन एवेति श्रुतेः । वृत्तिर्मनःपरिणामः ब्रह्मज्ञानं तु न तथेत्यस्वरसाद्दृष्टान्तान्तरमाह **सौरालोक इति** । अत्र मण्डलस्थानीयं ब्रह्म । आलोकस्थानीयं तज्ज्ञानम् । व्याप्तित्वं संबन्धः । हीत्यनेन 'गुणाद्वाऽऽलोकवदि'ति सौत्रप्रसिद्धिं सूचयति । तथा हि तद्भाष्ये 'चिद्गुणस्य स्वरूपत्वात्तद्व्याप्तिश्चेति युज्यत' इति ॥ ९५२ ॥

**किञ्च नानापदार्थानां भ्रमोऽपि ब्रह्मचित्तव ।**
**मिथ्यार्थज्ञानरूपं ते ब्रह्म किं नाभवत्तदा ॥ ९५३ ॥**

किं चायं दोषः, जगद्भ्रमो ब्रह्मचिदेवेति वादिनं त्वामेव स्पृशतीत्याह **किं चेति** । **किं नाभवत्** त्वदङ्गीकारेणैव परव्युत्पादनप्रयासमनपेक्ष्य । तथा च यन्मिथ्यार्थसंबन्धि तन्मिथ्येति त्वन्न्यायेन तव ब्रह्मणो मिथ्यात्वं दुष्परिहरमिति भावः ॥ ९५३ ॥

**सत्यार्थज्ञानरूपोऽसौ कथं मिथ्या मम प्रभुः ॥ ९५४ ॥**

त्वन्न्यायानुसारेणापि मम नैव दोष इत्याह **सत्येति** ॥ ९५४ ॥

**मिथ्यार्थज्ञानरूपत्वात्त्वद्ब्रह्मैवाभवन्मृषा ।**
**अतस्त्वद्विषचूर्णेन तवैवाभूद्धि सङ्कटम् ॥ ९५५ ॥**

**त्वद्ब्रह्मैवेति** । अस्मद्ब्रह्मद्रोहाचरणदोषेणेत्यर्थः । हि इत्यनेन 'एवमेव खलु महदभिचारातिक्रमः कार्त्स्न्येनात्मने फलती'ति भागवतोक्तिप्रसिद्धिः सूचिता ॥ ९५५ ॥

**अतो भगवतो धर्माः सर्वे सर्वेश्वरात्मकाः ।**
**तच्छक्त्या धर्मधर्मित्वमेकताऽनेकतादि च ॥ ९५६ ॥**

प्रकृतोपयोगमाह **अत इति** । चेत्यनेनान्यतरापरिशेषादिभेदकार्यव्यवहारसमुच्चयः ॥ ९५६ ॥

**तस्माद्गुणानृतत्वाशानारीगर्भस्रवोऽप्यभूत् ।**
**नेहनानेतिवाक्येन भिन्नस्यैव निषेधनात् ॥ ९५७ ॥**

**एवेति** । अभिन्नत्वपक्षे प्रसक्तदोषाणां विशेषशक्त्या परिहृतत्वादिति भावः ॥ ९५७ ॥

**अतोऽस्मदुक्तसद्युक्तिशृङ्खलाभिः पदे पदे ।**
**बद्धाया ब्रह्मसुगुणसर्वस्वद्रोहदोषतः ॥ ९५८ ॥**
**कारागृहनिविष्टाया निर्गुणोक्तेर्न मोचकः ।**
**विना त्रिगुणशून्यत्वरूपार्थस्य प्रदानतः ।**
**नापरः कोऽप्युपायस्स्यादिति सर्वस्य सम्मतम् ॥ ९५९ ॥**

उक्तं प्रमेयं साहित्यरसेन मधुरयति **अत इति** । **सद्युक्तीति** सर्व-धर्मोपपत्तेश्चेत्यादिसौत्रयुक्तीत्यर्थः । अर्थान्तरेऽवकाशं प्रतिबध्नन्तीभिरत एव शृङ्खलाभिरिव । **द्रोहेति** ज्ञातीनां सगुणश्रुतीनां सखीनां स्मृतीनां च हत्या प्रयत्नरूपेत्यर्थः । **कारागृहनिविष्टायाः** गुणसर्वस्वनिषेधाय भावधर्मनिषेधाय वा चलितुमक्षमायाः । **मोचकः** नैरर्थक्यलक्षणाप्रामाण्यात् परिहारसमर्थः । उपाय इत्यनेनान्वयः । **अपरः** निषेधकत्वेन प्राबल्यादिः ॥९५८॥९५९॥

**अभिन्नगुणसत्यत्वध्रौव्याद्ब्रह्मसुखादिवत् ॥ ९६० ॥**

तत्र युक्तिमाह **अभिन्नेति** । सार्वज्ञादयः गुणाः सत्याः ब्रह्माभिन्नत्वात् ब्रह्मसुखादिवदिति ॥ ९६० ॥

**अभेदेऽप्यन्यशेषो न यथा तव तथा मम ।**
**अन्यथा तार्किको जीयान्मोक्षस्स्यादप्रयोजकः ॥ ९६१ ॥**

विशेषस्य लक्षणं अग्रे (१००२ श्लो०) वक्ष्यति । स च ऐक्यस्य सुखादेश्च ब्रह्मस्वरूपत्वं वदता त्वया भेदव्यवहारनिर्वाहायावश्यमङ्गीकार्य इति न मां प्रत्येव पर्यनुयोग इत्याह **अभेदेऽपीति** । **अन्यशेषः** अन्यतरपरिशेषः यथा सुखमेवास्ति न ब्रह्म इति वा ब्रह्मैवास्ति न सुखमिति वैवंप्रकारो बोध्यः । माऽस्तु सुखं इत्यत्राह **अन्यथेति** । तेनापि सुखस्यानङ्गीकारात् । दोषान्तरं चाह **मोक्ष इति** । सुखाभावात् । केवलदुःखनिवृत्तिस्तु पुरुषार्थत्वाप्रयोजिका ॥ ९६१ ॥

**यथा सुखाभाववादाद्भिन्नस्त्वं प्रतिवाद्यभूः ।**
**तथा निर्गुणतावादाद्गुणवादी भवाम्यहम् ॥ ९६२ ॥**

ननु गुणा एव न सन्तीति मद्वादः । भिन्ना गुणा न सन्तीति भवद्वादः । गुणाभावस्तूभयेषां समः । अतः कथं भवतां मत्प्रतिवादित्वमित्याक्षेपं दृष्टान्तोक्त्या निराह **यथेति** । सुखमेव ब्रह्मणि नास्तीति तार्किकः । भिन्नं सुखं नास्तीति त्वं मायी । सुखाभावस्तूभयेषां समः । तथाऽपि यथा त्वं तस्य प्रतिवादी तथा अहमपि तवेत्यवेहीत्याह **तथेति । भवामि** भिन्नः प्रतिवादीत्यनुकर्षः ॥ ९६२ ॥

**गुणता गुणिता च स्यात्सुखता सुखिता यथा ।**
**आनन्दं ब्रह्मणो विद्वानित्यप्याह श्रुतिस्स्फुटम् ॥ ९६३ ॥**

नन्वस्य गुणः इति सम्बन्धितयाऽवभासः ब्राह्मणस्य कंबलमितिवद्भेद-सापेक्षो दृष्टः तत्कथमभेदे ब्रह्मणो गुण इति गुणित्वव्यवहार इत्यतः तव ब्रह्मणः सुखरूपस्यापि सुखित्वव्यवहारवदेवेत्याह **गुणतेति** । सुखित्वव्यवहारो नास्त्येवेति चेन्न श्रुतिसिद्धत्वान्नापलापो युक्त इत्याह **आनन्दमिति** । अपि-शब्देन आनन्दं ब्रह्मेति श्रुतिसमुच्चयः ॥ ९६३ ॥

**यद्यमुष्योपचारत्वं जितं तार्किकबालकैः ।**
**दुःखाभावपरत्वं हि श्रुतीनां वक्त्यसौ खलः ॥ ९६४ ॥**

ब्रह्मण इति व्यवहार औपचारिकश्चेदानन्दमित्यभेदव्यवहारोऽपि तथाऽस्तु । तार्किकेण तथैवाङ्गीकारादित्याह **दुःखाभावेति** । **खलः** निर्निमित्तं उपचारकल्पनात्परतत्वद्वेषी ॥ ९६४ ॥

**अतो गुण्यात्मका एते गुणा ग्राह्या यथाश्रुतम् ।**
**पर्यायशब्दावाच्यत्वं तवापि च ममापि च ॥ ९६५ ॥**

**अतः** गुणित्वे गुणत्वे च प्रमाणसद्भावात्, उपचारकल्पनायाश्च निर्मूलत्वात् । अन्येऽप्येवं भेदव्यवहारा अपर्यायशब्दवाच्यत्व–क्वचित्प्रतीतत्वादयः उभाभ्यामेव समाधेया इत्याह **पर्यायेति** ॥ ९६५ ॥

**अतस्तन्मात्रतैतेषां न वाच्या शब्दकोविदैः ।**
**प्रभोश्शक्तिविशेषेण सर्वं तद्धि समञ्जसम् ॥ ९६६ ॥**

**अतः** भेदव्यवहाराणां सद्भावात् । **तन्मात्रता** निर्विशेषाभेदः । **विशेषेणेति** । 'अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः' इति अनुव्याख्याने व्युत्पादितेन । **तद्** भेदव्यवहारादिकम् । निर्विशेषब्रह्मवादिनस्तु तवानुपपत्तिरेवेति भावः ॥ ९६६ ॥

**निर्गुणत्वश्रुतिस्तस्मान्नैवं सद्गुणबाधिका ।**
**अधर्मधर्मदुःखेर्ष्याद्वेषादीन्प्रतिषेधति ॥ ९६७ ॥**

उपसंहरति **तस्मादिति** । सगुणश्रुतीनां प्रबलत्वात् । तदुक्तं न्यायामृते ब्रह्मणो निर्गुणत्वभङ्गे 'उपक्रमादिन्यायेन श्रुतिलिङ्गनयात्तथा । विशेषसामान्यन्यायान्न्यायान्निरवकाशतः ॥ बाहुल्यन्यायतश्चोपजीव्यत्वन्यायतस्तथा । पशुच्छागनयाच्चैव सविशेषनयात्तथा । उपांशुयाजन्यायेन युक्तायुक्तनयात्तथा । आदृतत्वात्सूत्रकृता प्रबला सगुणश्रुतिरि'ति ॥ **अधर्मः** पापम् । **धर्मः** पुण्यम् । तत्कृतलेपाभावात् । आदिपदेन भगवतो भिन्ना हेयाः प्राकृतरूपादयो ग्राह्याः ॥ ९६७ ॥

**यस्य यस्मिन्मनोद्वेषस्तद्गुणस्तेन नेक्ष्यते ।**
**न चेद्ब्रह्मानन्तगुणं कथं निर्गुणमब्रवीत् ॥ ९६८ ॥**

परतत्वद्वेष एव मूलं निर्गुणवादस्येत्याह **यस्येति** । तदुक्तं न्यायामृते तत्रैवोपसंहारे । 'ब्रूतेऽसतोऽपि मोहादीन् दोषान् विष्णोर्गुणान्सतः । निह्नुते परमे तत्वे द्वेषादेवासुरो जनः' इति ॥ ९६८ ॥

**यत्नः कृत्स्नोऽपि विज्ञानशक्त्याद्यर्थं हि योगिनाम् ।**
**सार्वज्ञशौर्यसौन्दर्यपूर्वैश्वर्याणि कस्त्यजेत् ॥ ९६९ ॥**

**गुणोऽणुरपि सम्पोष्यो दोषो दूष्यो बुभूषुभिः ।**
**गुणांस्त्यजेत्कथं दोषान्भजेद्वा तत्परः प्रभुः ॥ ९७० ॥**

प्रेक्षावत्त्वात्समर्थत्वाच्च भगवतो गुणपूर्णत्वं दोषराहित्यं च सिध्यत इत्याह **यत्न इति** । अत्र न्यायामृतोक्ते द्वे युक्ती अनुसन्धेये । ईश्वरः सदाऽवाप्तसमस्तकल्याणगुणः सदा तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् । यो यत्प्रेप्सुत्वे सति यत्र शक्तः स तद्वान् यथा चैत्रः । ईश्वरः सदा त्यक्तसमस्तदोषः सदा तज्जिहासुत्वे सति तत्त्यागे शक्तत्वात् । यो यज्जिहासुत्वे सति यत्त्यागे शक्तः स त्यक्ततद्दोषः यथा चैत्रः । तत्प्रेप्साऽऽदिकं च प्रेक्षावत्त्वादिनेति । **प्रभुः** प्रेक्षावान् समर्थश्च । **तत्परः** गुणदोषनियामकः ॥ ९७० ॥

**सर्वं हरतु सर्वस्वं विद्यां को विदुषो हरेत् ।**
**किं गुणांस्त्याजयन्विष्णोर्निर्गुणत्वं गुणं त्यजेत् ॥ ९७१ ॥**

विद्या हि विद्वच्छब्दप्रवृत्तिनिमित्तम् । न हि प्रवृत्तिनिमित्ताभावे तच्छब्दप्रवृत्तिः । तथा निर्गुणत्वगुणो निर्गुणशब्दप्रवृत्तिनिमित्तम् । एवं

च निर्गुणे विष्णौ निर्गुणत्वगुणस्य त्याजनमशक्यमित्याह **सर्वमिति** । न केवलमेतावत् वित्तापहरणेन विरक्तस्य विद्यावृद्धिरेव यथा तथा तत्तद्गुणत्यागेन निर्गुणत्ववृद्धिरेव ॥ ९७१ ॥

**ज्योतिष्ट्वेन हि चन्द्रस्य स्वरूपज्ञानवान्पुनः ।**
**चन्द्रत्वेनैव तं ज्ञातुं कश्चन्द्र इति पृच्छति ॥ ९७२ ॥**

इदानीं गुणविरोधित्वादखण्डार्थवादं खण्डयति । तत्र तावत् पदार्थपरं सत्यज्ञानादिवाक्यं अखण्डार्थनिष्ठं स्वरूपमात्रप्रश्नोत्तरत्वात् लक्षणवाक्यत्वाद्वा प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत् इति परोपन्यस्तानुमानं 'स्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्नः' इति तत्वोद्योतवाक्यमनुरुध्य असिद्धिदोषेण दूषयति **ज्योतिष्ट्वेनेति** । अस्मिञ्ज्योतिर्मण्डले कश्चन्द्र इति प्रश्नो न स्वरूपमात्रविषयकः । ज्योतिष्ट्वेन चन्द्रज्ञानस्य प्रागेव विद्यमानत्वादित्याह **ज्योतिष्ट्वेनेति** । अन्यथा ज्योतिर्मण्डल इति चन्द्र इति चानुवादायोगात् । न ह्यविदितं वस्त्वनुवदितुं शक्यते । यदि तर्हि प्रश्नः न स्वरूपमात्रविषयकः किंविषयः स इत्यत आह **चन्द्रत्वेनेति** । नक्षत्रादिव्यावृत्तविशेषणविशिष्टत्वेनेत्यर्थः ॥ ९७२ ॥

**अतः कश्चन्द्र इत्येष प्रश्नः प्रश्नविदां मते ।**
**किंलक्षणक इत्येव स्वार्थमर्थातुरो भजेत् ॥ ९७३ ॥**

अतो लक्षणप्रश्न एवायमित्याह **किंलक्षणक इति** ॥ ९७३ ॥

**चन्द्रत्ववान्क इत्येव वाक्यस्यार्थो यतः स्फुटः ।**
**स्वरूपमात्रप्रश्नत्वं स्वरूपासिद्धमेव ते ॥ ९७४ ॥**

प्रश्नवाक्येनैवैतावदर्थस्य लाभप्रकारं दर्शयति **चन्द्रत्वेति** । चन्द्रवृत्तिलक्षणेत्यर्थः । तथा चासिद्धिरित्याह **स्वरूपेति** ॥ ९७४ ॥

**एवं लक्षणवाक्यं च लक्षणं वक्ति नापरम् ।**
**अपृष्टोत्तरमेव स्याद्रूपमात्रनिरूपणे ॥ ९७५ ॥**
**अतो लक्षणवाक्यत्वं विरुद्धो हेतुरेव ते ॥ ९७६ ॥**

द्वितीयो हेतुर्विरुद्ध इत्याह **एवमिति । लक्षणवाक्यं** परिहारवाक्यम् । **अपरं** अखंडार्थम् । **अपृष्टोत्तरं** अपृष्टस्य उत्तरम् । प्रश्नोत्तरयोरसाङ्गत्यमिति यावत् ॥ ९७५ ॥ ९७६ ॥

**सत्यज्ञानादिवाक्यं तद्विशिष्टब्रह्मतत्परम् ।**
**लक्षणप्रश्नवाक्यत्वाच्चन्द्रलक्षणवाक्यवत् ॥ ९७७ ॥**

प्रत्यनुमानमाह **सत्येति** ॥ ९७७ ॥

**स्वरूपमात्रज्ञानस्य पदेनैकेन सम्भवात् ।**
**व्यर्थं पदान्तरं च स्याज्ज्ञातस्य ज्ञापनेन किम् ॥ ९७८ ॥**

प्रतिज्ञादोषमाह **व्यर्थमिति** ॥ ९७८ ॥

**यदि सत्यादिपदतो लक्ष्ये ब्रह्मणि केवलम् ।**
**व्यावृत्तिस्स्यादसत्यादेस्तेन सार्थ(क)क्यमिष्यते ॥ ९७९ ॥**

शङ्कते **यदिति । केवलं असत्यादेर्व्यावृत्तिः** अतः सार्थक्यम् । सत्यत्वादिधर्माणां ब्रह्मण्यनर्पणेन अखंडार्थत्वाहानिश्च ॥ ९७९ ॥

**तर्हि गङ्गापदाल्लक्ष्ये तीरेऽपि न्यायसाम्यतः ।**
**व्यावृत्तिस्स्यादगङ्गायास्तीरे स्यान्मज्जनं सदा ॥ ९८० ॥**

**अन्यव्यावृत्तिरपि हि तदा स्याद्यदि तत्पदम् ।**
**स्वार्थं समर्पयेत्तर्हि साऽप्यर्थाल्लभ्यते परम् ॥ ९८१ ॥**

दूषयति **तर्हीति** । 'सत्यत्वादिधर्माप्रतिपादनेऽपीति यावत् । असत्यत्वादिव्यावृत्तिः पदानां प्रयोजनमिति वक्तुं न शक्यते । न हि तीरे नदीत्वमनभिदधतो नदीपदस्यानदीव्यावृत्तिः प्रयोजनं संभवति । विरोध्याकार-समर्पणेन हि विरोध्याकारान्तरं व्यावर्तनीयम्' इति सुधोक्तिं हृदि कृत्वाऽऽह **गंगेति** । **अन्येति** च ॥ ९८० ॥ ९८१ ॥

**साक्षादन्यापोह एव न ह्यर्थो भवतो मते ।**
**अतस्सत्यत्वपूर्वार्थं यदि ब्रह्मणि नार्पयेत् ।**
**कथं व्यावर्तयेद्ब्रह्म विपक्षे तूक्तमेव हि ॥ ९८२ ॥**

**भवतः** इति । सोऽर्थो बौद्धमते एवेति भावः । 'अन्यापोह एवेति बौद्धाः' इति पद्धत्युक्तेः । **विपक्षे** विरोध्याकारान्तरव्यावर्तकत्वाङ्गीकारे । **बाधकं** तीरे मज्जनं स्यादित्येवंरूपम् ॥ ९८२ ॥

**किं च मुख्यार्थबोधे हि लक्षणा तेन सत्यता ।**
**ज्ञानताऽनन्तता चैव भवेद्ब्रह्मणि बोधिता ॥ ९८३ ॥**

**मुख्यार्थबोधे** लाक्षणिकेनापि गंगापदेन प्रवाहरूपमुख्यार्थबोधे । **हि** एव । **लक्षणा** तत्रानुपपत्तिप्रतिसंधानेन पश्चात्तीरे लक्षणा । दृष्टेति शेषः । **ब्रह्मणि** विष्णौ । निर्गुणब्रह्मणोऽप्याप्यसिद्धेः । न च श्रौतेऽर्थेऽनुपपत्तिरस्ति येन लक्षणाश्रयणमिति भावः ॥ ९८३ ॥

**सत्यत्वरहितं ब्रह्म मिथ्यैव स्याद्घटादिवत् ।**
**सद्रूपमपि तन्न स्यात्तद्वत्तेनैव हेतुना ॥ ९८४ ॥**

निर्धर्मकाभिमतेऽपि ब्रह्मणि सत्यत्वानङ्गीकारे तस्यासत्त्वमेव प्राप्नोती-त्याह **सत्यत्वेति** । विमतं निर्धर्मकं ब्रह्म, अत्यन्तासत्, सत्यत्वरहितत्वात्

शशविषाणवत् इति प्रयोगो ध्येयः । न च वाच्यं ब्रह्म सत्यत्वाभावेऽपि सद्रूपमिति । तेनैव हेतुना सद्रूपत्वाभावस्यापि साधनादित्याह **सद्रूपमपीति** । यथोक्तं न्यायामृते मिथ्यात्वनिरुक्तिभङ्गे 'नृशृंगादावपि सद्रूपाभावादन्यस्यासत्त्वस्याभावेनात्यन्तासत्त्वापाताच्चे'ति ॥ ९८४ ॥

**न चेच्छशविषाणं च सद्रूपं ब्रह्मवद्भवेत् ।**
**केवलान्वयिधर्मत्वात्सत्त्वे सत्त्वं च वर्तते ॥ ९८५ ॥**

ननु सत्त्वे व्यभिचारः । आत्माश्रयप्रसङ्गेन तत्र सत्त्वाभावेऽपि तस्य सद्रूपत्वादिति चेन्न । तत्रापि सत्त्वाङ्गीकारेण हेतोरेवाभावात् । प्रामाणिकत्वान्नात्माश्रयो दोष इत्याह **केवलेति** । यथोक्तं तत्रैव भङ्गे न्यायामृते 'मन्मते अबाध्यत्वरूपस्य सत्त्वस्याभिधेयत्वादिवत्स्वाश्रितत्वेन ब्रह्मणि सत्त्वाभावे सद्रूपत्वासिद्धेश्चे'ति ॥ ९८५ ॥

**अतस्सत्यत्वरहितं मिथ्यैव स्यान्न संशयः ।**
**शिरसो मुंडने तस्माच्छिखामुंडनमप्यभूत् ॥ ९८६ ॥**

**शिरसः** सत्त्वस्य । **शिखायाः** सद्रूपत्वस्य ॥ ९८६ ॥

**यदि सत्यपदेनापि ब्रह्मलक्ष्यं भवेत्तव ।**
**तर्हि तत्पदवाच्यं मे जगत्सत्यं भविष्यति ॥ ९८७ ॥**

ब्रह्मणो लक्ष्यत्वपक्षे तस्यासत्त्वापत्तिरूपदोष उक्तः । न केवलं तावदेव । किन्तु तेनैव मम जगत्सत्यत्वसिद्धिरपीत्याह **यदीति** । लक्षणार्थमपि वाच्यार्थस्तावदावश्यकः । स च परिशेषात्प्रपञ्च एव भवेत् । तथा च श्रौतत्वेन प्रपञ्चस्य सत्यत्वसिद्धिरिति भावः ॥ ९८७ ॥

**गंगापदेन या वाच्या सैव गंगा यतो नृणाम् ।**
**अतस्त्वल्लक्षणा सर्वजगतो रक्षणाय मे ॥ ९८८ ॥**

यद्यत्पदवाच्यं तत्तत्पदप्रवृत्तिनिमित्तधर्मवत् इति सामान्ये दृष्टान्तमाह **गङ्गेति** ॥ अतस्त्वत्प्रक्रिया त्वत्प्रतिकूला मदनुकूला चेति देवानां प्रियोऽसीति भावः ॥ ९८८ ॥

**ब्रह्मैक्यवाक्यमपि ते स्वरूपपरमेव हि ।**
**एवं चेद्गतमद्वैतममानत्वान्नृशृङ्गवत् ।**
**भेदश्च श्रुतिमुख्यार्थस्सुस्थिरोऽभूदिति स्थितम् ॥ ९८९ ॥**

ऐक्यवाक्यानां तत्वमस्यादीनां वाक्यार्थपरवाक्यत्वेन पराभिमतानां तेन स्वरूपमात्रपरत्वाङ्गीकारोऽप्येवमेव तत्प्रतिकूलो मदनुकूलश्चेत्याह **ब्रह्मैक्येति** । एवशब्देनाद्वैतबोधकत्वं व्यवच्छिनत्ति । अन्यथाऽखण्डार्थत्वहानेः । **गतं** असदिति सिद्धम् । **सुस्थिरः** साधकश्रुतिसद्भावात्, त्वद्रीत्यैवाद्वैतबोधकप्रमाणाभावेन बाधकाभावाच्चेति भावः ॥ ९८९ ॥

**दुर्जनस्सज्जनस्यार्थमुज्जिहीर्षेच्छनैश्शनैः ।**
**किं नोचुर्वेदवाच्यस्य स्वपदैरप्यवाच्यताम्**
**अन्धस्यान्ध्यं हि सन्दध्युरपदे पदसंपदः ॥ ९९० ॥**

**दुर्जनः** अत्र मायी **सज्जनस्य** ब्रह्मणः । **अर्थं** सर्ववैदिकशब्दपरममुख्यार्थत्वेन गुणपूर्णत्वरूपमर्थम् । **हरेत्** अपलपेत् । **शनैः शनैः** प्रथमं आनन्दमयादिशब्दवाच्यत्वदूषणेन अनन्तरं सत्यज्ञानादिस्वपदैरपि वाच्यत्वनिराकरणेनेत्येवम् । **अन्धस्य** मायिन इति भावः । **आन्ध्यं** शास्त्रार्थनिर्णयाक्षमताम् । **सन्दध्युः** स्थापयेयुः । **अपदे** समन्वयं प्रति-

ज्ञाय तदसाधके तद्विरुद्धे लक्षणयाऽखण्डार्थवादे **पदसम्पदः** सम्पद इत्यपहासः । श्रुतस्य सन्मार्गस्य त्यागः अश्रुते लक्षणापक्षे दुर्मार्गे पादक्षेपः इत्येवं अन्धन्तमोरूपमहागर्तमार्गेण गमनमिति भावः ॥ ९९० ॥

**अलक्षणं किलार्थोऽर्थो लक्षणोक्तेर्न लक्षणम् ।**
**स्वयं भूत्वा स्वमातैव वन्ध्येत्यतिखलो वदेत् ।**
**व्यावर्तकोक्तिर्व्यावृत्त्यै न व्यावर्तकवाक्किल ॥ ९९१ ॥**

**लक्षणोक्तेः** प्रकृष्टप्रकाशश्चन्द्र इति लक्षणवाक्यस्य । न लक्षणं अर्थः किं तु **अलक्षणं** स्वरूपमात्रं अखंडम् । किलापहासे । **व्यावर्तकोक्तिः** असाधारणधर्मरूपलक्षणोक्तिः । **व्यावृत्त्यै न** सजातीयव्यावृत्त्यै न भवति । अथापि **व्यावर्तकवाक्** तच्छब्देन व्यवह्रियते किल । व्याहतिमुपपादयति । **स्वयं भूत्वा** स्वयं तस्याः उत्पन्नः सुतो भूत्वा । **अतिखलो** जात्युत्तरवादी पदयोरेव परस्परविरोधादिति भावः ॥ ९९१ ॥

**नासां छित्वाऽपि दुष्टस्स्वामन्यस्याशकुनं चरेत् ।**
**सत्यादिपदमुख्यार्थस्सत्यादन्यत्किलानृतम् ॥ ९९२ ॥**

**नासां** जगतो मिथ्यात्वरूपां स्वप्रक्रियामेव । **छित्वाऽपि** त्यक्त्वाऽपि **अन्यस्य** सत्यादिपदमुख्यार्थं ब्रह्मेति ब्रुवाणस्य तत्ववादिनः । **अशकुनं** सत्यादिपदानामखण्डार्थताप्रतिपादनरूपम् । **चरेत्** कर्तुं अभिलषेत् । वस्तुतः अद्वैतस्य स्वाभिलषितस्यैवासिद्ध्या स्वस्यैव तदशकुनमिति भावः । **अन्यत्** विश्वम् । **अनृतं** तथात्वेन स्वाभिमतम् ॥ ९९२ ॥

**इच्छता वृद्धिमल्पस्य मूलं नष्टं भवेद्ध्रुवम् ।**
**सत्त्वादिमुण्डने किं न लक्ष्यत्वाद्यैस्सखण्डता ॥ ९९३ ॥**

**अल्पस्य** अविवेकिनः। **वृद्धिं** सत्यादिपदानां लक्षणां **इच्छता** आश्रयता **मूलं** अखण्डत्वम्। नष्टं भवेत्। **ध्रुवं** निश्चयः। तत्प्रकारं व्यनक्ति। **सत्त्वेति**। **मुण्डने** पदानां लक्षणामाश्रित्य निराकरणे। आद्य-पदेन मुख्यार्थसंबन्धादिग्रहः ॥ ९९३ ॥

**शान्तिकर्मणि वेतालोत्थानं स्यादबुधस्य हि।**
**अखण्डत्वाद्यभावे तु सैवायाद्धि सखण्डता ॥ ९९४ ॥**

वेतालाभिमतं परस्य सखण्डत्वं; तस्य **शान्तये** परिहारार्थं आरब्धे **कर्मणि** अखण्डार्थवादे **वेतालस्य** पुनस्तस्यैव सखण्डत्वस्य **उत्थानं** सातिशयस्य प्राप्तिः **अबुधस्य** मायिनः **हि** निश्चयः। **हि** यतः **अखण्डत्वस्य** आदिपदेन बोध्यत्वादेः **अभावे** तेनैव सधर्मकत्वापत्तिपरिहारार्थं अभावेऽङ्गी-क्रियमाणे सति **सा सखण्डता** यन्निषेधार्थं उपक्रान्तं सा सधर्मता **एव** सातिशयं द्वौ नञौ इति न्यायात्। **आयात्** बलात्समापतिता ॥ ९९४ ॥

**परायुधैः परं छिन्द्याच्छस्त्रशिक्षाविचक्षणः।**
**अवाच्यपदलक्ष्यत्वे मुख्यार्थावाच्यताक्षतेः ॥ ९९५ ॥**

**परायुधैः** परेण ब्रह्मणो वाच्यत्वखण्डनायोपात्तैः पदलक्ष्यत्वाभि-धानरूपैः **परं** अवाच्यत्वं **छिन्द्यात्** निराकुर्यात्। **शस्त्रशिक्षाविचक्षणः** वितण्डाकथानिपुणः। परन्यायैस्तु दूषणमिति प्रकाराभिज्ञः। तत्कथमत आह **अवाच्यपदेनापि लक्ष्यत्वे** केनापिपदेनावाच्यमिति स्वसिद्धान्त-परिरक्षणाय अङ्गीक्रियमाणे सति **मुख्यार्थस्य अवाच्यतायाः क्षतेः** परित्यागात्। अन्यथा तत्पदवाच्यत्वापत्तेरवाच्यत्वसिद्धान्तहानिः स्यादिति भयादिति भावः। तथा च वाच्यत्वनिराकरणार्थं प्रयुक्तेन अवाच्यपदेनैव तत्पदलक्षणाश्रयणनिमित्तेन पुनः वाच्यत्वस्यैव प्राप्तिरिति भावः ॥ ९९५ ॥

**विरुद्धयोस्सतोर्योगस्स्वमूलाघातिनोर्भवेत्  ॥ ९९६ ॥**

अभेदस्य भेदव्यवहाराणां विरोधपरिहारेण एकत्र घटनाय ईश्वरे विशेषशक्तिः समर्थिता । तत्राक्षेपः यदि ईश्वरस्य तादृशी शक्तिस्तर्हि स स्वस्मिन् तद्वदेव मुक्तत्वबद्धत्वे सुखदुःखे इत्यादिविरुद्धधर्मानपि कुतो न घटयेदिति । एतदाक्षेपपरिहारं उपक्रमते **विरुद्धयोरिति** । **सतोः** प्रमितयोः **योगः** एकत्र समावेशः । **स्वस्य** योगस्य । **मूलस्य** ऐश्वर्यस्य शक्तेः । **अविघातिनोः** हान्यनापादकयोरेव विरुद्धधर्मयोः भवेत् न तु पुनरैश्वर्यस्यैव हानिकरयोः अप्रमितयोः मुक्तबद्धत्वयोः सुखदुःखयोरित्याद्योः। तयोरीश्वरेऽप्रमितत्वात् । तदुक्तं सुधायां 'यावत्प्रमाणप्रमितं तावतः सुघटस्य दुर्घटस्य वा घटनायां पटुरिति ब्रूमः' इति ॥ ९९६ ॥

**मुनेश्शक्त्या किं न वने वैरिणस्सह शेरते ।**
**तच्छक्त्याऽपि न वैराग्यं कामेन सह तद्धृदि ।**
**बहिर्वा तपसो विघ्नकारिणस्सन्ति राक्षसाः ॥ ९९७ ॥**

**वैरिणः** गोशार्दूलादयः परस्परं विरोधिनोऽपि मुनेस्तपःशक्त्यविघटकाः । **कामेन** तच्छक्तिविघातकेन ॥ ९९७ ॥

**अणुत्वं च महत्वं च तथव घटयेच्छ्रुतम् ।**
**स्वैश्वर्यस्य विरोधीनि घटयेन्नात्मनि प्रभुः ॥ ९९८ ॥**

**अणुत्वमिति** अविरुद्धं श्रुतं प्रमितम् । **विरोधीनि** दुःखपारतन्त्र्यादीनि । प्रभुः इति उक्तार्थे हेतुः ॥ ९९८ ॥

**अणिमा महिमा चैव गरिमा लघिमा तथा ।**
**यदैश्वर्यमतश्शक्त्या घटयेदिदमात्मनि ॥ ९९९ ॥**

अविरुद्धानि दर्शयति त्रिभिः **अणिमेत्यादिभिः** । **यत्** यस्मात् **इदं** आपाततो विरुद्धं धर्मजातम् ॥ ९९९ ॥

**अनन्तसुगुणस्तोममनन्ताकारसौभगम् ।**
**तथाऽप्यनन्यतां तेषु सर्वेष्वैश्वर्यसिद्धितः ।**
**निजैश्वर्याभिवृद्ध्यर्थं घटयेच्छक्तितः प्रभुः ॥ १००० ॥**

अनन्तेति गुणेति आकारेति च भेदव्यवहारस्फोरणाय । **अनन्यतां** स्वेनाभेदम् । **ऐश्वर्यसिद्धितः** इति **ऐश्वर्याभिवृद्ध्यर्थं** इति च हेतुसाध्यनिरूपणम् । प्रत्येकं गुणानां स्वाभेदेनैश्वर्यसिद्धौ सत्यां, तादृशानन्तगुणरूपत्वेन महदैश्वर्यं सिद्ध्यतीति भावः । स्वरूपयोरपि प्रयोज्यप्रयोजकभावः विशेषेणैव ॥ १००० ॥

**बलज्ञानक्रियादीनां सिसृक्षासञ्जिहीर्षयोः ।**
**नित्यत्वे महिमोन्नत्या शक्तिव्यक्त्यात्मना स्थितिम् ।**
**स्वसामर्थ्यविशेषेण घटयेत्सर्वमीदृशम् ॥ १००१ ॥**

'अनित्यत्वात्क्रियाणां तु कथमेव स्वरूपता । इति चेत्सविशेषोऽपि क्रिया शक्त्यात्मना स्थिरः' इत्युक्तत्वाधिकरणानुव्याख्यानोक्तमाह **बलेति** । ॥ १००१ ॥

**भेदहीनेऽपि भेदस्य कार्यं यो घटयेच्छ्रुतम् ।**
**स सामर्थ्यविशेषो हि विशेष इति गीयते ॥ १००२ ॥**

विशेषं लक्षयति **भेदहीन इति** । तदुक्तमनुव्याख्याने जन्माधिकरणे 'भेदहीने त्वपर्यायशब्दान्तरनियामकः । विशेषो नाम कथितः' इति । तत्रैव सुधायां 'भेदहीनेऽप्यनुपचरितभेदव्यवहारनिमित्तं विशेष इति । **श्रुतं** प्रमितम् ॥ १००२ ॥

**परप्रकाशको दीपो न किं स्वस्य प्रकाशकः ।**
**विशेषोऽन्यत्र निर्वाही स्वनिर्वाही कथं न सः ॥ १००३ ॥**

विशेषतद्वतोश्चैव 'स्वनिर्वाहकता भवेदि'त्यनुव्याख्यानोक्तं समर्थयते **परेति** । स्वपरप्रकाशकत्वेनैव दीपस्य प्रमितत्वादिति भावः । अतो नानवस्था । एवमेव धर्मिग्राहकमानेन विशेषः स्वनिर्वाहक एव सिद्ध इत्याह **विशेष इति** । तदुक्तं सुधायां 'विशेषविशेषिणोश्चाभेद एवाङ्गीकरणीयः । विशेषबलाच्च विशेषतद्वद्भावोऽप्युपपादनीयः इति शेषः । तथाऽपि विशेषपरम्परयाऽनवस्था स्यादित्यत आह **स्वनिर्वाहकतेति** । स एव विशेषो विशेषान्तरमन्तरेण विशेषतद्वद्भावं च घटयति' इति ॥ १००३ ॥

**बन्धं मोक्षं सुखं दुःखं भिन्नाभिन्नत्वमन्यतः ।**
**जन्मनित्यत्वमित्यादिमहापापफलं नृणाम् ।**
**अतिनैच्यकरं स्वस्य घटयेत्कथमात्मनि ॥ १००४ ॥**

महापापफलं अतिनैच्यकरं चेति घटनाऽभावे हेतुसूचके । महेति अतीति च स्वरूपकथनम् । न हेतुघटके ॥ १००४ ॥

**शक्तस्स्वदोषं प्रदहेद् गृह्णीयाच्चेत्त्वशक्तता ।**
**नृहरेर्नखरक्रौर्यं किं स्वोदरविदारणम् ॥ १००५ ॥**

अन्यथा शक्तेरेव हानिप्रसङ्ग इति प्रागुक्तं स्मारयति **शक्त इति** । तत्र दृष्टान्तो **नृहरेरिति** ॥ १००५ ॥

**अशन्ययोयोगहेतोरदृष्टौ न ह्ययो न तत् ।**
**किं मृषा घटकादृष्टेर्बहुश्रुत्युक्तसद्गुणः ॥ १००६ ॥**

प्रमितं कार्यमेवादृष्टमपि घटकं कमपि कल्पयति न पुनर्घटकादृष्टिमात्रेण प्रमितकार्यापलापो युक्तः इत्येतत्प्रसिद्धत्वादीश्वरशक्तिमेव गुणगुणिभावादि-भेदकार्यनिर्वाहिणीं दृष्टान्तीकृत्यान्यत्रापि सङ्गमयति **अशनीति** । अयो न तत् इति न अयो भवत्येव । तत्र 'अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते' इत्यनुव्याख्यानोक्तदिशा घटको विशेषो यथा सिद्धस्तथेति दृष्टान्तमाह **किमिति** । परमात्मनि विशेषश्च 'एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति' इति श्रौतार्थापत्त्या, 'स्वरूपेऽपि विशेषोऽस्ति स्वरूपत्ववदेव तु । भेदाभावेऽपि तेनैव व्यवहारश्च सर्वतः' इति परमोपनिषद्वाक्येन, 'विशेषोऽपि स्वरूपं स स्वनिर्वाहकताऽस्य च' इति ब्रह्मतर्कवाक्येन च तत्वनिर्णयोदाहृतेन च प्रसिद्ध इति तस्यैव दृष्टान्तीकरणमिति- मन्तव्यम् ॥ १००६ ॥

**अन्नं ददद्धि पुरुषो दर्वीं काश्चित्प्रकल्पयेत् ।**
**अभिन्नधर्मतां वेदो यथा तच्छक्तिकल्पकः ॥ १००७ ॥**

**अन्नं ददद्धि पुरुषः** परिवेषकः । **काश्चिद्दर्वीं** मुख्यस्य दर्वीरूपस्य परिवेषणोपकरणस्याभावे तत्स्थाने तत्प्रतिनिधिभूतं अन्यत्काष्ठादिकम् । **कल्पयेत्** । स्वीकृत्य तेन परिवेषणकार्यं निर्वाहयेत् । तत्रापि पूर्वोक्त-श्रौतानुपपत्तिप्रमाणसिद्धां भगवच्छक्तिमेव दृष्टान्तमाह **अभिन्नेति** ॥ **अभिन्नधर्मतां** वर्णयन्निति शेषः । नेहनानास्तीति श्रुतौ साक्षात्, एवं धर्मान्पृथक्पश्यन्निति श्रुतौ पृथक्त्वदर्शननिन्दाद्वारेणेति भावः । **कल्पकः** अन्यथाऽनुपपत्त्या ॥ १००७ ॥

**मूलाभेदेऽपि कृष्णाद्या नानन्ताः किं न सन्ति किम् ।**
**तथाऽनन्ताश्च सन्तश्च न भिन्ना मूलसद्गुणाः ॥ १००८ ॥**

**मूलाभेदेऽपि** मूलेन रूपेणावताररूपाणामभेदेऽपि 'पूर्णमदः पूर्णमिदं' इति श्रुतिसिद्धत्वेऽपि । **कृष्णाद्याः** अवताराः । नञः पूर्वेणोत्तरेण चान्वयः । **किं न अनन्ताः** अनन्ता एव । **किं न सन्ति** सन्त्येव । इन्द्रो मायाभिः, पुरुरूप ईयते' 'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि चे'ति श्रुतेः । 'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः' इति स्मृतेश्च परमात्मन एकत्वं, रूपाणामानन्त्यं शक्तिबलेन व्यवहारनिर्वाहश्च प्रसिद्ध इति तामेव शक्तिं दृष्टान्तीकृत्य गुणगुणिभावव्यवहारनिर्वाहेऽपि तामेव प्रमाणयति **तथेति** । तदुक्तं सुमध्वविजये 'विशेषमात्रेणानन्त्यं गुणानां शोभते विभोः' इति ॥ १००८ ॥

**अन्यार्थशून्या वाक्चेत्स्यादयुक्तार्थाऽऽर्थिकार्थवाक् ।**
**यथेशाभिन्नगुणवागर्थाच्छक्तिविशेषवाक् ॥ १००९ ॥**

**वाक्** वेदवाक् **अयुक्तार्था** अयुक्तः आपाततः प्रतीयमानोऽर्थो यस्याः सा तादृशी **अन्यार्थशून्या** वृत्तिमहिम्ना अविरुद्धार्थान्तररहिता च स्याच्चेत् तदा सा **आर्थिकार्थवाक्** अनुपपद्यमानार्थस्य उपपादको य आर्थिकार्थस्तदाक्षेपिका **वाक्** भवतीति शेषः । तत्र दृष्टान्तो **यथेति** । ॥ १००९ ॥

**गुणत्वस्य गुणित्वस्य तदभेदस्य चेश्वरे ।**
**प्रामाणिकस्य घटना शक्त्यैव स्यात्सुखादिवत् ॥ १०१० ॥**

**गुणत्वस्य** 'आनन्दरूपं अजरं' 'ज्ञानज्ञानः सुखसुखः' इत्यादि-श्रुतेः । **गुणित्वस्य** 'आनन्दं ब्रह्मणो विद्वान्', 'बृहन्तो ह्यस्मिन्गुणा'

इत्यादिश्रुतेः । **अभेदस्य** 'गुणक्रियाऽऽदयो विष्णोः स्वरूपं नान्यदिष्यते' इति परमोपनिषदि अभेदस्य, 'नेहनानास्ति किञ्चन' इति भेदनिषेधस्य च श्रुतेः । **प्रामाणिकस्य** त्रितयस्य । **घटना** निर्वाहः **सुखादिवत्** सुखज्ञानयोः परेण ब्रह्मस्वरूपत्वेणाङ्गीकृतयोः संबन्धित्वादिनिर्वाहाय शक्तिरङ्गीकृता । तथैव सर्वधर्मधर्मिभावो निर्वाह्यः इति भावः ॥ १०१० ॥

**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ १०११ ॥**

**यथा पर्वतेषु दुर्गे** स्थाने शिखरेषु **वृष्टं उदकं विधावति** अधो विधावति **एवं** भगवतो **धर्मा**स्ततः परस्परं च **पृथक् पश्यन् पुरुषः तानन्वेव** तद्दर्शनमन्वेव **विधावति** अधो गच्छतीत्यर्थः ॥ १०११ ॥

**इति श्रुतिर्यतो धर्मबाहुल्यप्रतिपादिका ।**
**निषेधति पृथग्भावमात्रं सैव विशेषवाक् ॥१०१२ ॥**

**धर्मबाहुल्यप्रतिपादिका** धर्मानिति बहुवचनेनेति भावः । **पृथग्भावमात्रं निषेधति** न तु धर्मान् । यदि धर्मा एव न सन्ति तर्हि 'धर्मान्पश्यन्' इत्येव वक्तव्यं स्यात् । पृथगिति व्यर्थमेव । तेन सन्ति धर्माः किं तु न भिन्ना नापि भिन्नाभिन्ना इति श्रुत्यर्थः । **सैव** एषा श्रुतिरेव **विशेषवाक्** विशेषे अर्थात् प्रमाणभूता वाक् । यथाहुः— 'उक्त्वा धर्मान् पृथक्त्वस्य निषेधादेवमेव हि । विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः' इति ॥ १०१२ ॥

**आपातानुपपन्नार्था सोपपादकवाङ् न चेत् ।**
**अमानं स्यान्न तद्युक्तमतस्तं च बलात्स्पृशेत् ॥ १०१३ ॥**

**आपातानुपपन्नार्था** भेदसापेक्षं संबन्धं बहुत्वं उक्त्वा भेददर्शन-निन्दया भेदं निराकुर्वन्ती । **सा** श्रुतिः **उपपादकवाङ् न चेत्** उपपादकं विशेषं नाक्षिपेत् चेत् **अमानं स्यात्** भेदस्य तदभावस्य च निरूपणेन व्याहतत्वापत्त्येति भावः । **तत्** अपौरुषेयवाक्याप्रामाण्यम् । **न युक्तं** दोषाभावात् । अतः स्वप्रामाण्यनिर्वाहाय ततश्चोक्तत्रितयस्यापि प्रामाणिकत्वघटनाय । **तं** विशेषम् । **बलात्** व्याप्तिबलात् । **स्पृशेत्** अर्थादाक्षिपेत् ॥ १०१३ ॥

**त्रिक्षणस्थायियागाख्यकर्मणस्स्वर्गहेतुताम् ।**
**कालक्षेपेऽपि शंसन्ती यथार्था सैव पुण्यवाक् ॥ १०१४ ॥**

**त्रिक्षणावस्थायीति** । स्वर्गरूपकार्याव्यवहितप्राक्कालेऽविद्यमानेत्यर्थः । **यागाख्यकर्मणः** 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति श्रुत्युक्तस्य कर्मणः **स्वर्गहेतुतां** काम्यत्वे सत्यनिन्दितत्वे सति अधिकारिविशेषणत्वात्स्वर्गस्य तं प्रति यागस्य हेतुताम् । **कालक्षेपेऽपि** यागाद्यवहितकालेऽपि **शंसन्ती** प्रतिपादयन्ती । **सैव पुण्यवाक्** ज्योतिष्टोम इत्यादिका श्रुतिः यथा अपूर्वं आक्षिपन्ती सती यथार्था प्रमाणभूता तद्वदत्रापि 'एवंधर्मानि'ति श्रुतिः विशेषशक्तिं आक्षिपन्ती प्रमाणमिति भावः । तत्रापि यत्कालान्तरभावि न तत्कारणं इत्यनुपपत्त्याऽपूर्वं कल्प्यमेव न तु शब्दबोध्यम् । 'लिङाद्यर्थस्तु इष्टसाधनत्वमेवे'ति भगवत्पादोक्तेः ॥ १०१४ ॥

**न सहेत गुणश्लोकान्दोषश्लोकान्खलोऽर्जयेत् ।**
**त्यक्तानेकगुणोक्तीनां किं न वैगुण्यवाग्भरः ॥ १०१५ ॥**

गुणासहिष्णोः दोषैकदृशः खलस्य स्वभावं मायावादे सङ्गमयति **नेति** । **त्यक्ताः** अतत्वावेदकत्वोक्त्या तिरस्कृताः **अनेकाः** सुबहवः **गुणोक्तयः** निरवकाशत्वादिना प्रबलाः सगुणश्रुतयो यैस्तेषां मायिनां

**वैगुण्यवाचि** एकस्मिन् सावकाशत्वादिनाऽतिदुर्बले निर्गुण इति श्रुतौ **भरः** दुराग्रहः । तदुक्तमभियुक्तैः 'तस्मिन्दुर्मनसि तदेव शोभनं स्यादि'ति । ॥ १०१५ ॥

**निष्फलं जन्मिनां जन्म परलोकफलं न चेत् ।**
**यथा त्रिगुणशून्यत्वाद्गुणपूर्णोऽपि निर्गुणः ॥ १०१६ ॥**

फलं द्विविधं ऐहिकं आमुष्मिकं चेति । तयोरन्यतरस्य परलोकफलस्याभावेऽपि तस्य **जन्मिनः** प्राणिनः जन्म निष्फलमिति लौकिका व्यवहरन्ति । तथा गुणा द्विविधाः आनन्दादयः सत्वादयश्चेति । तेषु दोषात्मकानामत एव गुणपूर्णत्वविरोधिनां सत्वादीनामभावेन भगवान् शुभगुणपूर्णोऽपि निर्गुण इति व्यवह्रियतां शास्त्रैः । तत्र फलसामान्यस्य यथा न निषेधस्तथाऽत्रापि गुणसामान्यस्य निषेधो माऽस्त्विति अत्रैव तात्पर्यम् । न त्वैहिकफलस्य शुभत्वोक्तौ परलोकफलस्य दोषत्वोक्तौ वेत्यवधेयम् । ॥ १०१६ ॥

**ज्ञानादिगुणशून्यत्वं चेतनस्य न हि क्वचित् ।**
**अतो निर्गुणवाक्यार्थो न सर्वगुणशून्यता ॥ १०१७ ॥**

चेतनशब्दार्थपर्यालोचनयैव निर्गुणशब्दः न गुणसामान्यनिषेधपर इति सिध्यतीत्याह **ज्ञानादीति** । आदिपदेनेच्छादिग्रहः । **न हीति** । तदुक्तमनुव्याख्याने 'कुत इच्छाऽचेतनस्य सेच्छं चेत्किमचेतनमि'ति । ज्ञानेच्छाप्रयत्नादिमत्त्वस्यैव चेतनत्वरूपत्वेन, चेतनं च ज्ञानेच्छाशून्यं चेति मे माता वन्ध्येतिवद्व्याहतमिति भावः । परमात्मा तु 'चेतनश्चेतनानामि'ति परमचेतनः । सर्वज्ञत्वसत्यसङ्कल्पत्वादिकं तत्स्वरूपान्तर्गतमेवेति न तन्निषेधः संभवतीत्याह **अत इति** । न हि प्रतियोगिविशेषसद्भावेऽपि सामान्यनिषेधः संभवतीति

भावः ॥ अतः सङ्कोचे आश्रयणीये प्रमाणानुसारेणास्मदुक्त एव सङ्कोचोऽवश्यमाश्रयणीय इति हृदयम् ॥ १०१७ ॥

**तस्माद्विष्णोर्गुणास्सर्वे नित्यास्सत्याश्च सर्वदा ।**
**अनन्ताश्श्रुतिसद्युक्तिसिद्धाश्चेत्यतिमङ्गलम् ॥ १०१८ ॥**

**तस्मात्** दुःसमयनिरासेन शब्दस्य, अपौरुषेयत्वेन शब्दविशेषस्य वेदस्य च प्रामाण्यस्य समर्थितत्वात्, प्रामाण्यस्य स्वतस्त्वेन आप्तोक्तत्वाभावेऽपि वेदप्रामाण्याप्रतिहतेः उपपादितत्वात्, कार्यतावादनिराकरणेन सिद्धेऽपि व्युत्पत्तेः साधितत्वात्, निर्गुणश्रुतेः सावकाशत्ववर्णनेन निरपवादत्वनिरवकाशत्वादिना बलीयसीभिः सगुणश्रुतिभिर्विष्णोरनन्तगुणपूर्णत्वसिद्धेः निरूपितत्वात्, अभेदेऽपि गुणगुणिभावादेर्विशेषशक्त्यैव निर्वाहप्रकारस्य वर्णितत्वात् इत्याद्यर्थो ध्येयः । सर्वदेत्यनेनोक्तस्यौपचारिकत्वव्यावृत्तिः । चो यस्मादित्यर्थे । यस्माच्छ्रुतितन्मीमांसाशास्त्रसिद्धास्तस्मादिति पूर्वेणान्वयः । **इति** एतत्प्रमेयं, एतदुपपादकं वेदापौरुषेयत्वादिकं प्रमेयजातं च । **अतिमङ्गलं** विष्णोः परमप्रीतिसाधनत्वेन परमपुरुषार्थहेतुः ॥ १०१८ ॥

**वादिराजाख्ययतिना साधिता युक्तिमल्लिका ।**
**गुणसौरभसर्वस्वं मुदे विष्णोर्न्यवेदयत् ॥ १०१९ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वादिराजपूज्यचरणविरचितायां युक्तिमल्लिकायां गुणसौरभं संपूर्णम् ॥ १ ॥**

'वादी मध्वो यस्य राजा' इति स्वयमेवान्यत्र प्रदर्शितरीत्या वादिराज इत्याख्या यौगिकं नाम यस्य तेन श्रीमध्वभटाग्रेसरेण **साधिता** संपादिता

युक्तयो ब्रह्ममीमांसातद्भाष्यादिव्युत्पादिता मल्लिका इव सौगन्ध्यस्राविणि मल्लिकाकुसुमानीव यस्यां कृतौ सा, यथोक्तं प्राक् 'विदुषोऽविदुषोऽपीष्टा कं जनं रञ्जयेन्न गीः । भ्रमरैरमरैश्चार्थ्यं कुसुमं कोऽसुमांस्त्यजेदि'ति पामराणां बुधानां विबुधानां च मनांसि रञ्जयन्ती । **गुणानां** भगवतः अनन्तानां कल्याणगुणानां सौरभं सौगन्ध्यं तत्प्रतिपादकप्रमाणवाक्योदाहरणात्मकस्याद्य-परिच्छेदस्य सर्वस्वं समस्तप्रमेयजातं **विष्णोर्मुदे** अधिकृतदेवताया हयग्रीवस्य प्रीत्यर्थं **न्यवेदयत्** समर्पयामास । यद्वा **युक्तिमल्लिका** एतद्ग्रन्थाभिमानिनी भारती । 'अभिमान्यभिमन्यमानयोः ऐक्यव्यपदेशो महतश्चतुर्मुखादित्यादौ प्रसिद्ध' इत्युक्तेः । **साधिता** मया प्रसन्नीकृता । साधनं च द्विविधं सिद्धं असिद्धं चेति । सिद्धं च साधनं भगवती भारती । सव्यापारी-करणीया । व्यापारश्च प्रसन्नतैव । **गुणसौरभं** षड्गुणैश्वर्यं च तत् सर्वं **स्वं** भगवत्स्वरूपभूतमेव । स्वं तत्संबन्धि च विशेषबलेन । तत्स्वरूपं तदीयमेव गुणजातं मयि कृपया सन्निहिता एतत्परिच्छेदे समुपवर्ण्य, सिन्धोर्जलं सिन्धावेवार्घ्यरूपेण यथा, तथा गुणसिन्धोर्गुणान् गुणसिन्धोर्विष्णोर्मुदे परम-प्रीत्यै । यथोक्तं 'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यादि'ति । **न्यवेदयत्** स्वप्राणनाथस्य मध्वस्य द्वारा समर्पितवती । यस्यैव वाण्याः प्राणनाथस्य मध्वस्य कृपया विष्णोः परमप्रीतिकरोऽयं मया व्यरचि स एव मातरिश्वा एतत्सुकृतिसमर्पणेऽधिकारभाग् नैवाहमिति हृदयम् । यथोक्तं 'तस्मिन्नपो मातरिश्वा दधाती'ति ॥ १०१९ ॥

यत्कारुण्यबलादेषा विवृती रचिता मया ।
श्रीशे समर्पयत्वेनां सदभिज्ञगुरूत्तमः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥

# शुद्धिपत्रिका

| पत्रसंख्या | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ३२ | १० | अखिलः | अखिलैः |
| ३९ | ६ | इति मतम् | मतम् |
| ५८ | १६ | अमानिनः | अमानस्य |
| १२१ | १७ | ज्ञानत्वे | ज्ञानत्वेन |
| १३० | १० | साक्षात्कारि | साक्षात्कार |
| १६१ | ११ | विग्रहः | छेदः |
| १९९ | ६ | यथेन्द्र | यथैन्द्र |

